॥ श्रीः ॥

महाकविचक्रवर्तिश्रीकालिदासप्रणीतं

# मालविकाग्निमित्रं

नाम

नाटकम् ।



संस्कृतचन्द्रिकाख्यसंस्कृतमासिकपत्रिकासहंकारिसम्पा-
दकेन राशिवडेकरोपाह्वश्रीअप्पाशास्त्रिविद्या-
वाचस्पतिना प्रणीतया बालबोधिन्याख्यया
व्याख्यया संवलितम् ।



श्रीकृष्णदासात्मज–गंगाविष्णुना
स्वकीये " लक्ष्मीवेंकटेश्वर " मुद्रणालये मुद्रितम् ।

शकाब्दाः १८२४, संवत् १९५९.

कल्याण–मुंबई.

# विज्ञप्तिः ।

इह खलु नानाविधसंसारक्लेशपरित्रस्तस्य चेतसो निर्वृतये सत्काव्यास्वादसदृशं नान्यदुपलभ्यते वस्तु । तत्र हि वाच्यमाने तिरोभवति विषादो मनसः, प्रादुर्भवत्यानन्दः, समधिगम्यते व्यावहारिकं प्रावीण्यम्, प्रतिभाति च निकामं बुद्धिः। निरन्तरं तत्संसेवमानश्च मनुजो न चिरादेव तिरस्करोति ब्रह्मानन्दम् ॥

तच्च काव्यं नाम रसात्मकं वाक्यं श्रव्यदृश्यभेदाद्द्विविधम् । तत्र च श्रवणमात्रेणानन्दजनकानि रघुवंशकुमारसम्भवप्रभृतीनि श्रव्यकाव्यानि । सपदि चक्षुःश्रवणयोः प्रीतिजनकानि नानारसभावभास्वराणि नटैरभिनेयार्थानि मालविकाग्निमित्रशाकुन्तलप्रमुखान्यष्टाविंशतिप्रकाराणि रूपकोपरूपकापरपर्यायाणि दृश्यकाव्यानि समधिकरमणीयानि श्रव्येभ्यः ॥

निसर्गत एव रमणीयं रूपकं नाम, तत्र च नाटकं, तत्र च सुकविग्रथितवस्तुकम्, तत्र च श्रीमता महाकविकुलालङ्कारेण श्रीकालिदासेन ग्रथितमित्यहो रमणीयतायाः काष्ठा ॥

नैकविधव्यवहारमूलकतया च रूपकाणां स्वत एव दुर्गमत्वेनावश्यं व्याख्यासापेक्षत्वम् । मालविकाग्निमित्रे च समीचीनाया एकस्या अपि व्याख्याया अभावाद्दुर्बोधतया रसपरिप्लुततया च तदास्वादमभिलष्यन्तो रसिका आमूलं कण्टकच्छन्नं केतकीप्रसूनमनुधावन्तो मधुकरा इव नितान्तं दुःखायन्त इति तस्य सरलव्याख्यासापेक्षत्वमवबुध्य यथामति प्राणैषं व्याख्यामिमां बालबोधिनीं नाम ॥

तत्र च पाठानां संशोधनायादर्शचतुष्टयं मयाऽलोकि । तथा हि ।

१ कलिकाताराजधान्यां श्रीतारानाथतर्कवाचस्पतिभट्टाचार्यैर्वङ्गदेशीयदेवनागराक्षरैर्मुद्रितं स्वप्रणीतया विषमपदबोधिन्या व्याख्यया समुल्लसितम् । इदं च प्रायेण शुद्धं किंतु प्राकृतस्य संस्कृतानुवादे क्वचित्संदेहमुत्पादयतीति नैतदाश्चर्यम् । प्राकृते हि चतुर्थीपञ्चमीषष्ठीसप्तमीनामेकवचनप्रत्ययानां स्त्रियामभिन्नप्रायता बीजम् ।

यथा ' ताए ' इत्यस्य तया तस्यै तस्यास्तस्यामिति च संभवत्यनुवादः । अत एव न दूषणीयस्तत्रभवान्सुगृहीतनामा तर्कवाचस्पतिः ॥

२ मोहमय्यां श्रीशङ्करपाण्डुरङ्गपण्डितैर्मुद्रापितं [1] नानाविधविलक्षणपाठान्तरसहितं तैरेव विरचितया इंग्रजीटिप्पण्या समुद्भासितं काटयवेमभूपविरचितया च विषमपदबोधिन्या व्याख्यया परिष्कृतम् । अत्र च यद्यपि बहुविधानि पाठान्तराणि तथापि तेषामतिमात्रशोभावहकत्वाभावाद्बहुसंवादित्वाभावाच्च नात्र संग्रहणम् ॥

३ मोहमय्यां श्रीनिर्णयसागरमुद्रालयाधिपतिना मुद्रापितं काटयवेमभूपविरचितयैव व्याख्ययोपेतम् । शुद्धमिदम् ॥

४ बेङ्गलूरुपट्टने सागरोपाह्वश्रीश्रीकण्ठशास्त्रिभिः संशोध्य, वाजपेयश्रीकृष्णशास्त्रिणा बेङ्गळूरुबुक्डिपोनाम्नि स्वीयमुद्रालय आन्ध्राक्षरैर्मुद्रितम् । सुव्यवस्थं नितान्तं शुद्धं च मूलमात्रम् ॥

एवमादर्शचतुष्टयमालोक्य तत्रत्यान् रसानुगुणान् पाठान् संगृह्य च मयैतन्नाटकं व्याख्यायि । प्रथमं चात्रत्यनायकादिनिरूपणं शब्दालङ्कारनिरूपणं छन्दोनिरूपणं प्रत्यङ्कगतकथांशसूचीपत्रं पद्यानामकारादिक्रमेण सूचीपत्रं च समयोजयम् ॥

एतन्मुद्रणादिभारश्च श्रेष्ठिप्रवरैर्लक्ष्मीवेङ्कटेशयन्त्रालयाधीशैः सानुग्रहं स्वीकृत इति तेषु चिरं कृतज्ञोऽस्मि ॥

अत्र च नाटकस्य दुर्बोधतया दोषाणां मनुजमात्रसाधारणत्वान्मम प्रयासस्याभिनवत्वाद्वा यद्यत्स्खलितं लक्षयेयुः सुधियस्तन्निवेदनेन मां कृतार्थीकुर्वन्त्विति ॥

| | | |
|---|---|---|
| ज्येष्ठवदि षष्ठ्याम् | } | गुणान्वेषिणां परिचारकस्य |
| शके १८१८ | | श्रीअप्पाशर्मणः । |

---

१ विरलेत्यपि नातिशयोक्तिः ।

॥ श्रीशिवः शरणम् ॥

अथ

# महाकवेः श्रीकालिदासस्य चरितम् ।

तत्रादौ महाकवेः श्रीकालिदासस्य प्रादुर्भावावसरस्तावन्निर्णीयते । संक्षिप्तश्चायं विस्तरशस्त्वस्मत्प्रणीते **महाकविः श्रीकालिदास** इतिशीर्षके प्रबन्धे द्रष्टव्यः ।

१ तत्र केचिदर्वाचीना वैज्ञानिकम्मन्या महाकविप्रकाण्डममुं सप्तमशताब्द्यां प्रादुर्भूतं मन्यन्ते । किंतु ततः पूर्वभाविष्वपि पुलाकेशितन्त्रवार्तिकादिप्रबन्धेषु कालिदासीयपद्यानामुपलम्भान्मतमिदमत्यन्तं निःसारम् ।

२ अपरे तु—

"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इति ज्योतिर्विदाभरणीयपद्यानुसारेण नवरत्नान्तर्गततया वराहमिहिरसमानकालिकत्वं श्रीमतः कालिदासस्य सुस्पष्टम् । ततश्च षष्ठशतकोद्भूतत्वमर्थादेव संसिद्धमित्याहुः । तदपरे प्रत्याचक्षते । तथाहि । नासीदेव किलैषा नवरत्नावलिः । यदि ह्यभविष्यत्प्रबन्धा अपि तत्प्रणीता अभविष्यन् । न चैते दृश्यन्ते । शंकुवेतालभट्टक्षपणकादीनां तु नामान्यपि न क्वचिदपि प्रबन्धेषु दृश्यन्ते । तेन दुःसाधमेव तेषामस्तित्वम् । वराहमिहिरवररुचिप्रभृतीनां च नास्ति समानकालिकत्वमिति कल्पनामात्रमूलेयं नवरत्नाख्यायिकेति । परे तु प्राचीनप्रबन्धेषु दोषपङ्क्षेपमसहमानाः समादधते । तथाहि । न किल नवरत्नावलिग्रथितनामानः सर्वेऽपि कवय एव किन्तु केचित्पण्डिता अपि स्युरत एव नैषां प्रबन्धोपलब्धिः । न हि सर्वैरपि प्रणीयन्त एव प्रबन्धा इति कश्चिन्नियमः । घटखर्परप्रणीतो नीति-

सारो वेतालभट्टप्रणीतो नीतिप्रदीपश्चेति प्रबन्धद्वयं तूपलभ्यमानं तयोः सम्भूतत्वं प्रमाणयति । धन्वन्तरिप्रभृतीनां तु आप्तवचनतः सद्भावे सिद्धे प्रबन्धानुपलम्भो न दोषाय । नवरत्नान्तर्गतोऽमरसिंहस्तु दुर्गसिंहापरनामा श्रीमतो विक्रमादित्यस्य वर्णावरो भ्राता नामलिङ्गानुशासनापरनाम्नोऽमरकोशस्य कालापव्याकरणवृत्त्यादीनां च प्रणेता। अमरकोशस्यैतत्प्रणीतत्वे प्रमाणं तु " दुर्गसिंहप्रचरिते नामलिङ्गानुशासने । लभते ह्यमरोपाधिं राजेन्द्रविक्रमेणः सः । " इति श्रीकण्ठीयव्याख्यागतं पद्यमिति बोध्यम् । युक्तयस्त्वस्मत्प्रणीते प्रबन्धान्तरेऽनुसन्धेयाः । तदेवं सिद्धे नवानामपि रत्नानामस्तित्वे तेषां समानकालिकत्वमपि बाधकाभावाद्दुर्वारम् । नच समानकालिकत्वे वराहमिहिरसमयनिर्णयानुरोधेन षष्ठशतकोद्भूतत्वापत्तिरिति वाच्यम् । विक्रमसभावर्तिनामेषामर्वाचीनत्वस्यापादयितुमशक्यत्वात् । विक्रमस्तु ख्रिस्तीयवत्सरारम्भतः समुद्भूत इति परस्तान्निर्णेष्यते । न चैवं सति का गतिर्वराहमिहिरस्य षष्ठशताब्दीसमुद्भूतत्वनिर्णयस्येति वाच्यम् । अशेषेऽपि भारतवर्ष एकमात्रेणैव वराहमिहिरेण भवितव्यमिति नियमाभावात्कालिदासवद्वराहमिहिरस्याप्यनेकत्वकल्पनात् । एवं च प्रामाणिकी नवरत्नकथेति सिद्धान्तः । कालिदासस्तु विक्रमतोऽपि प्राचीन इति निर्णेष्यते । इति ।

३ अपरे त्वाहुः श्रीमान्मातृगुप्ताचार्य एव कालिदासापरनामा । मात्रा काल्या गुप्तो दासत्वाद्रक्षित इति व्युत्पत्तेः । स च षष्ठशताब्द्यां (ख्रि०) समुद्भूत इत्ययमेव कालिदासावस्थितिसमय इति । तदेतद्व्यामोहमात्रमूलकमेव । मातृगुप्तकालिदासपदयोः पर्यायत्वासम्भवात् । न हि मातृशब्दस्य कालीवाचित्वं क्वापि कोशादौ दृष्टम् ।

---

१ " ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणी
राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत् ।
वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती
शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः ॥ " इति वङ्गीयप्रबन्धेषु ।

नापि " रघुकारः कालिदासो मेधारुद्रश्च कोटिजित् । " इत्याद्यभिधाने कालिदासनामसु मातृगुप्तनाम्न उल्लेखः । नापि कालिदासार्थे मातृगुप्त इति तदर्थे वा कालिदास इति व्यवह्रियते कैश्चित् । अतश्च. शक्तिग्राहकाभावान्न मातृगुप्तपदं कालिदासमाचष्टे । रूढिप्रयोजनयोरभावाच्च नात्र लक्षणाङ्गीकारः । तदेतेनापि प्रमाणेन नास्ति श्रीमतः कालिदासस्य षष्ठशताब्दीसमुद्भूतत्वसंसिद्धिरिति ।

४ अन्ये तु " दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान् " इति मेघदूते कालिदासेन दिङ्नागाचार्यस्य ध्वननाद्दिङ्नागस्य च षष्ठशताब्दीसमुद्भूतत्वात्तस्य च कालिदासप्रतिभटतया प्रसिद्धत्वात्कालिदासस्यापि ख्रिस्तीयषष्ठशताब्दीसमुद्भूतत्वमेवेति वदन्ति । तन्न । प्रमाणान्तरैः कालिदासस्य सुतरां प्राचीनत्वनिर्णयात् । किंच दिङ्नागाचार्यस्य कालिदाससमानकालिकत्वकल्पनायामपि न षष्ठशताब्दीप्रादुर्भूतत्वम् । ख्रिस्तीयशकप्रक्रमतः प्रागेव लब्धजन्मना श्रीमता भट्टाचार्येण श्लोकवार्तिके तन्मतस्योपनिबन्धनेन तस्यैव प्राचीनत्वावगमात् । षष्ठशताब्दीसमुद्भूतस्तु दिङ्नागाचार्यो यदि स्यात्तर्हि सोऽस्माद्विभिन्न एवेत्यवबोद्धव्यम् । एवं चातोऽपि न श्रीमतः कालिदासस्य षष्ठशताब्दीसमुद्भूतत्वसंसिद्धिरिति ।

५ तदितरे तु—

"तत्र हूणावरोधानां भर्तृषु व्यक्तविक्रमम् ।
कपोलपाटलादेशि बभूव रघुचेष्टितम् ॥ ( ४ । ६८ )"

इति रघुवंशे कालिदासेन रघुकर्तृकस्य हूणविजयस्याभिधानाद्धूणानां च पञ्चमशताब्द्युत्तरमेव भारतवर्षे प्रवेशाद्विक्रमातिशयशालित्वाच्च तानेव रघोः प्रतिभटपक्षे क्षिपतः कालिदासस्यार्थादेव ततः परभावित्वमित्याचक्षते । तन्न । युगान्तरे समुद्भूतेन रघुणा कलियुगीया एव हूणा विजिता इति चेत् कालिदास उपवर्णयेन्नूनं स प्रतारकधुर्यः स्यात् । नापि प्रमाणमन्तराऽत्र प्रतारकत्वमारोपयितुं शक्यम् । किंच प्राचीनतमानां नृपाणामुत्कर्षातिशयमुपविवर्णयिषता कविना प्रथितविक्रमाणामपि स्वसमानकालिकानां भूपानां तत्समा-

नकालिकतया तत्प्रतिद्वन्द्वितया वोपनिबन्धनमिति न खल्वेतत्क्वापि दृष्टचरम् । हूणास्तु भारतादावपि सुप्रथिता युगान्तरवर्तिनो द्रष्टव्याः। तथा हि महाभारत आदिपर्वणि १७७ तमेऽध्याये “ असृजत्पह्नवान्पुच्छात् ” इत्युपक्रम्य “ चिबुकांश्च पुलिन्दांश्च चीनान्हूणान्सकेरलान् । ” इति वसिष्ठधेनुगात्रेभ्यस्तत्तद्वीरोत्पत्तिवर्णनप्रस्तावेन हूणनाम्न उपनिबन्धाद्व्यासतोऽपि पूर्वभावित्वं हूणानां सुस्पष्टम् । ततश्च तद्वंश्यानामेव रघुकर्तृकः पराभव इति द्रष्टव्यम् । ततश्च हूणपदोपनिबन्धनमात्रेण कालिदासस्य षष्ठशताब्दीप्रादुर्भावोपवर्णनमतिमात्रमेव निःसारमिति ।

६ केचित्तु कुमारसम्भवे “ तिथौ च जामित्रगुणान्वितायाम् । ( ७ । १ ) ” इति पद्ये कालिदासेन जामित्रपदमुपनिबद्धम् । तच्च ग्रीकभाषावर्तिनो डायमेट्रन् ( Daymetran ) शब्दस्यापभ्रंशः । यदा ग्रीकेभ्योऽधिगतं ज्योतिःशास्त्रं भारतवर्षीयैस्तदैव संस्कृतभाषायां प्रविष्टोऽयं शब्दः । यैश्च ग्रीकेभ्यो ज्यौतिषमधिगतं तेषु भारतवर्षीयपण्डितेषु श्रीमानार्यभट्ट एव प्रथमः । स च खिस्तीयपञ्चमशताब्द्यां प्रादुर्भूत इति तदुत्तरभाव्येव श्रीमान्कालिदास इति प्राहुः । तन्मन्दम् । नारदसंहितादिषु प्राचीनतमप्रबन्धेषु “ जामित्रशुद्ध्येकविंशन्महादोषविवर्जिते । ” इति जामित्रशब्दप्रयोगात् । जामिं जायां त्रायते शुभाशुभद्योतकतयेति जामित्रमिति व्युत्पत्तेर्जामित्रशब्दस्यानपभ्रष्टत्वावगमात् । + + + + “ जामित्रमस्तं स्मरमदनमद्यूनकामाभिधानम् । ” इत्यादिषु सप्तमभाववाचितया जामित्रशब्दस्य प्रसिद्धेश्चेति ।

७ अपरे तु रघुवंशे “ छाया हि भूमेः शशिनो मलत्वे नारोपिता शुद्धिमतः प्रजाभिः । ” इति ( १४ । ४० ) पद्ये श्रीमता कालिदासेन चन्द्रग्रहस्य पारमार्थिकं स्वरूपमुपनिबद्धम् । तच्चार्यभट्टेनैव ग्रीकेभ्यः प्रथमतो विदितमिति तदुपनिबन्धनकर्तुः कालिदासस्यार्यभट्टतोऽर्वाचीनत्वमर्थादेव षष्ठशताब्दीसमुद्भूतत्वमायातमिति प्रवद-

न्ति। तदप्यविचारितरमणीयम्। पद्येऽत्र ग्रहणोपवर्णनगन्धस्याप्यभावात्। न च मलशब्दो ग्रहणवाचीति प्रलपितव्यं प्रमाणाभावात्। समयश्चायं कवीनां यच्चन्द्रस्य कलङ्क एव भूमेश्छायेत्युपवर्णयन्तीति। दृश्यते हि "अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे सारङ्गं कतिचिच्च संजगदिरे भूच्छायमैच्छन्परे।" इत्यादिषु भूच्छायाया एव कलङ्कत्वेनोपवर्णनम्। ग्रहस्तु राहुग्रासत एव भवतीति तु सम्मतमेव कालिदासस्येति। "तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण। उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी कलेव"॥ इति रघुवंशगतद्वितीयसर्गवर्तिपद्यतोऽवबोद्धव्यम्। इति।

८ अन्ये तु संस्कृतभाषाभ्युदयस्य समयद्वयं परिकल्पयन्ति। तत्रादिमः श्रुत्यादीनामुत्पत्तेरर्थादतीव प्राचीनः। द्वितीयस्तु ख्रिस्तीयद्वितीयशताब्द्युत्तरकालिकः। तत्रैव च कालिदासादीनां प्रादुर्भाव इत्याहुः। तन्न। प्रमाणाभावात्। दृश्यन्ते हि ख्रिस्तीयप्रथमशताब्द्यादौ तत्सन्निहिते प्राचीनसमयेऽपि वा सम्भूतानि बुद्धचरितप्रभृतीनि काव्यानीति।

९ केचित्तु श्रीमतः कालिदासस्य पद्येषु अश्वघोषप्रणीतबुद्धचरितगतपद्यार्थानां छायामाशङ्कमाना अश्वघोषसमानकालिकः कालिदास इत्याहुः। अश्वघोषश्च ख्रिस्तीयप्रथमशताब्द्यां प्रादुर्भूत इति। तन्न। महाकवेः कालिदासस्य परार्थापहरणे प्रयोजनाभावात्। किंच दृश्यत एवात्यन्तापरिचितानामपि वैदेशिकानां काव्येषु भारतीयकविकाव्यार्थानां सादृश्यम्[1]। न चैतावता तेषां पर-

---

१ "आमेखलं सञ्चरतां घनानां छायामधःसानुगतां निषेव्य।
उद्वेजिता वृष्टिभिराश्रयन्ते शृङ्गाणि यस्यातपवन्ति सिद्धाः॥"
कुमारसम्भवे कालिदासः।

As some tall cliff that lifts its awful form,
Swells from the vote and midway leaves the storm,
Though round its breast the rolling clouds are spread,
Eternal sunshine settles on its head.
Goldsmith's Deserted Village. इत्यादौ।

स्परार्थापहारकत्वं कल्पयितुं शक्यम् । बलीयसी हि महाकवीनां प्रतिभा यदृच्छयैव प्रकाशयति क्वचित्तथाविधमर्थं योऽपरेषां काव्येषु विद्यमान इवाकल्यते मन्दप्रज्ञैरिति । तदितोऽपि नास्ति कालिदासस्य ख्रिस्तीयवत्सरारम्भतोऽर्वाचीनत्वम् ।

यत्र तु सदृशकाव्यार्थयोः कवयित्रोरेकतरस्य कविगुणशालित्वमितरस्य तु तदभावः प्रमाणतो निर्णीयेत तत्रापकृष्टेनोत्कृष्टस्य काव्यार्थश्चोरित इति शक्यं सम्भावयितुम् । प्रकृते तु नानाविधमहाकाव्यनाटकादिप्रणेतृतया श्रीमतः कालिदासस्य कवित्वेन बौद्धदर्शनप्रबन्धप्रणेतृत्वाच्चाश्वघोषस्य दार्शनिकत्वमात्रेण प्रसिद्धिः सुविदितैव । अतोऽश्वघोषेणैवापहृतः कालिदासीयकाव्यार्थ इति सम्भाव्यते । ततश्चाश्वघोषतोऽपि प्राचीनः कालिदास इति सिद्धम् ।

१० केचित्तु--

"काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं
जातं यतो ननु कियच्छ्रुतिकर्मवादः ।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव ॥"

इति ज्योतिर्विदाभरणान्तिमाध्यायवचनतः कालिदासस्यैव ज्योतिर्विदाभरणप्रणेतृतां निश्चित्य तत्रत्येनैव "वर्षैः सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते मासे माधवसंज्ञकेऽत्र विहितो ग्रन्थक्रियोपक्रमः ।" इति वचनेन कालिदासस्य कलियुगारम्भतः ३०६८ तमे वर्षेऽर्थात्ख्रिस्तीयशकारम्भतः प्रथमशताब्द्यां वर्तमानत्वं प्राहुः।

तत्र न तावत्कालिदासस्य ज्योतिर्विदाभरणप्रणेतृत्वं ज्योतिर्विदाभरणस्यान्तरप्रमाणैस्तत्प्रणेतुः ख्रिस्तीयद्वादशशताब्द्यां प्रादुर्भावस्यावधारणात् । तत्प्रकारश्चास्मद्विरचिते प्रबन्धान्तरेऽनुसन्धेयः । तन्निर्दिष्टे तु समये कोऽपि कालिदास आसीदेव यो विक्रमार्कसमानकालिकः इति बोध्यम् । रघुवंशादिप्रणेता तु श्रीमान्कालिदासस्ततः सुतरां प्राचीनः । इति ।

११ अन्ये तु रघुवंशादिप्रणेतुः कालिदासस्य विक्रमार्कसमानकालिकतामभिप्रेत्य विक्रमार्कस्य ख्रिस्तीयषष्ठशताब्द्यामेवावस्थानं साधयितुं प्रयतन्ते । उपन्यस्यन्ति च प्रमाणानि । तथा हि ।

( क )कृष्णीकाख्यस्य भूपालस्य वंशे तमारभ्य त्रिंशोऽयं पुरुषो विक्रमार्क इति । कृष्णीकश्च ख्रिस्तीयेऽष्टसप्ततितमे वर्षे भारतं वर्षमलमकार्षीत् ।

( ख ) चीनदेशीयः पथिको ह्वयनसंगो ( हुएन्त्संग ) नाम यात्रार्थं भारतं वर्षमुपागतस्तेन स्वप्रणीतप्रबन्धे ख्रिस्तीये ५८० वत्सरे शिलादित्योत्तरं विक्रमादित्य आसीदिति निर्दिष्टम् ।

( ग ) वराहमिहिरो नाम ज्यौतिषिको विक्रमार्कस्य सभ्य इति लोकानां प्रवादः । स च ख्रिस्तीयषष्ठशताब्द्यामेवासीदिति प्रमाणान्तरैरवधार्यते ।

( घ ) कोरूरनगरसमीपे यो म्लेच्छानां पराजेता स एव विक्रमादित्यः । तच्च प्रधनं ख्रिस्तीयषष्ठशताब्द्यामेव सम्पन्नमिति शिलालेखतोऽवगम्यते ।

एतावता श्रीविक्रमादित्यस्य ख्रिस्तीयषष्ठशताब्द्यां प्रादुर्भूततया श्रीमतः कालिदासस्यापि तदानीमेव विद्यमानत्वमभ्युपेतव्यम् । न चैवं विक्रमार्कीयशकाङ्को विरुध्येतेति वाच्यम् । शकोपक्रमवत्सर एव प्राचीनत्वापादनाय ५०१ तमाङ्को विक्रमार्केण निर्दिष्ट इति कल्प्यमानत्वात् । इति ।

तदेतदसङ्गतं चात्यन्तमसमञ्जसं च । तथाहि । स्यान्नाम कृष्णीकवंशेऽपि कोऽपि विक्रमादित्यः किन्तु स एव शकप्रवर्तयितेति न शक्यते स्वीकर्तुम् । प्रमाणाभावात् । बहवो हि विक्रमादित्याः[१] श्रूयन्ते । अत एव च ह्वयनसंगनिर्दिष्टोऽपि विक्रमादित्यो न शकप्रव-

---

१ " समारूढे पूतात्रिदिववसतिं विक्रमनृपे । " सुभाषितसन्दोहे ।

" नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः । " मिताक्षरा ।

"राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत् । " वङ्गीयप्रबन्धे ।

तैयिता । वराहमिहिरविषये तु मदंत्तपूर्वमेवोत्तरम् । कोरूरशिलालेखनिर्दिष्टस्तु भूपालो विक्रमादित्य इत्यत्र नास्ति किञ्चिदपि प्रमाणं नाम । ततः प्राचीनस्य तच्छकवत्सराङ्कस्यानुपलम्भादेवं कल्प्यत इति चेन्न । डा०पीतरशन ( पीटर्सन्) महोदयेन प्रकाशितान्मन्देसरीयाशिलालेखात् डा० वुलरमहाशयेन प्रमाणीकृतात्सामानदुर्गताम्रशासनाच्च विक्रमशकस्य ख्रिस्तीयषष्ठशताब्दीतः प्राचीनत्वावगमात् । फ्लीटाख्योऽपरो यौरोपीयः पण्डितोऽप्येवम् । सन्ति च प्रमाणान्तराण्यपि यैः किल विक्रमार्कस्य ख्रिस्तीयशकारम्भतोऽपि प्राचीनत्वं शक्यते साधयितुम् । तथाहि । दिवं गते महावीरस्वामिनि ४७० वत्सरेभ्यः परं प्रादुर्भूतः श्रीमान्विक्रमादित्यः । अयं च समानकालिकः श्रीसातवाहनस्येति प्रबन्धकोषे राजशेखर आह । सातवाहनशालिवाहनशब्दौ च पर्यायभूतावेव । एतदप्यापतत एव । वस्तुतस्तु श्रीशालिवाहनतः प्राचीन एव विक्रमादित्यः । तथा हि। शालिवाहनः ख्रिस्तीयप्रथमशताब्द्यामासीत् । स च शकप्रवर्तकभूपविजेतृत्वलक्षणेन शककर्तृत्वेनोल्लसितः । तद्विजितश्च श्रीविक्रमादित्यः । अयं च विजयो न साक्षात्किन्तु नर्मदाया दक्षिणदेशे विक्रमशकं विलोप्याभिनवशकस्य प्रवर्तनरूपः । ततश्च । सिद्धं विक्रमार्कस्य शालिवाहनतः प्राचीनत्वम् । अत एव च—

“ युधिष्ठिरो विक्रमशालिवाहनौ
धराधिनाथो विजयाभिनन्दनः ।
ततस्तु नागार्जुनमेदिनीविभु-
र्बलिः क्रमात्षट् शककारकाः कलौ ॥ ”

इति शककारकनृपक्रमनिर्देशे विक्रमस्य श्रीशालिवाहनतः पूर्वं निर्देशः सङ्गच्छते । अन्यत्रापि स्पष्टीकृतमेतत् ।

विक्रमादित्येनैव शरावत्यां रामकूटाख्यः प्रासादो निरमायि। यः किल ख्रिस्तीयवत्सरारम्भतः प्राक् सप्तपञ्चाशे वर्षे विरचितस्तेनेति सप्रमाणमाचक्षते पुरावृत्तविदः ।

प. इं. प. श्रीमद्दारकाजगद्गुरुपीठपुरावृत्तेषु नवमदशमप्रभृतीनामपि वत्सराणामुल्लेखात् ५०१ तमवत्सरप्रभृतित एव विक्रमार्कशकाङ्कनिर्देश इति सुतरां निर्मूलम् ।

तदेवं प्रमाणशतैः सिद्धयति ख्रिस्तीयशकारम्भतः प्राचीनत्वे विक्रमादित्यस्यार्वाचीनतापादनमेकान्तत एवानुचितमिति । विस्तरस्त्वन्यत्र द्रष्टव्यः । समयेऽत्र विक्रमादित्यसभायां कालिदासाख्यः कोऽपि कविरासीदेवेति निर्दिष्टपूर्वैः प्रमाणैरवबोध्यम् ।

रघुवंशादिप्रणेता तु श्रीमान्कालिदासस्ततोऽपि सुतरां प्राचीनः। तन्त्रवार्तिकादिमीमांसाप्रबन्धानां ग्रथयिता हि श्रीमान्कुमारिलभट्टस्तन्त्रवार्तिके—

"सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः ।"

इति कालिदासीयशाकुन्तलगतं पद्यार्धमुदाजहार । कुमारिलभट्टश्च श्रीशङ्कराचार्याणां समानकालिकः । श्रीशङ्कराचार्याश्च युधिष्ठिरस्य सप्तविंशतिशताब्द्यामविद्यन्तेति द्वारकामठीयसुधन्वताम्रशासनतो निश्चीयते । सम्प्रति पुनर्युधिष्ठिरशकस्यैकपञ्चाशत्तमा शताब्दीति सुस्पष्टमेवेतः पूर्वं चतुर्विंशशताब्द्यां श्रीशङ्कराचार्यप्रादुर्भाव इति। तत्समानकालिकेन कुमारिलभट्टेन कालिदासीयपद्यस्योदाहरणात्ततोऽपि प्राचीनोऽर्थादितः पूर्वं चतुर्विंशतिशताब्दतः पौर्विकः श्रीमान्कालिदास इति स्पष्टम् ।

---

कालिदासश्च श्रीमत्याः काल्याः प्रसादादेव कवित्वमुपागत इति प्रवदन्ति। अत्रेयं किंवदन्ती । आसीत्पुरा कोऽपि भूपालः । तस्य चासीत्पण्डिततमा कन्या । तस्याश्चानुरूपं वरमनुसदन्धानोऽसफलीभूतमनोरथो भूपः कदाचिदपरेद्यवि प्रभाते यो नयनगोचरतामागच्छेत्तस्यै कन्यकायाः प्रदानं प्रतिजज्ञे । ततश्चात्मनस्तनयाय न प्रयच्छति कन्यकां भूपाल इति रुष्टेन मन्त्रिणा कस्यचिद्वृक्षस्य शाखाग्रमारुह्य मूलमुच्छिन्दन्कोऽपि द्विजगोपालो राजद्वार उपस्थापितः ।

राज्ञा च यथाप्रतिज्ञं तस्मा एव समार्पि कन्या स्वीया। तदनु निशि विलासमन्दिरं गतया राजकन्यकयाऽवबुद्धः पत्युरतिमात्रमसमञ्जसभावः। ततश्च तया सुपरुषं निर्भर्त्सितस्तत्पतिररण्यं गत्वा कालीमाराध्य सम्पाद्य चालौकिकं कवित्वं कदाचिन्निशि प्रतिनिवृत्तो विलोक्य पिहितं गर्भागारद्वारं प्राह " कान्ते ! दीयतामपावृतकवाटं द्वारम् " इति। सापि प्रत्यभिज्ञाय दयितं प्रति प्राह। " अस्ति कश्चिद्वाग्विशेषः " इति। अयं तु तत्प्रतिवचनगतं पदत्रयमधिकृत्य काव्यत्रयमेव रचयाञ्चकार। " अस्त्युत्तरस्यां दिशि देवतात्मा " इत्यारभ्य कुमारसम्भवाख्यं सप्तदशसर्गात्मकं महाकाव्यं " कश्चित्कान्ताविरहगुरुणा " इत्यादि मेघसंदेशाख्यं संघात[1]काव्यं " वागर्थाविव सम्पृक्तौ "इति रघुवंशाख्यमूनविंशतिसर्गात्मकं महाकाव्यं चेति। ततश्च प्रसन्ना राजदारिका सप्रणयं वल्लभं निषेवमाणा सुखमासीदिति। अत्र प्रतिपाद्यमानं तु गोपालाय राज्ञः कन्यकाप्रदानमसम्भवग्रस्तमिव प्रतिभाति।

---

कविरयमुत्तरभारत एव प्रादुर्भूत इति तत्र तत्रोत्तरभारतीयानामेवाचाराणामनेनोपवर्णनात्प्रतीयते। मेघसन्देशे मार्गनिर्देशप्रस्तावेन तत्तानि पुरग्रामसरिदादीन्युपवर्णयन्नयमुज्जायिनीमेव विशेषतः सूक्ष्मतया चोपश्लोकयतीत्यनुमीयत एतस्योज्जयिन्यामैकान्तिकः परिचयः। स च न हि सुदूरवर्तिनां घटत इति नूनमुज्जयिनीसन्निहिते प्रदेश उज्जयिन्यामेव वा निवासः कालिदासस्येति सम्भाव्यते।

---

एतत्प्रणीताः प्रबन्धास्तु—

**ऋतुसंहारम्**—सर्गषट्कात्मकमृतुवर्णनमयं प्रसन्नमधुरं खण्डकाव्यम्।

---

१ " यत्र कविरेकमर्थं वृत्तेनैकेन वर्णयति काव्ये।
संघातः स निगदितो वृन्दावनमेघदूतादिः॥ " इति दर्पणे।

**कुमारसम्भवम्**–सप्तदशसर्गात्मकं मनोहरं महाकाव्यम् । एतच्च शिवपुराणीयां कथामुपजीव्य विरचितम् । अत्र च बहुषु स्थानेषु शिवपुराणीयपद्यानां छाया सन्दृश्यते । छायोपजीवित्वाच्चेदमेव प्राथमिकं महाकाव्यमेतस्येति समवगम्यते । एतच्च समग्रमपि कालिदासप्रणीतमेव । तत्र युक्तयस्त्वन्यत्र द्रष्टव्याः ।

**रघुवंशम्**–ऊनविंशतिसर्गात्मकं महाकाव्यमिदमतिमात्रहृदयङ्गमम् ।

**मेघदूतम्**–खण्डकाव्यमिदम् । अनिर्वचनीयमन्यादृशमेवास्य सर्वाङ्गरमणीयत्वम् । एकमात्रमप्येतत्काव्यं कवेरस्य विमलतमेन यशसा दिगन्तराण्यलङ्कर्तुं प्रभवेत् ।

**अभिज्ञानशाकुन्तलम्**–सहृदयहृदयाह्लादकं नाटकरत्नमिदम् । एतदेवोद्दिश्य प्राचीनानामिदं पद्यम् ।

"काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला ।
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ।
यास्यत्यद्येति तत्रापि श्लोकः सर्वमनोहरः ॥" इति ।

अत्रत्यस्यैव कस्यापि वत्सलरसपरिस्यन्दिनः पद्यस्य रसमास्वाद्य कोऽपि शार्मण्यदेशीयः ( जर्मन् ) प्रमोदभरविकसितान्तःकरणस्तदेकतानतामापन्नोऽसङ्गीतकं ननर्तेति श्रूयते ।

**विक्रमोर्वशीयम्**–पञ्चाङ्कं त्रोटकमेतत्[1] । अस्य च कमनीयतमत्वे प्रमाणं सुधियः ।

**मालविकाग्निमित्रम्**–यदेतद्व्याख्यातमस्माभिस्तन्नाटकम् । अस्य च नाटकत्वे सन्दिहते केचिदर्वाचीनाः । तदसङ्गतम् । "नाटकं ख्यातवृत्तं[2] स्यात्पञ्चसन्धिसमन्वितम् ।" इत्यादिनाटकलक्षणाक्रान्ततयैतस्य नाटकताया दुर्वारत्वात् । न च नैतत्ख्यातवृत्तमिति

---

१ " सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ।
त्रोटकं नाम तत्प्राहुः प्रत्यङ्कं सविदूषकम् ॥ " इतिलक्षणस्त्रोटकाख्यो रूपकभेदः ।

२ ख्यातं पुराणेतिहासादिषु प्रसिद्धं वृत्तमितिवृत्तं यस्य तत् ।

भ्रमितव्यं विष्णुपुराणे कथांशस्यास्य प्रथितत्वात्। न चैतत्कालिदासप्रणीतमिति तु भ्रममात्रं प्रमाणाभावात्। न च वर्णनाशैल्येवात्र प्रमाणमिति वाच्यम्। एतस्य कालिदासप्रणीतत्वेऽपि तस्या एव प्रमाणीभूतत्वात्। दृश्यन्ते ह्यत्र तथाविधानि कियन्ति गद्यानि च। यानि खल्वनिच्छतोऽपि बलादिव प्रत्याययन्त्यात्मनः कालिदासप्रणीतत्वम्। तानि चात्र मालविकाया नृत्यतदवसानावस्थानवर्णनादिप्रस्तावे स्वयमेव दृश्यन्तां रसिकैः। विस्तरभयात्तु नात्र तान्युदाहर्तुमिच्छामः। इति।

एतावन्त एवादिमकालिदासेन प्रणीताः प्रबन्धाः।

गङ्गाष्टकमङ्गलाष्टकशृङ्गारतिलकनलोदयादीनां विरचयिता त्वपर एव कोऽपि कालिदासः स्यात्। ज्योतिर्विदाभरणं तु नितरामर्वाचीनमिति कालिदासस्य तदुपनिबन्धृत्वं भ्रममात्रमूलकमेव। स्मृतिचन्द्रिका तु नाद्याप्यस्मन्नयनगोचरतामापन्ना इति तद्विषये नेच्छामो लेखनीं प्रवर्तयितुम्।

---

एतद्विरचितेषु त्वशेषेष्वपि प्रबन्धेषु सुनिपुणं समालोच्यमानेषु प्रतीयते महाकवित्वमिव पाण्डित्यमपि श्रीमतः कालिदासस्येति विभाव्यतां प्राज्ञैरिति शिवम्।

इति श्रीअप्पाशर्मविद्यावाचस्पतिविरचितो महाकवि-
श्रीकालिदासचरितसङ्क्षेपः।

## नायकादिविवेकः ।

अत्र विदिशाधिपतिरग्निमित्रो नाम महीपालो नायकः । विदर्भाधिपतेर्माधवसेनस्य सोदरी मालविका नायिका । राज्ञः पट्टमहिषी धारिणी भोगिनी चेरावती तस्याः प्रतिनायिका । तत्र " अविकत्थनः क्षमावानतिगभीरो महासत्वः । स्थेयान्निगूढमानी धीरोदात्तो दृढव्रतः कथितः ॥ " इत्युक्तलक्षणोपेततयाऽग्निमित्रस्य धीरोदात्तत्वम् । इरावत्यादिसकलान्तःपुरसमानुरागत्वाद्दक्षिणत्वं च । " एषु त्वनेकमहिलासमरागो दक्षिणः कथितः । " इत्युक्तेः ॥

नायिका च मालविका मुग्धा । "प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ " इति लक्षणात् ॥

प्रतिनायिका धारिणी प्रगल्भा धीरा । " प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा । उदास्ते सुरते तत्र दर्शयन्त्यादरान्बहिः ॥ " इत्युक्तलक्षणान्वितत्वात् ॥

इरावती तु प्रगल्भाऽधीरा तृतीयाङ्कादौ रशनया ताडनस्य राज्ञो निर्भर्त्सनस्य च तत्कर्तृकत्वात् । उक्तं च । " तर्जयेत्ताडयेदन्या " इति । अन्या प्रगल्भाऽधीरा ॥

---

## रसोत्पत्तिः ।

अत्र मालविकामग्निमित्रं चालम्ब्य समुद्भिन्नो वसन्तचन्द्रमलयानिलादिभिरुद्दीपनविभावैश्छालिकप्रयोगादौ मालविकाया भ्रूविक्षेपादिभिरनुभावैरवहित्थौत्सुक्यस्मृतिविषादचिन्तात्मकैर्व्यभिचारिभावै रत्या च स्थायिभावेनोपबृंहितश्चित्रदर्शनात्समुद्रगृहे मालविकोपगमावधिविप्रलम्भस्ततश्च संभोगः शृङ्गारः । स एवात्र प्रधानो रसः । अत्रानपायित्वेऽपि शोभमानत्वान्माञ्जिष्ठारागः ॥

एवं द्वितीयेऽङ्के विदूषकवचनाद्धासः । प्रथमे विदर्भवृत्तान्ते वीरः । पञ्चमे सुमतिनिधनस्मरणेन करुणस्तत्रैव "तूणीरपट्टेत्यादि" तस्कर-

प्रधनेन भयानको राजकुमारस्य वसुमित्रस्य शौर्योदयेन वत्सल इत्यप्रधाना रसाः सूच्यन्ते ॥

एतेषां च लक्षणानि विस्तरभियाऽत्रानुक्तानि साहित्यदर्पणे तृतीयपरिच्छेदे विलोकनीयानीति ॥

---

## शब्दालङ्कारलक्षणानि।

अर्थालङ्कारलक्षणानि तु तत्र तत्र प्रायशो निवेशितान्येव। शब्दानां प्रायेण प्रतिपद्यं विद्यमानतया तेषां लक्षणान्यत्रैकत्रैवो-च्यन्ते। तेन च शक्यावगमास्तत्र तत्र विद्यमाना अपि शब्दाल-ङ्कारा इति। नराणां कटककुण्डलादय इव शब्दार्थयोरप्यास्थिरा धर्मा अलङ्काराः। तत्र च येऽर्थमेव परिष्कुर्वते तेऽर्थालङ्कारा उप-मादयः। ये च शब्दानेवालंकुर्वते तेऽनुप्रासादयः शब्दालङ्काराः - ते च पुनरुक्तवदाभासानुप्रासयमकश्लेषाचित्राणि। तत्र पुनरुक्तवदा-भासलक्षणं "आपाततो यदर्थस्य पौनरुक्त्यावभासनम्। पुनरुक्त-वदाभासः स भिन्नाकारशब्दगः॥" यत्र भिन्नाकारैः शब्दैरापात-तोऽर्थस्य पुनरुक्तत्वमिव भासते तत्र पुनरुक्तवदाभासोऽलङ्कारः। यथा "भुजङ्गकुण्डली शम्भुः" इति। अत्र भुजङ्गकुण्डलीशब्द-योर्दर्शनमात्रेणैकार्थत्वामिव भासमानमित्ययमलङ्कारः। यत्र तु पारमार्थिकं पौनरुक्त्यं तत्र नायमलङ्कारः। यथा "भुजङ्गमोऽहिश्च सरीसृपोऽयम्" इति ॥

स्वरवैषम्येऽपि शब्दानां सादृश्यमनुप्रासः। स च च्छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽन्त्यानुप्रासो लाटानुप्रासश्चेति पञ्चविधः। "छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा।" अनेकधा स्वरूपतः क्रमतश्च। यथा "कावेरीवारिपावनः पवनः" इति। इह कावेरी-वारीति पावनः पवन इति च सकृदेव व्यञ्जनसङ्घस्य साम्यम्। "अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा। एकस्य सकृदप्येष वृत्त्य-नुप्रास उच्यते॥" अनेकेषां वर्णानां स्वरूपत एवासकृत्साम्यं।

स्वरूपतः क्रमतोऽप्येकस्य सकृदसकृद्वा वृत्त्यनुप्रासः । यथा “ उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः । ” इति । अत्र द्वितीयचरणे कलयोरसकृत्क्रमतः स्वरूपतश्च साम्यम् । प्रथमे तकारस्य सकृदेव । “रसोल्लासैरमी वासरा ” इत्यत्र तु रसयोः स्वरूपत एव नतु क्रमतोऽपि ॥

एकस्थानोच्चार्यमाणत्वेन व्यञ्जनमात्रस्य सादृश्यं श्रुत्यनुप्रासः । तदुक्तम् ।“उच्चार्यत्वाद्यदेकत्र स्थाने तालुरदादिके । सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥” यथा “विरूपाक्षस्य जयिनीः” अत्र जकारयकारयोरेकत्रस्थान उच्चार्यमाणत्वम् ॥

आद्यस्वरेण सह यथावस्थस्यान्त्यव्यञ्जनस्य पदान्ते पादान्ते वाऽऽवृत्तिरन्त्यानुप्रासः । “व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु । आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ॥ ” इत्युक्तेः । यथा “ इदं हि गाङ्गं त्यजतामिहाङ्गं पुनर्न चाङ्ग । ” इति ॥

तात्पर्यमात्रेण भेदे सति शब्दार्थयोः पौनरुक्त्यं लाटानुप्रासः । “शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्यमात्रतः । लाटानुप्रास इत्युक्तः” इति । यथा “ स्मेरराजीवनयने नयने किं निमीलिते । ” अत्र नयनशब्दस्येक्षणमात्रार्थकत्वेऽपि तात्पर्यमात्रतो भेदाल्लाटानुप्रासः । “ सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः । क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ ” यथा “सनगरं नगरंध्रकरौजसः” इति श्लेषचित्रयोर्वक्रोक्त्यादीनां च लक्षणान्यनुपयुक्तत्वान्न विवृतानि ॥

---

## छन्दोमञ्जूषा ।

छन्दः पद्यम् । तच्च चतुष्पदी (यत्र चत्वारश्चरणाः ) । वृत्तं द्वे जातिरिति द्वेधा । अक्षरपरिमाणं वृत्तम् । मात्रापरिमाणा जातिः । वर्णानामुच्चारणकालभेदो मात्रा । सा त्वेका ह्रस्वस्य । गुरोः । नात्र हलो मात्रा । दीर्घं गुरु । ह्रस्वं च संयोगाद्यं सानुस्वारं सविसर्गं च । वा पदान्ते । प्रह्रे च । ( प्रबलतमसामेवं प्रायाः शुभेषु

प्रवृत्तयः । शाकुं. अं. ७ पं. २४ ) वृत्तं सममर्धसमं विषमं च ।
समं समचतुष्पादम् । अर्धसममाद्यतृतीययोर्द्वितीयतुर्ययोश्च समम् ।
विषमं विषमचतुष्पादम् । मात्राक्षराणां गणनाद्गणः । स वर्णास्त्रय-
श्चतस्रस्तु मात्राः । तेऽष्टौ यरतभजसनमाः । हलन्ताश्च । गलौ
गुरुलघू । हलौ च । सर्वत्र लघुर्नः । आदिमध्यान्तेषु यरताः ।
गुरुर्मः सर्वत्र । आदिमध्यावसाने भजसाः । जातौ पञ्च गणाः ।
मसजभनाः इति । जिह्वेष्टविश्रामस्थानं यतिः । लक्षणभ्रंशे
छन्दसो भङ्गः । नामधातुभागभेदे संपातो यतेः । "पुनातु नरका-
रिश्चक्रभूषितकराम्बुजः ।" इति हलायुधः । यतिः सर्वत्र पादान्ते ।
यथोक्तं चान्यत्र । नैवेयं श्वेतमाण्डव्यादीनाम् ॥

गणविवरणम् । लघुचिह्नम् ( । ) गुरुचिह्नम् ( ऽ )

मगणः ऽऽऽ, नगणः ।।।, यगणः ।ऽऽ, रगणः ऽ।ऽ, तगणः ऽऽ।,
भगणः ऽ।।, जगणः ।ऽ।, सगणः ।।ऽ इति । जातौ तु ऽ।।
भगणः, ।ऽ। जगणः, ।।ऽ सगणः, ऽऽ मगणः, ।।।। नगणः इति ॥

अथ जातिः । तत्रार्या ।

यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि ॥
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥ १ ॥

प्रथमे चरणे द्वादश । द्वितीयेऽष्टादश । तृतीये द्वादश । चतुर्थे
च पञ्चदश मात्रा यत्र साऽऽर्या जातिः ॥

वैतालीयम् ।

षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ॥
न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ २ ॥

यत्र विषमे पादे प्रथमं षण्मात्रास्ततो रोऽक्षरगणस्ततो लघुस्ततो
गुरुः । समे चाष्टौ मात्रास्ततो रगण आक्षरस्ततो लघुस्ततो गुरुः ।
समचरणयोस्त्वष्टौ मात्राः केवलगुरुरूपाः केवललघुरूपा वा न
भवन्ति किंतु मिश्रा एव । यत्र च समा द्वितीयचतुर्थषष्ठाष्टमाः

मात्राः पराश्रिता न भवन्ति । ( द्वितीयतृतीये मिलित्वैको गुरुः । एवं चतुर्थपञ्चमे षष्ठसप्तमे च न भवन्ति । ) तद्वैतालीयं नाम च्छन्दः॥

औपच्छन्दसिकम् ।

तत्रैवान्त एकस्मिन्गुरावधिक औपच्छन्दसिकम् ॥

---

## अथ वृत्तानि । तत्र समानि ।

अष्टाक्षरम् ।

युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ॥

युजो समपादयोः चतुर्थवर्णात् परं जगणेन युक्तं पथ्यावक्त्रं नाम वृत्तम् । अष्टाक्षरमिदमित्येके । परे तु विषममेवेति । एतदेव श्लोक इत्यप्याहुः । तथा चालक्षयत्कालिदासः ॥

श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् ॥
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १ ॥

एकादशाक्षरम् ।

स्यादिन्द्रवज्रा यदि तौ जगौ गः ॥ २ ॥
उपेन्द्रवज्रा प्रथमे लघौ सा ॥ ३ ॥
योगेऽनयोः स्यादुपजातिसंज्ञम् ॥ ४ ॥
मात् तौ गौ चेच्छालिनी वेदलोकैः ॥ ५ ॥

द्वादशाक्षरम् ।

द्रुतविलम्बितमाह नभौ भरौ ॥ ६ ॥

त्रयोदशाक्षरम् ।

जभौ सजौ गिति रुचिरा चतुर्ग्रहैः ॥
त्र्याशाभिर्मनजरगाः प्रहर्षिणीयम् ॥ ७ ॥

चतुर्दशाक्षरम् ।

उक्ता वसन्ततिलका तभजा जगौ गः ॥ ८ ॥

पञ्चदशाक्षरम् ।

ननमयययुतेयं मालिनी भोगिलोकैः ॥ ९ ॥

सप्तदशाक्षराणि ।

रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी ॥ १० ॥

नसमरसला गः षड्वेदैर्हयैर्हरिणी मता ॥ ११ ॥

जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः ॥ १२ ॥

मन्दाक्रान्ताऽम्बुधिरसहयैर्मौ भनौ गौ ययुग्मम् ॥ १३ ॥

ऊनविंशत्यक्षरम् ।

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् ॥ १४ ॥

एकविंशत्यक्षरम् ।

म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् ॥ १५ ॥

अर्धसमानि ।

प्र. च. १० } अयुजोर्यदि सौ जगौ युजोः
द्वि. च. ११ } सभरा लगौ यदि सुन्दरी तदा ॥ १ ॥

प्र. च. ११ } अयुजि ननरला गुरुः समे
द्वि. च. १२ } तदपरवक्त्रमिदं न जौ जरौ ॥ २ ॥

प्र. च. १२ } अयुजि नयुगरेफतो यकारो
द्वि. च. १३ } युजि तु नजौ जरगाश्च पुष्पिताग्रा ॥ ३ ॥

युक् समम् । अयुक् विषमम् ।

अथात्राङ्कसंज्ञाः । वेदाः अम्बुधयश्च चत्वारः । रसाः षट् । लोक-गिरिहयमुनयः सप्त । वसुभोगिनोऽष्टौ । ग्रहा नव । रुद्रा एकादश । सूर्या द्वादश । एतेषां पर्यायैरपीयमेव संख्योच्यते ॥

अत्र तृतीयान्तपदं यतिज्ञापकम् । इति ॥

---

# कथांशस्य सूचीपत्रम् ।

प्रथमाङ्के—देव्या धारिण्याः समीपवर्तिनि चित्रे मालविकां विलोक्य सञ्जाताभिलाषेण राज्ञाऽग्निमित्रेण मालविकादर्शने योज्यतामुपाय इत्याज्ञापितेन विदूषकेण परिकोपितयोर्नाट्याचार्यहरदत्तगणदासयोः परीक्षणं स्वोपदेशस्य शिष्येण प्रयोगादेवेति प्राश्निक-

पदमध्यासितया कौशिक्या निश्चित्य मालविकाया नाट्यप्रयोगावसरे विलोकन उपायश्चिन्तित इत्यवर्णि ॥

द्वितीये—नाट्यशालायामुपक्रान्तनृत्यां मालविकामवलोक्य राज्ञो भावोदयः। गीताभिनयप्रयोगच्छलेन च मालविकया राज्ञि स्वाभिलाषाविष्करणमुपावर्णि ॥

तृतीये—आत्मनो मनोविनोदाय भट्टिन्येरावत्या सह दोलाधिरोहणमनुभवितुं प्रमदवनं प्रस्थितो राजा मध्येमार्गमेव धारिणीनियोगादशोकदोहदं निर्वर्तयितुं समागताया मालविकायाः सखीसंलापादात्मन्यनुरागं निश्चित्य सविदूषकः परिहासच्छलेन तामुपगतः। राज्ञी त्विरावती सदासीका तत्रैव निगूढमुपस्थाय राज्ञो मालविकायामनुरागं विलोक्य च क्रुद्धा राजानमुपेत्य निर्भर्त्स्य च पादयोः प्रणतमपि तं विहायैव सकोपं निष्क्रान्तेत्यवर्ण्यत ॥

चतुर्थे—धारिण्या निगडितायां सवयस्यायां मालविकायां विदूषकः केतकीकण्टकेनात्मनोऽङ्गुष्ठे दंशपदमुत्पाद्य "परित्रायस्व भोः सर्पेण दष्टोऽस्मि" इति धारिणीसमीप उपविष्टं राजानमाचुक्रोश। ब्राह्मणवधभीतया च धारिण्या प्रदत्तं नागमुद्रामिषेणांगुलीयकमादाय तदेव मालविकारक्षणाय सारभाण्डभूगृहे नियुक्तायै दास्यै माधविकायै प्रदर्श्य मालविकां मोचयित्वा जलयन्त्रगृहे तां राज्ञा संयोजयामास। तत्र चोपागतां तदालोक्य सविशेषं कुपितामिरावतीं प्रसादयन् राजा प्रतिहारिणा कुमार्या वसुलक्ष्म्या वानरोपतापवृत्तान्तं श्रावित इरावत्यनुमत्यैव सरभसं निश्चक्राम। भयविह्वला च मालविकाऽशोकस्य कुसुमोद्गमवृत्तान्तं तदैव निशम्य देव्या प्रतिश्रुतपूर्वस्य पारितोषिकस्याशया प्रहृष्टोद्यानपालिकामन्वगच्छदिति वर्णितम् ॥

पञ्चमे—विवाहनेपथ्यपरिष्कृतया मालविकया, परिव्राजिकया, कौशिक्या, परिजनैश्च सह तपनीयाशोकमुपगतायां देव्यां तयैवाशोककुसुमोद्गमश्रियाः सहदर्शनव्याजेन सविनयमभ्य-

थ्योनीते सवयस्ये राज्यग्निमित्रे, कञ्चुकी विदर्भदेशाधिपेनोपायनीकृते द्वे शिल्पकारिके राज्ञ आदेशेनैव तत्र प्रवेशयामास । अथ मालविकां प्रत्यभिज्ञाय बाष्पं विसृजतोस्तयोः परिव्राजिकायाश्च सकाशादादितो मालविकावृत्तान्तं कौशिक्याश्च परिव्राजिकाभावे प्रयोजनं निशम्याभिजनवत्या मालविकाया दास्यनियोगेन खिद्यमानायां देव्यां धारिण्यां राज्ञि चाग्निमित्रे यज्ञशरणात्सेनापतिना पुष्पमित्रेण प्रहितं लेखं कञ्चुक्यर्पयामास । तं च वाचयतो राज्ञः सकाशात्पुत्रस्य वसुमित्रस्य विजयलाभवार्तां निशम्य प्रहृष्टया राज्या पारितोषिकमिषेण राज्ञे मालविका प्रादायि । गान्धर्वविधिना परिगृहीतपूर्वामपि तां राजा धारिणीपरितोषाय पुनः परिजग्राहेति वर्णितम् ॥

# मालविकाग्निमित्रगतपद्यानां सूचीपत्रम् ।



१ अत्र अष्टादशं पद्यमार्यसचिवमिति लिखितमपि मौर्यसचिवमिति पठितव्यम् । आर्य इति हि कलिकातापाठमात्रानुसारि इति ।

# मालविकाग्निमित्रे पात्राणि ।

१ सूत्रधारः[1] ।
२ पारिपार्श्वकः ।
३ गणदासः—मालविकागुरुर्धारिणीपक्षीयो नाट्याचार्यः ।
४ राजा—अग्निमित्रो नायकः ।
५ अमात्यः—वाहतकनामा ।
६ हरदत्तः—द्वितीयो नाट्याचार्यो गणदासस्य प्रतिपक्षः ।
७ परिव्राजिका—धारिण्याः पीठमर्दिका कौशिकीसंज्ञा ।
८ कंचुकी—मौद्गल्यनामा ।
९ बकुलावलिका—धारिण्याः परिचारिका मालविकायाः सखी ।
१० कौमुदिका—द्वितीया धारिण्याः परिचारिका ।
११ विदूषकः—राज्ञो वयस्यो गौतमशर्मा ।
१२ धारिणी—अग्निमित्रस्य पट्टमहिषी ।
१३ मालविका—नायिका ।
१४ इरावती—अग्निमित्रस्य भोगिनी भार्या ।
१५ निपुणिका—इरावत्याश्चेटी ।
१६ चन्द्रिका—इरावत्या द्वितीया चेटी ।
१७ उद्यानपालिका—मधुकरिकासंज्ञा ।
१८ समाहितिका—परिव्राजिकायाः परिचारिका ।
१९ प्रतिहारी—जयसेनासंज्ञा ।
२० सारसः ( सिकः )—धारिण्याः परिचारकः कुब्जः ।
२१ मदनिका—विदर्भराजेनोपदीकृता शिल्पकारिका ।
२२ ज्योत्स्निका—इयमपि तथैव ।

---

१ अत्र सूत्रधारात्कञ्चुकिनं यावदुक्तमानि तद्भिन्नानि च नीचपात्राणि इत्यान्ध्रादर्शे ।

॥ श्रीशिवः शरणम् ॥

अथ

बालबोधिन्याख्यव्याख्यासंवलितं

# मालविकाग्निमित्रम् ।

## प्रथमोऽङ्कः ।

एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद्यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥ १ ॥

---

भूयः प्रणम्य चरणौ शशिशेखरस्य
अश्यत्तमःप्रसरमङ्घ्रियुगं गुरोश्च ।
व्याख्यामि शिष्यजनबुद्धिसुखस्य हेतोः
श्रीकालिदासकृतमालविकाग्निमित्रम् ॥ १ ॥
प्रायेण संशयोच्छित्त्यै कोशव्याकरणादिकम् ।
यथास्थानमविस्तीर्णं सप्रमाणं निवेश्यते ॥ २ ॥

अथ तत्रभवान् महाकविः श्रीकालिदासः "नाटकान्तं कवित्वम्" इति कवित्वस्य नाटकान्तत्वमवगच्छन् मालविकाग्निमित्रं नाम नाटकं चिकीर्षुस्तस्याविघ्नपरिसमाप्त्यै शिष्टाचारप्राप्तं मङ्गलं नान्दीरूपं प्रबन्धादौ निबध्नाति—एकैश्वर्य इति ॥ प्रणतानां नम्राणां भक्तानां बहूनि फलानि सुखावाप्त्यादीनि यस्मात् तादृशे । एकैश्वर्ये एकं श्रेष्ठं यदैश्वर्यम् ईश्वरत्वं तत्र स्थितोऽपि तेन युक्तोऽपीत्यर्थः । अत्र अपिशब्दस्यार्थो विरोधः । यः स्वयं कृत्तिवासाः कृत्तिः गजचर्मैव वासः वस्त्रं यस्य तथाभूतः । अनेन निष्किंचनत्वं

द्योत्यते। तथा च ईश्वरत्वाकिंचनत्वयोर्विरुद्धधर्मयोरेकत्र समावेशाद्विरोधस्य ईश्वरे सर्वसम्भवात् परिहारः। एवम् उत्तरत्रापि। कान्तया संमिश्रो मिलितो देहो यस्य तथाभूतोऽपि अर्धनारीनटेश्वरोऽपि यः अविषयमनसाम् अविषयाणि विषयेभ्य उपरतानि इन्द्रियाणि येषां तथाभूतानाम्। " कोशलोपरमेषु च " इति नञर्थे मेदिनी। यतीनां योगिनां परस्तात् परः " दिक्शब्देभ्यः प्रथमा" इत्यादिना प्रथमार्थे अस्तातिः। सन्निहितकान्तोऽपि जितेन्द्रियवर्य इति प्रभावातिशयो गम्यते। अष्टाभिः तनुभिः " भूर्जलं वह्निराकाशं वायुर्यज्वा शशी रविः। " इत्युक्ताभिरष्टमूर्तिभिः करणभूताभिः कृत्स्नं सर्वमपि जगद्बिभ्रतो धारयतो यस्य नाभिमानः न गर्वः भवतीति शेषः। अत्र अपिर्भिन्नक्रम इति कृत्स्नपदस्योत्तरं योज्यः। परे त्वस्य विरोधार्थकतामेवाहुः। स ईशः शिवः कर्ता वः युष्माकं कर्तरि षष्ठी। सन्मार्गालोकनाय सतः साधोर्मार्गस्य धर्माचारादिरूपस्य आलोकनाय विलोकनार्थम्। यद्वा। सतां साधूनां मार्गं आचारस्तस्यालोचनाय। वः इति काकाक्षिगोलकन्यायेनोभयत्रापि योज्यम्। वः युष्माकं तामसीं तमोगुणमयीमज्ञानात्मिकां वृत्तिं चित्तस्य धर्मं व्यपनयतु दूरीकरोतु। " आशिषि लोट्।" तमसः ज्ञानप्रतिबन्धकत्वात्तस्य दूरीकरणेन ज्ञानं प्रयच्छत्विति भावः। अत्र प्रतिचरणं विरुद्धयोर्धर्मयोरेकत्र समावेशाद्विरोधालङ्कारः। तल्लक्षणं तु साहित्यरत्नाकरे सप्तमतरङ्गे। " आभासत्वे विरोधस्य विरोधालङ्कृतिर्मता। " इति। स च आशीरलङ्कारेण तल्लक्षणम्। " आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा। " इति दण्डी प्राह। संसृष्टः तृतीयपादेऽभिमानहेतोः सकलजगद्धरणस्य सत्वेऽप्यभिमानानुत्पत्तेस्तत्र च ईश इति हेतोरुपादानाच्च उक्तनिमित्तो विशेषोक्तिरलङ्कारः। तदुक्तं दर्पणे। " सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा। " इति। एतेषां च परस्परानपेक्षतया संसृष्टिः। " मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते। " इति।

( नान्द्यन्ते ) १

सूत्रधारः—(नेपथ्याभिमुखमवलोक्य) मारिष ! इतस्तावत्॥ २

( प्रविश्य )

पारिपार्श्वकः—भाव ! अयमस्मि ॥ ३

सूत्रधारः—अभिहितोऽस्मि विद्वत्परिषदा कालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्यमिति । तदारभ्यतां सङ्गीतम् ॥ ४

---

स्रग्धरा वृत्तम् । " म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम् । " इत्युक्तेः ॥ १ ॥

१ नान्दी सूत्रधारेण कर्तव्यं पूर्वरङ्गस्याङ्गम् । " प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ॥ " अस्याः स्वरूपं च । " आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥" इति दर्पणे । पदादिनियमस्तु वा इति काटयवेमः ॥

२ सूत्रधारः सूत्रधारसदृशः स्थापको नटविशेषः । " पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते । प्रविश्य स्थापकस्तद्वद्रङ्गमास्थापयेत्ततः ॥ " इत्युक्तेः । नेपथ्यं जवनिकान्तरितं पात्राणां भूमिकापरिग्रहस्थानम्।मारिष सूत्रधारेण पारिपार्श्वको मारिष इति संबोधनीय इति पारिपार्श्वकस्य संबुद्धिरियम् । " सूत्रधारो मारिषेति " इति दर्पणे। तावत्सत्वरम् । आगम्यतामिति शेषः । "तावन्मानेऽवधारणे । संभ्रमे च " इति मेदिनी ॥

३ पारिपार्श्वकः प्रस्तावनायां सूत्रधारेण सह संलापकारी नटविशेषः।भाव विद्वन् ! " भावो विद्वान् " इत्यमरः । "सूत्रधारं वदेद्भाव इति वै पारिपार्श्वकः । " इति साहित्यदर्पणे ॥

४ परिषदा सभया कर्त्र्या । अभिहितोऽस्मि उक्तोऽस्मि । किं तद्वचनमित्याह । कालिदासेति । कालिदासेनेतः पूर्वं १९५७ वत्सरे

पारिपार्श्वकः—मा तावत् । प्रथितयशसां धावकसौमिल्लक-विपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य कृतौ[3] कथं बहुमानः ॥ १

वर्तमानेन विक्रमसभापण्डितेन कविना ग्रथितं गुम्फितं संदृब्ध-मित्यर्थः । वस्तु इतिवृत्तं यत्र तथाभूतम् । " वस्तु तत्स्यात्प्रब-न्धस्य शरीरं कविकल्पितम् । इतिवृत्तं तदेवाहुः " इति भावप्रकाशे । मालविकाग्निमित्रं मालविकासहितमग्निमित्रमधिकृत्य कृतं शाकपा-र्थिवादित्वात्समासे " अधिकृत्य कृते ग्रन्थे " इत्यण् । अन्यथा हि "शिशुक्रन्द" इत्यादिना छः स्यात् । नाम प्रसिद्धौ । " नायिका-नायकाख्यानां संज्ञाप्रकरणादिषु । " इत्युक्तेः । मालविकाग्निमित्र-मिति नाटकसंज्ञा । नाटकं ख्यातवृत्तो रूपकभेदः । तल्लक्षणं सा-हित्यदर्पणे । " नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् । विलासर्ध्यादिगुणवद् युक्तं नानाविभूतिभिः ॥ सुखदुःखसमुद्भूति-नानारसनिरन्तरम् । पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः ॥ प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् । दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ एक एव भवेदङ्गी शृङ्गारो वीर एव वा । अङ्गमन्ये रसाः सर्वे कार्यनिर्वहणेऽद्भुतम् ॥ चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः । गोपुच्छाग्रसमानं तु बन्धनं तस्य कीर्ति-तम् ॥ " इति । प्रयोक्तव्यम् अभिनेतव्यम् । अभिनयश्चोक्तः सा-हित्यदर्पणे । " भवेदभिनयोऽवस्थानुकारः" इति । " नटै रङ्गादि-भिर्युधिष्ठिरादीनामवस्थानुकरणमभिनयः " इति च । सङ्गीतं गीत-नृत्यवाद्यानि । " गीतं नृत्यं च वाद्यं च त्रयं सङ्गीतमुच्यते । " इति सङ्गीतरत्नाकरे ॥

१ मा तावदिति । तावदवधारणे मा निषेधे । मालविकाग्निमि-त्रमिति निर्धारणं न कर्तव्यमित्यर्थः । कुत इत्याह । धावकेत्यादि ।

१ भास । २ क्रियायाम् । ३ किंकृतौ ।

सूत्रधारः—अयि ! विवेकविश्रान्तमभिहितम् । पश्य ॥ १

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥२॥

---

त्रय इमे प्राचीनाः कवयः । ननु तेऽपि कालिदासाविशेषा एव । तत्को बाधोऽस्य प्रयोग इत्यत आह । प्रथितयशसामिति । प्रथितयशसां विस्तीर्णकीर्तीनाम् । "प्रथ विस्तारे" क्तः । तेन कालिदासस्य तदानीमप्रथितकीर्तित्वं गम्यते । तेषां श्रेष्ठत्वे क्तप्रत्ययसूचितं प्राचीनत्वमपि हेतुः । अतिक्रम्य अवमत्य । वर्तमानो विद्यमानः । इदमेव बहुमानाविषयत्वे बीजम् । "नवीनकविकाव्ये चेज्जागर्ति रसशालिता । पाग्भिद्रतरोर्मूले किं न स्यात्काणितोदयः ॥" इत्युक्तेः ॥

१ विवेकः विश्रान्तोऽवसितो यस्मिन् कर्मणि तद्यथा तथा अभिहितं प्रोक्तं त्वयेति शेषः ॥

विवेकशून्यत्वं प्रतिपादयति—पुराणमिति ॥ सर्वं काव्यं पुराणं प्राचीनम् इति हेतोरेव न साधु न समीचीनम् । न चापि नवं नवीनमिति हेतोः अवद्यं गर्ह्यं भवतीति शेषः । "अवद्यपण्य" इति निपातनात् साधु । काव्यस्य साधुत्वे तदितरत्वे च न पुराणत्वं नवीनत्वं वा हेतुः किन्तु सगुणत्वं निर्गुणत्वं चेति भावः । काव्यलक्षणं साहित्यदर्पणे । "वाक्यं रसात्मकं काव्यम्" इति । सन्तः गुणदोषविवेकक्षमा विद्वांसः परीक्ष्य समालोच्य उभयमिति शेषः। अन्यतरत् उभयोरेकं श्रेष्ठत्वेन निर्णीतम् । "अद्ड्डतरादिभ्यः" इत्यद्डादेशः। भजन्ते सेवन्ते स्वीकुर्वत इत्यर्थः। मूढः गुणदोषविवेचनाक्षमो मूर्खः तु इति गम्यम् । परप्रत्ययेन अन्यस्य प्रत्ययेन साधुत्वासाधुत्वानुभवेन नेया वर्तनीयेति

---

१ श्रासतं दुर्बलमिति काटयवेमो व्याचख्यौ । भासो भासनामा कविः । "यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो भासो हासः कविकुलगुरुः कालिदासो विलासः ।" इत्युक्तः । स च कदा समुत्पन्न इति तत्वतो न ज्ञायते ।

**पारिपार्श्वकः**—आर्यमिश्राः प्रमाणम् ॥ १

**सूत्रधारः**—तेन हि त्वरतां भवान् ॥ २

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्तुम् ।
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ ३ ॥

( इति निष्क्रान्तौ । )

---

यावत् । बुद्धिर्यस्य तथाभूतः । आत्मनोऽक्षमत्वात्परनिर्णीतमेव प्रमाणीकृत्य वर्तमान इत्यर्थः । भवतीति शेषः । तथा च बहुमाने सत्त्वमेव प्रयोजकं न तु प्राचीनत्वम् अत एव प्रेक्षावतामत्र प्रवृत्तिः साहजिकीति भावः। उपजातिवृत्तं तल्लक्षणं श्रुतबोधे। "यत्र द्वयो-रप्ययेनयोस्तु पादा भवन्ति सीमन्तिनि चन्द्रकान्ते । विद्वद्भिराद्यैः परिकीर्तिता सा प्रयुज्यतामित्युपजातिरेषा ॥ " इति ॥ २ ॥

१ आर्यमिश्रा इति । आर्यश्रेष्ठा इत्येके । षट्शास्त्रवेत्तारो मिश्रा-स्तादृशा आर्याः । आर्यलक्षणं शब्दस्तोममहानिधौ । " कर्तव्य-माचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः ॥ " इति प्रमाणं सदसद्विवेकित्वे तेषामेव प्रामाण्यमि-ति भावः। एतावताऽत्राभिनये श्रोतॄणां प्रवृत्तेरुन्मुखीकरणात्प्ररोचना नाम भारती वृत्तेरङ्गमुक्तम् । तल्लक्षणं तु " ....अत्रोन्मुखीकारः प्रशंसातः प्ररोचना । " इति ॥

२ तेन हि तर्हीति यावत् । त्वरतां त्वरां करोतु । सङ्गीतारम्भ इति शेषः ॥

**शिरसेति** ॥ शिरसा मूर्ध्ना प्रथमगृहीताम् आदौ गृहीतां स-बहुमानमङ्गीकृतामिति भावः । परिषदः सभायाः कर्तरि षष्ठी । आज्ञां मालविकाग्निमित्रप्रयोगरूपमादेशं कर्तुम् इच्छामि। कथमिवे-त्याह । अयमित्यङ्गुलीनिर्देशे । देव्याः कृताभिषेकाया राजभार्यायाः धारिण्या एतन्नामायाः परिजनः सेवकलोक इव । अनेन बकुला-

---

१ इन्द्रवज्रोपेन्द्रवज्रयोः ।

## इति प्रस्तावना । १

( ततः प्रविशति बकुलावलिका । ) २

बकुलावलिका—आणत्तह्मि देवीए धारिणीए । अइरप्पवुत्तोवदेसं छलिअं णाम णट्टअं अन्तरेण कीरिसी मालविअ त्ति णट्टाअरिअं अज्जगणदासं पुच्छिदुं ता दाव संगीदसालं गच्छम्हि ॥ ( आज्ञप्ताऽस्मि देव्या धारिण्या । अचिरप्रवृत्तोपदेशं छलिकं नाम नाट्यमन्तरेण कीदृशी मालविका इति नाट्याचार्यं आर्यगणदासं प्रष्टुम् । तत्तावत् सङ्गीतशालां गच्छामि ) ॥ ३

---

वलिकायाः प्रवेशः सूच्यते । "देवी कृताभिषेकायाम्" इत्यमरः । आर्या जातिः । तल्लक्षणं श्रुतबोधे । "यस्याः प्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या ॥" इति ॥ ३ ॥

१ प्रस्तावना तल्लक्षणं साहित्यदर्पणे । "नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥" इति । तस्याश्चात्र अवलगितं नाम भेदः । तल्लक्षणं तु "यत्रैकत्र समावेशात्कार्यमन्यत् प्रसाध्यते । प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥" इति ॥

२ ततः सूत्रधारनिष्क्रमणानन्तरम् । बकुलावलिका एतन्नामा राज्ञ्याः दासी । वसन्ते बकुलावल्याः वर्ण्यतया अस्या बकुलावलीति नाम कृतं कविना । "चेटचेट्योस्तथा पुनः । वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ॥" इत्युक्तेः । एवमन्यत्राप्यूह्यम् ॥

३ अचिरात् प्रवृत्त आरब्ध उपदेशः प्रयोगशिक्षा यस्य तत्

---

१ अचिरोवणीदा छलिअणाम णट्टअअंतरे उपदेसग्गहणे । ( अचिरोपनीता छलिकनामनाट्यान्तरे उपदेशग्रहणे ।

( ततः प्रविशत्याभरणहस्ता द्वितीया चेटी । ) १

प्रथमा–( द्वितीयां दृष्ट्वा ) हला कोमुदीए ! कुदो दाणीं इअं दे धीरदा ? जं समीए वि अदिक्कमन्ती इदो दिट्ठिं ण देसि ॥ ( हला कौमुदिके ! कुत इदानीमियं ते धीरता ? यत्समीपेऽपि अतिक्रामन्ती इतो दृष्टिं न ददासि ) ॥ २

द्वितीया–अम्भो बउलावलिआ । सहि ! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अंगुलीअअं सिणिद्धं णिभालअंती तुह उवालंभे पडिदम्हि ॥ ( अम्भो बकुलावलिका । सखि ! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निभालयन्ती तवोपालम्भे पतिताऽस्मि ) ॥ ३

---

छलिकं नाम नाट्यम् अन्तरेण मध्ये । " अन्तरान्तरेण युक्ते " इति द्वितीया । छलिकलक्षणं तु प्राह काटयवेमः । " तदेव छलिकं नाम साक्षाद्यदभिनीयते । व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम् ॥ " इति । मालविका एतस्य नाटकस्य नायिका । नाट्याचार्यं नाट्यशास्त्रगुरुम् । सङ्गीतशालां सङ्गीतशिक्षणगृहम् । परिक्रामति पर्यटति । " क्रमु पादविक्षेपे " लट् ॥

१ आभरणं हस्ते यस्याः सा आभरणहस्ता । आभरणमङ्गुलीयरूपम् । चेटी दासी । तत्र प्रथमा बकुलावलिका द्वितीया कौमुदिका ॥

२ हला इति सखीसंबोधनेऽव्ययम् । " हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति । " इत्यमरः । धीरता अचाञ्चल्यम् । प्रकृतविषयेऽतिमात्रासक्तिरित्यर्थः । अतिक्रामन्ती गच्छन्ती । ददासि क्षिपसि ॥

३ स्त्रीणामाश्चर्यसूचकम् अम्भो इत्यव्ययम् । नागमुद्रासनाथं नागमुद्रया सर्पविषहारकमणिखचितया नागस्याकृत्या सनाथं यु-

प्रथमा—( विलोक्य ) ठाणे सज्जदि दे दिट्ठी । इमिणा अंगुलीअएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो ॥ ( स्थाने सज्जति ते दृष्टिः । अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेशरेण कुसुमित इव तेऽग्रहस्तः ) ॥ १

द्वितीया—हला ! कहिं पत्थिदा सि ? ( हला ! कुत्र प्रस्थितासि ? ) ॥

प्रथमा—देवीए वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुम् । " उपदेसग्गहणे कीरिसी मालविए " त्ति ॥ ( देव्या वचनेन नाट्याचार्यमार्यगणदासं प्रष्टुम् । " उपदेशग्रहणे कीदृशी मालविका " इति ) ॥ २

द्वितीया—सहि ! ईरिसेण वावारेण असण्णिहिदा वि सा कहं भट्टिणा दिट्ठा ॥ ( सखि ! ईदृशेन व्यापारेण असन्निहितापि सा कथं भर्त्रा दृष्टा ? ) ॥ ३

---

क्तम् । अङ्गुलीयकम् अङ्गुलीभूषणम् । स्निग्धं निपुणं यथा तथा । निभालयन्ती पश्यन्ती । तव त्वत्कर्तृके । उपालम्भे निन्दायाम् ॥

१ स्थाने योग्यपदार्थे । " स्थाने तु करणार्थे स्याद्युक्तसादृश्ययोरपि । " इत्यव्ययवर्गे मेदिनी । सज्जति आसक्ता भवति । उद्भिन्नकिरणकेशरेण उद्भिन्नाः उद्गताः किरणा एव केशरं यत्र तेन । कुसुमित इव सञ्जातकुसुम इव । तारकादित्वादितच् । अग्रहस्तः हस्तस्याग्रम् । राजदन्तादित्वात्परनिपातः ॥

२ उपदेशस्य प्रयोगशिक्षायाः ग्रहणं स्वीकारः तत्र विषये ॥

३ ईदृशेन नाट्यशिक्षणरूपेण व्यापारेण कर्मणा हेतुना । असंनिहिता गणदासगृहावस्थित्या विप्रकृष्टा । भर्त्रा राज्ञा । नीचैः राजा भर्तेति वक्तव्यः । " भर्तेति चाधमैः " इत्युक्तेः ॥

**प्रथमा**—आं। सो जणो देवीए पासगदो चित्ते दिट्ठो ॥ ( आं। स जनः देव्याः पार्श्वगतः चित्रे दृष्टः ) ॥ १

**द्वितीया**—कहं विअ ॥ ( कथमिव ) ॥

**प्रथमा**—सुणाहि। चित्तसालं गदा देवी जदा पच्चग्गवण्णराअं चित्तलेहं आआरिअस्स पलोअन्ती चिट्ठदि। तहिं अन्तरे भट्टा उवट्ठिदो ॥ ( शृणु। चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्यस्यालोकयन्ती तिष्ठति। तस्मिन्नन्तरे भर्ता उपस्थितः ) ॥ २

**द्वितीया**—तदो तदो ॥ ( ततस्ततः ) ॥ ३

**प्रथमा**—उवआराणन्तरं एक्कासणोवविट्ठेण भट्टिणा चित्तगदाए देवीए परिअणमज्झगदं आसण्णपरिआरिअं पेक्खिअ देवी पुच्छिदा ॥ ( उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नपरिचारिकां दृष्ट्वा देवी पृष्टा) ॥ ४

---

१ आं जानासीत्यर्थः। "आं ज्ञाननिश्चयस्मृत्योः" इति मेदिनी। स जनः मालविका। पार्श्वगता समीपवर्तिनी ॥

२ चित्रशाला चित्रलेखनगृहम् "शाला द्रुस्कन्धशाखायां गृहगेहैकदेशयोः।" इति मेदिनी। देवी राजभार्या। प्रत्यग्रवर्णरागां प्रत्यग्रो नवीनः वर्णरागो वर्णरञ्जनं यस्यां तथाभूताम्। "प्रत्यग्रोऽभिनवो नव्यः" इत्यमरः। आचार्यस्य चित्रगुरोः कर्तरि षष्ठी। तेनालिखितामित्यर्थः। चित्रलेखां चित्रलिपिं चित्रलेखनमित्यर्थः। "लेखा लिपिराजिकयोर्मता" इति मेदिनी ॥

३ ततस्ततः तदनन्तरं किं वृत्तमित्यर्थः ॥

४ उपचारानन्तरम् अभ्युत्थानादिराजोचितस्योपचारस्य विधानानन्तरम्। एकासनोपविष्टेन एकस्मिन् देव्या आसनादभिन्ने आसने

द्वितीया—किं त्ति ॥ ( किमिति ) ॥ १

प्रथमा—अपुव्वा इअं दारिआ देवीए आसण्णा आलिहिदा किंणामहेए त्ति ॥ ( अपूर्वा इयं दारिका देव्या आसन्ना आलिखिता किंनामधेया इति ) ॥ २

द्वितीया—आकिदिविसेसे आअरो पदं करेदि । तदो तदो ॥ ( आकृतिविशेषे आदरः पदं करोति ततस्ततः ) ॥ ३

प्रथमा—तदो अवहीरिअवअणो भट्टा संकिदो देवीं पुणोवि अणुबंधिदुं पउत्तो । तदो कुमारीए वसुलच्छीए आअक्खिदं अज्ज एसा मालविए त्ति ॥ ( ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनरप्यनुबन्धुं प्रवृत्तः । ततः कुमार्या वसुलक्ष्म्या आख्यातम् । “ आर्य एषा मालविका ” इति ) ॥ ४

उपविष्टेन निषण्णेन । आसन्नपरिचारिकाम् आसन्ना समीपवर्तिनी परिचारिका सेविका ताम् ॥

१ किमिति केन प्रकारेणेत्यर्थः ॥

२ अपूर्वा नवीना । दारिका बालिका । दारकशब्दाट्टापि “ प्रत्ययस्थात्कात् ” इति इत्त्वम् । आसन्ना समीपगता । “आ + लिख् चित्रलेखने” नामधेयं नाम । “ नामरूपभागेभ्यः ” इति धेयः स्वार्थे ॥

३ आकृतिविशेषे आकारभेदे । आदरः गौरवं पदं स्थानं करोति । दर्शनमात्रेणापि रमणीयाकारविलोकनादरः साहजिक इति भावः ॥

४ अवधीरितवचनः अवधीरितं प्रत्युत्तरादानेन अवज्ञातं वचनं यस्य तथाभूतः । अत एव शङ्कितः “ यत् इयं न मामुत्तरयति तदत्र केनापि बलीयसा कारणेन भवितव्यम् ” इति सञ्जाता शङ्का वितर्को यत्र तथाभूतः । तारकादित्वात् इतच् । “ शङ्का त्रासे

द्वितीया–( सस्मितम् ) सरिसं खु एदं बालभाअस्स । तदो अवरं कहेहि ॥ ( सदृशं खल्वेतद्बालभावस्य । ततोऽपरं कथय ) ॥ १

प्रथमा–किं अण्णं । संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि ॥ ( किमन्यत् । साम्प्रतं मालविका सविशेषं भर्तुर्दर्शनपथात् रक्ष्यते ) ॥ २

द्वितीया–हला ! अणुचिट्ठ अत्तणो णिओअं । अहं वि एदं अंगुलीअअं देवीए उवणइस्सम् ॥ (हला ! अनुतिष्ठात्मनो नियोगम् । अहमपि एतदङ्गुलीयकं देव्यै उपनेष्यामि ) ॥ ( इति निष्क्रान्ता ) ३

---

वितर्के च ” इति मेदिनी । अनुबन्धुं कथान्तरप्रवृत्तामात्मनोऽभीष्टेन प्रश्नेन संबन्धुम् । वसुलक्ष्मीरिति कुमार्याः नाम ॥

१ सस्मितं स्मितेन हसितेन सहितं यथा तथा । देव्या गोपनीयोऽर्थोऽनया प्रकाशित इति स्मिते निमित्तम् । स्मितेन चास्या उत्तमप्रकृतित्वं गम्यते । तदुक्तं “ ज्येष्ठानां स्मितहसिते ” इति । तल्लक्षणं च भरते । “ ईषद्विकसितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः । अलक्षितद्विजं धीरमुत्तमानां स्मितं विदुः ॥ ” इति एतत् रहस्यप्रकाशनम् । सदृशं योग्यं साहजिकमिति यावत् ॥

२ सविशेषं विशेषेण आधिक्येन सहितं यथा तथा । पूर्वापेक्षयाऽधिकमित्यर्थः । दर्शनपथात् विलोकनमार्गात् । “ भीत्रार्थानाम् ” इति पञ्चमी । “ वाटः पथश्च मार्गश्च ” इति त्रिकाण्डशेषः । “ ऋक्पूरब्धूः पथाम् ” इति समासान्तः ओ वा ॥

३ नियोगं नियोज्यन्तेऽस्मिन्नियोगः । संदिष्टं कार्यम् । अनुतिष्ठ कुरु । देव्यै इति सम्प्रदानविवक्षायां चतुर्थी । अन्यथा ह्यकथितकर्मवाद्द्वितीया स्यात् । उपनेष्यामि दास्यामीति यावत् ॥

**प्रथमा**—(परिक्रम्यावलोक्य च) एसो णट्टाआरिओ संगीदसालादो णिग्गच्छदि । दावसे अत्ताणं दंसेमि ॥ (एष नाट्याचार्यः सङ्गीतशालातो निर्गच्छति । तावदस्यात्मानं दर्शयामि) ॥ (इति परिक्रामति) ॥ १

**गणदासः**—(प्रविश्य) कामं खलु सर्वस्यापि कुलविद्या बहुमता न पुनरस्माकं नाट्यं प्रति मिथ्यागौरवम् । तथा हि ॥ २

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम् ॥ ४ ॥

---

१ सङ्गीतशालातः गीतनृत्यवाद्यानां शिक्षणालयात् । निर्गच्छति बहिर्याति ॥

२ सर्वस्यापि सर्वैरपीत्यर्थः । कर्तरि षष्ठी । "मतिबुद्धिपूजार्थेभ्यश्च" इति वर्तमाने क्तप्रत्यये बहुमतेति सिद्धम् । ततश्च तद्योगे "क्तस्य च वर्तमाने" इति सर्वशब्दात्षष्ठी । कुलविद्या वंशक्रमागता विद्या । कामम् अत्यन्तं योग्यत्वाभावेऽपीति ध्वनिः । बहुमता मान्या । वस्तुत उत्तमां निकृष्टामपि वा कुलविद्यां सर्वेऽपि बहुमन्यन्ते । न चेयं निकृष्टेति ब्रुवते । वयं तु न केवलं कुलविद्येति नाट्यं प्रशंसामहे किन्तु वस्तुत एवेदं प्रशस्यतममित्याह । पुनःशब्दस्तु इत्यर्थे । अस्माकं तु नाट्यं प्रति मिथ्यागौरवम् असत्यं महत्त्वं न । वयं तु कुलविद्यात्वादेव नाट्यस्य साधुतां न ब्रूम इत्यर्थः । तथा हि मिथ्यागौरवाभावं प्रतिपादयति ॥

**देवानामिति** ॥ मुनयः नाट्यशास्त्रवेत्तारो भरतादयः । इदं नाट्यम् । देवानां शेषे षष्ठी । कान्तं सुन्दरं चाक्षुषं चक्षुर्ग्राह्यं क्रतुं

यागम् आमनन्ति कथयन्ति । अत्र शान्तमिति पाठो न शोभते चक्षुर्ग्राह्ये कान्तत्वस्यैवोचितत्वात् । क्रतुरिति नाट्यस्य महत्त्वातिशयो गम्यते । रुद्रेण सकलसुरनायकेन महेश्वरेणापि कर्त्रा । उमाकृत-व्यतिकरे उमया पार्वत्या कृतो व्यतिकरोऽर्धात्मकत्वरूपः संबन्धो यत्र तथाभूते स्वाङ्गे आत्मनः देहे । द्विधा द्विप्रकारेण विभक्तम् । रुद्रस्य अर्धमङ्गं स्त्री अर्धं च पुमान् तेन एकस्मिन्नेव शरीरे लास्यं स्त्रीनृत्यं ताण्डवं पुन्नाट्यम् इति नाट्यभेदद्वयस्यावस्थानम् । अत्र अस्मिन् नाट्ये । त्रैगुण्योद्भवं त्रयः सत्वरजस्तमोरूपा गुणा एव त्रैगुण्यम् । स्वार्थे ष्यञ् । तत उद्भव उत्पत्तिस्थानं यस्य तथाभूतम् अत एव नानारसं नाना अनेका रसाः शृङ्गारादयो यत्र तथाभूतम् । " नानाशब्दो विनार्थे च तथाऽनेकोभयार्थयोः । " इति मेदिनी । लोकचरितं लोकानां चरितं वृत्तम् । दृश्यते प्रत्यक्षं भवति । अत एव एकं नाट्यम् । भिन्नरुचेः भिन्ना अनेका रुचयोऽभिलाषाः यस्य तथाभूतस्य जनस्य बहुधा श्रोत्रमनोनेत्रादिप्रीतिजनकत्वाद-नेकप्रकारं समाराधनं सेवासाधनम् । अत्र प्रथमचरणे क्रत्वपेक्षया नाट्ये कान्तत्वचाक्षुषत्वरूपाधिकवैशिष्ट्यारोपणात् " अधिकारूढ-वैशिष्ट्यं नाम रूपकम् " । द्वितीये रुद्रकर्तृकेण विभागरूपेण कार्येण नाट्यस्य पारमार्थिकसत्त्वरूपं कारणं गम्यत इति । अप्रस्तुत-प्रशंसा । चतुर्थपादगते भिन्नरुचेर्जनस्य बहुधा समाराधनरूपेऽर्थे तृतीयपादगतं वाक्यं हेतुरिति वाक्यार्थगतहेतुकं काव्यलिङ्गमल-ङ्कार इति । तेषां परस्परनैरपेक्ष्येण अवस्थानात् संसृष्टिः । तल्लक्ष-णानि तु " अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत् ।" " कार्यान्नि-मित्तं कार्यं च हेतोरथ समात्समम् । अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ॥ अप्रस्तुतप्रशंसा स्यात् " । "हेतोर्वाक्यपदार्थत्वे काव्य-लिङ्गमुदाहृतम् । " इति च । शार्दूलविक्रीडितम् । " सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् । " इत्युक्तेः ॥ ४ ॥

बकुला—( उपेत्य ) अज्ज ! वन्दे ॥ ( आर्य ! वन्दे ) ॥

गणदासः—भद्रे चिरंजीव ॥

बकुला—अज्जं देवी पुच्छदि । " अवि उवदेसग्गहणे णअदिकिलिस्सदि वो सिस्सा मालविए ? " त्ति ॥ ( आर्यं देवी पृच्छति । " अपि उपदेशग्रहणे नातिक्लिश्यति वः शिष्या मालविका ? " इति ) ॥ १

गणदासः—भद्रे ! विज्ञाप्यतां देवी । " परमनिपुणा मेधाविनी च " इति । किं बहुना ॥ २

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला ॥ ५ ॥

---

१ अपीति प्रश्ने । उपदेशस्य गुरूपदिष्टस्याभिनयस्य ग्रहणे स्वीकारेऽवबोधे इति यावत् । वैषयिकाधारे सप्तमी । नातिक्लिश्यति नातिव्यथते । क्लेशमन्तरोपदेशं ग्रहीतुं शक्नोति वा इति भावः ॥

२ परमनिपुणा अत्यन्तकुशला । मेधाविनी बुद्धिमती । मालविकेत्यर्थात् " अस्मायामेधा " इति मत्वर्थे विनिः ॥

यद्यदिति ॥ मया तस्यै मालविकायै प्रयोगविषये नाट्यप्रयोगस्य विषये । यत् यत् भाविकं भावाय " वागङ्गमुखरागेण सान्त्वनाभिनयेन च । कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥ " इति भरतोक्तलक्षणाय हितम् अङ्गविक्षेपादि । वाचस्पतिरत्रार्थे ठकमाह । उपदिश्यते शिक्ष्यते । बाला अप्रौढाऽपि सा मालविका कर्त्री । बालापदं बुद्धिमत्त्वातिशयं द्योतयति । विशेषकरणात् शिक्षितापेक्षयाऽधिकप्रयोगकरणात् हेतोः । तत् तत् भाविकम् । मे मह्यं प्रत्युपदिशतीव प्रतिशिक्षयतीव इति वाच्याक्रियोत्प्रेक्षा । विशेषाऽभिज्ञोऽविशेषज्ञं शिक्षयतीति मालविकाया विशेषज्ञत्वात्प्रत्युपदेशोत्प्रेक्षा । आर्या जातिः तल्लक्षणं तृतीयपद्ये द्रष्टव्यम् ॥ ५ ॥

बकुलावलिका–( आत्मगतम् ) अदिक्कमन्ती विअ इरावदिं पेक्खामि ( प्रकाशम् ) किदत्था दाणिं वो सिस्सा जस्सिं गुरुअणो एवं तुस्सदि ॥ ( अतिक्रामन्तीमिवेरावतीं प्रेक्षे कृतार्था इदानीं वः शिष्या यस्यां गुरुजन एवं तुष्यति ) ॥ १

गणदासः–भद्रे ! तद्विधानामसुलभत्वात्पृच्छामि । कुतो देव्या तत् पात्रमानीतम् ? ॥ २

बकुलावलिका–अत्थि देवीए वण्णावरो भादा वीरसेणो णाम । सो भट्टिणा अन्तवालदुग्गे णम्मदातीरे ठाविदो । तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति बहिणीए देवीए उवाअणं पेसिदा ॥ ( अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । स भर्त्रा अन्तपालदुर्गे नर्मदातीरे स्थापितः । तेन शिल्पाधिकारे योग्या इयं दारिकेति भगिन्या देव्या उपायनं प्रेषिता ) ॥ ३

---

१ आत्मगतं स्वगतम् । " अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् । " इत्युक्तेः । प्रकाशम् " सर्वश्राव्यं प्रकाशं स्यात् " इत्युक्तलक्षणम् । इरावती अप्सरोविशेषः । अतिक्रामन्तीं गुणैरतिशयानामित्युत्प्रेक्षा । कृतार्था समाप्तेतिकर्तव्या । गुरुजनतोष एव हि शिष्यस्य कर्तव्यम् । यस्यामिति यस्यां विषये ॥

२ तद्विधानां मालविकासदृशीनां पात्रम् " तन्वी रूपवती श्यामा पीनोन्नतपयोधरा । प्रगल्भा सरसा चित्रा कुशला ग्रहमोक्षयोः ॥ चारुताललयाभिज्ञा मण्डलादिविचक्षणा । नातिस्थूला नातिकृशा नात्युच्चा नातिवामना ॥ सुदीर्घलोचना गीतवाद्यतालानुवर्त्तिनी । पराघ्र्यभूषासंपन्ना प्रसन्नमुखपङ्कजा ॥ भावहावविलासाढ्या नर्तकी स्याज्जितश्रमा । नर्तकीं पात्रमित्याहुर्गुणाधारतया बुधाः ॥ " इत्यभिज्ञानशाकुन्तलस्य लास्याख्यव्याख्यायां श्रीनिवासाचार्याः ॥

३ वर्णतः ब्राह्मणादिभावेन अवरः भ्राता । युगान्तरे हि उत्तम-

**गणदासः**—( स्वगतम् ) आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां संभावयामि । ( प्रकाशम् ) भद्रे ! मयाऽपि यशस्विना भवितव्यम् । यतः ॥ १

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ ६ ॥

**बकुलावलिका**—अज्ज ! कहिं दाणिं वो सिस्सा ? ॥ ( आर्य ! कुत्रेदानीं वः शिष्या ? ) ॥

---

वर्णा हीनवर्णकन्यका अपि भार्यात्वेन स्वीकुर्वते स्म । तत्र देव्याः पितुर्हीनवर्णभार्यायाः सकाशाज्जातो वीरसेन इति स देव्या वर्णावरो भ्राता । अन्तपालदुर्गे अन्तपालस्य राज्यसीमापालस्य दुर्गे । शिल्पाधिकारे शिल्पस्य कलादिकर्मणः अधिकारो व्यवस्था । तत्र "शिल्पं कर्म कलादिकम्" इति । "प्रक्रिया त्वधिकारः स्यात्" इति चामरः । "अधिकारो व्यवस्थापनम्" इति महेश्वरः । उपायनम् उपहारः ॥

१ आकृतिविशेषप्रत्ययात् आकृतौ अवयवसन्निवेशे यो विशेषः वैलक्षण्यं तस्य प्रत्ययादनुभवात् । एनां मालविकाम् । अनूनवस्तुकाम् अनूनम् उत्तमं वस्तु कुलादिकं यस्यास्तथाभूताम् । संभावयामि तर्कयामि । यशस्विना कीर्तिमता । "अस्माया" इति विनिः । उत्तमशिष्यसंक्रान्तगुणा हि गुरवः कीर्तिमन्तो भवन्ति । तेन निपुणतरयाऽनया शिष्ययाऽहमपि कीर्तिमान् भविष्यामीत्यर्थः ॥

**पात्रविशेष इति**॥ आधातुः विन्यासकर्तुः शिक्षकस्य शिल्पं कर्तृ । पात्रविशेषे उत्तमपात्रे । पात्रं गुरुशिक्षितगुणाधारतया शिष्य एव । न्यस्तं स्थापितं सत् । गुणान्तरम् अन्यं गुणम् उत्तमगुणत्वमित्यर्थः । याति प्राप्नोति । समुद्रशुक्तौ न्यस्तम् । पयोदस्य मेघस्य जलं मुक्ताफलतां मौक्तिकत्वमिव । पूर्णोपमालङ्कारः । तदुक्तं दर्प-

गणदासः—इदानीमेव पञ्चाङ्गादिकमभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति ॥ १

बकुलावलिका—तेन हि अणुजाणादु मं अज्जो । जाव से अज्जपरितोसणिवेदणेण उस्साहं वड्ढेमि ॥ ( तेन हि अनुजानातु मामार्यः। यावदस्या आर्यपरितोषनिवेदनेन उत्साहं वर्धयामि)॥ २

गणदासः—दृश्यतां सखी । अहमपि लब्धक्षणः स्वगेहं गच्छामि । ( निष्क्रान्तौ ) ॥ ३

---

णे। "सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च। उपमेयं चोपमानं भवेद्वाच्यम्" इति। सा चात्र श्रौती। "श्रौती यथेववा शब्दा इवार्थो वा वतिर्यदि । " इति । आर्या जातिः लक्षणं तृतीयपद्ये ॥ ६ ॥

१ पञ्चाङ्गादिकम् " चित्ताक्षिभ्रूहस्तपादैरङ्गश्लेषादिसाम्यतः । पात्राद्यवस्थाकरणं पञ्चाङ्गोऽभिनयो मतः ॥ " इत्युक्तलक्षणम् । अत्रादिपदेन " आङ्गिको वाचिकश्चैवमाहार्यः सात्विकस्तथा । " इति चतुरङ्गकोऽपि ग्राह्य इति वाचस्पतिः । काटयवेमस्तु पञ्चाङ्गमिति पठित्वा तच्च प्रेरणमिति व्याख्याय " नृत्तं तथा च कैवारो मर्मरो जागरं तथा । गीतं चेति समाख्यातं प्रेरणस्याङ्गपञ्चकम् ॥" इति तस्याङ्गान्याह । एतेन छलिकं साकल्येन परिशीलितमिति सूच्यते । दीर्घिकेति । दीर्घिकायाः वाप्याः अवलोकनं यस्मात् तथाभूते गवाक्षे वातायने गता विद्यमाना । प्रवातं प्रकृष्टं वायुम् ॥

२ अनुजानातु आज्ञां ददातु । आर्यपरितोषनिवेदनेन आर्यस्य भवतो गणदासस्य यः परितोषः शिष्यानैपुण्यावलोकनजो हर्षः तस्य तत्कर्मकेण निवेदनेन । उत्साहं शिक्षणौत्सुक्यम् ॥

३ लब्धक्षणः लब्धः प्राप्तः क्षणो विश्रान्तिर्येन तथाभूतः। "निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः । " इत्यमरः ॥

## मिश्रविष्कम्भकः । १

( ततः प्रविशति एकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्यमानो राजा ) ॥ २

**राजा**—( अनुवाचितलेखममात्यं विलोक्य ) वाहतक ! किं प्रतिपद्यते वैदर्भः ? ॥ ३

**अमात्यः**—देव ! आत्मविनाशम् ॥ ४

---

१ मिश्रः संकीर्णः विष्कम्भकः अर्थोपक्षेपकविशेषः । तल्लक्षणं यथा । " वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ मध्येन मध्यमाभ्यां वा पात्राभ्यां संप्रयोजितः। शुद्धः स्यात्स तु संकीर्णो नीचमध्यप्रयोजितः॥ " इति। तत्र वृत्तः कथांशो राज्ञा मालविकादर्शनादि । वर्तिष्यमाणस्तु यशस्विना भवितव्यमिति सूचितः हरदत्तकलहरूपः । नीचं पात्रं बकुलावलिका कौमुदिका च मध्यस्तु गणदास इति ॥

२ तत इति । अत्रेदमिति वृत्तमवबोध्यम् । " मालवाधिपतिर्माधवसेनो नाम आत्मनो भगिन्या वरत्वेन अग्निमित्रं स्थिरीकृत्य विवाहं निष्पादयितुकाम आगच्छन् पथि तस्यैव पितृव्यपुत्रेण विदर्भाधिपेन अवरुध्य कारागारे स्थापितः । तं च मुञ्च इति अग्निमित्रः विदर्भाधिपाय पत्रं प्रेषयामास ।इदानीं च तेन प्रहितं तस्योत्तरमालोच्यते " इति एकान्तस्थितपरिजनः । एकान्ते स्थिताः परिजनाः सेवका यस्य तथाभूतो राजा । लेखहस्तेन लेखः पत्रं हस्ते यस्य तेन । मन्त्रिणा अमात्येन । अन्वास्यमानः पश्चादुपवेशनेन सेव्यमानः । " अन्वासितमरुन्धत्या " इतिवत् । अनुपूर्वस्य आस्तेः सकर्मकत्वम् इति वाचस्पतिः ॥

३ वाहतक इति मन्त्रिणो नाम । वैदर्भः विदर्भाणां देशविशेषाणामीश्वरः । " तस्येश्वरः " इत्यण् । प्रतिपद्यते अङ्गीकरोति ॥

४ आत्मविनाशम् आत्मनो विनाशे हेतुं वक्ष्यमाणमभिसन्धिमित्यर्थः ॥

राजा—निदेशमिदानीं श्रोतुमिच्छामि ॥ १

अमात्यः—इदमिदानीमनेन प्रतिलिखितम् । पूज्येनाहमादिष्टः । पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रतिश्रुतसंबन्धो ममोपान्तिकमुपसर्पन् अन्तरा त्वदीयेनान्तपालेनावस्कन्द्य गृहीतः । स त्वया मदपेक्षया सकलत्रसोदर्यो मोक्तव्य इति तत्र वो न विदितम् ? यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदरा पुनरस्य ग्रहणविप्लवे नष्टा तदन्वेषणाय यतिष्ये । अथ अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः । श्रूयतामभिसन्धिः ॥ २

---

१ निदेशम् उत्तरम् । "दिशिरुच्चारणक्रियः" इत्युक्तेः । तदेव हि इदानीं वैदर्भस्योच्चार्यम् ॥

२ इदं वक्ष्यमाणम् । अनेन वैदर्भेण । लिखितमाह । पूज्येनेति । पूज्येन संमाननीयेन भवतेत्यर्थः । अहं वैदर्भः । आदिष्ट आज्ञप्तः । आदेशमनुवदति । मोचयितव्य इत्यन्तेन । पितृव्यपुत्र इति । अग्निमित्रेण वैदर्भाय प्रहितस्य पत्रस्यानुवादोऽयम् । अतोऽत्र युष्मदर्थकः शब्दो वैदर्भवाचकः । भवतः वैदर्भस्य पितृव्यपुत्रः पितुर्भ्रातुः पुत्रः । कुमार इति स्वस्मात्कनीयस उपपदम् । माधवसेनो मालवाधिपतिः पुरुषविशेषः । प्रतिश्रुतसंबन्धः प्रतिश्रुतः अङ्गीकृतः संबन्धः मह्यं स्वसोदर्याः प्रदानेन संपादनीयः सुहृत्त्वरूपो येन तथाभूतः सन् । मम अग्निमित्रस्य । उपान्तिकं समीपम् । उपसर्पन् आगच्छन् । अन्तरा मार्गस्य मध्ये । त्वदीयेन त्वं वैदर्भः तस्य संबन्धिना । अन्तपालेन राज्यस्य पर्यन्तरक्षिणाऽधिकारिविशेषेण कर्त्रा । अवस्कन्द्य निगृह्य । त्वया वैदर्भेण । मदपेक्षया ममाग्निमित्रस्य अपेक्षया अनुरोधेन । सकलत्रसोदर्यः कलत्रं भार्या सोदर्या भगिनी च ताभ्यां सहितः । " कलत्रं श्रोणिभार्ययोः । समानोदर्यसोदर्य " इत्युभय-

आर्यसचिवं विमुञ्चति यदि पूज्यः संयतं मम श्यालम् ।
मोक्ता माधवसेनस्ततो मया बन्धनात्सद्यः ॥ ७ ॥ इति ।

---

त्राप्यमरः । इति आदेशानुवादसमाप्तौ । अतः परं युष्मच्छब्दार्थकः शब्दोऽग्निमित्रवाची । अस्मदर्थस्तु वैदर्भवाचीति ध्येयम् । तत्र मोचनविषये वो युष्माकं गौरवे बहुत्वं न विदितम् अवगतम् । " मतिबुद्धि " इति क्तः । " क्तस्य च वर्तमाने " इति षष्ठी । अत्र काक्का प्रश्नो व्यज्यते । इदं वक्ष्यमाणम् । यत् वेद्यम् । तुल्याभिजनेषु समानवंशेषु । " कुलान्यभिजनान्वयौ । वंशः " इत्यमरः । भूमिधरेषु राजसु राज्ञां वृत्तिर्वर्तनं व्यवहार इत्यर्थः । यद्वा वृत्तिर्जीवनम् । स्वसमानवंशीयं राजानं निर्जित्यैव सम्पाद्यते भूपैर्वृत्तिरित्यर्थः । तथा च माधवसेनोऽस्माकं समानवंश इति तेन सहास्माकं वैरं साहजिकमिति भावः । अतो हेतोः अत्र अस्मिन् विषये मध्यस्थः मध्ये उभयपक्षसाहाय्यस्याभावे तिष्ठति तथाभूत उभयत्रापि समान इत्यर्थः । भवितुम् अर्हति योग्यो भवति । यदि तु भवते प्रतिश्रुताया माधवसेनसोदर्याः पाणिग्रहणार्थमेवायं यत्नस्तदा स निष्फल इत्याह । सोदरीति । पुनःशब्दस्त्वर्थे । अस्य माधवसेनस्य सोदरा भगिनी तु ग्रहणविप्लवे ग्रहणे माधवसेननिरोधे यः विप्लवो लुण्ठनादिसंमर्दस्तत्र विनष्टा तिरोभूता । यदि तु माधवसेनपक्षपातित्वमेव रोचते तदा प्राह । अथेति । अथ यदीत्यर्थे । पूज्येन मान्येनभवताऽग्निमित्रेण प्रयोजककर्त्रा । मया कर्त्रा । मोचयितव्यः बन्धमोक्षं प्रापणीयस्तदा अभिसन्धिः कार्यविनिमय इति यावत् । अभिमुखः सन्धिः पणः उद्देश्यो वेति वाचस्पतिः । यदि भवानेवं कुर्यात्ततोऽहमपि एवं कुर्यामिति परकार्यानुष्ठाने यत्स्वकार्यविधानं नैमित्तिकतया निर्दिश्यते सोऽभिसन्धिः । तमेवाह ॥

आर्येति ॥ पूज्यः भवान् अग्निमित्रः कर्ता । संयतं त्वयैव निगृहीतम् । आर्यसचिवम् आर्यं श्रेष्ठं सचिवममात्यम् । अत्र मौर्यसचिवमिति पाठे मौर्यनामानं सचिवमिति काटयवेमः । मम श्यालं पत्न्याः

**राजा**—( सरोषम् ) कथं कार्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः। वाहतक! प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः। तद्यातव्यपक्षे स्थितस्य पूर्वसंकल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्रमाज्ञापय ॥ १

**अमात्यः**—यदाज्ञापयति देवः ॥ २

---

भ्रातरम्। "श्यालाः स्युर्भ्रातरः पत्न्याः" इत्यमरः। यदि मुञ्चति। ततः तदा मया वैदर्भेण कर्त्रा। माधवसेनः कर्मभूतः सद्यः तत्कालमेव बन्धनात् निगडात् मोक्ता मोक्ष्यते। "मुच्लृ मोक्षणे" इत्यतः कर्मणि लुट्। अत्र "मोक्ता माधवसेनं ततोऽहमपि बन्धनात्सद्यः।" इति पाठे स्यामिति शेषोऽध्याहर्तव्यः। "मुच्लृ मोक्षणे" इत्यतस्तृन्। "तृन्" इति सूत्रेण तद्योगे च माधवसेन इत्यतः "न लोक" इति षष्ठीनिषेधः। अत एव द्वितीया कर्मणि। माधसेनं मोक्तुं शीलं यस्य तथा स्यामित्यर्थः। आर्या जातिः। तृतीयपद्ये लक्षणं द्रष्टव्यम् ॥ ७ ॥

१ कथं गर्हायाम्। "कथं हर्षे च गर्हायाम्" इति मेदिनी। अनात्मज्ञः आत्मानं न जानाति तथाभूतः। आत्मनो योग्यतानभिज्ञ इत्यर्थः। वैदर्भः। कार्यविनिमयेन कर्मणः परिवृत्त्या। मयि ममाग्निमित्रस्यापि विषये। मयीति शौर्यातिशयो गम्यते। व्यवहरति व्यवहारं करोति। स्वापेक्षया शूरेऽप्येवमाचारात्तस्यानात्मज्ञत्वम्। प्रकृत्यमित्रः प्रकृत्या स्वभावादेव अमित्रः शत्रुः। निसर्गशत्रुः। प्रतिकूलकारी अनिष्टकर्ता यातव्यपक्षे युद्धार्थमभिगन्तव्यानां वर्गे। पूर्वसंकल्पितसमुन्मूलनाय पूर्वमेव कृतसंकल्पं यत्समुन्मूलनं विध्वंसनं तदर्थम्। वीरसेनो देव्याः भ्राता मुखः प्रधानपुरुषो यत्र तत्। दण्डचक्रं दण्ड्यते रिपुरेभिर्दण्डाः सैन्यानि तेषां चक्रं समूहः॥

२ राजाऽमात्यादिभिर्देव इति वक्तव्यः। तदुक्तं भरतेन। "देवेति नृपतिर्वाच्यो भृत्यैः प्रकृतिभिस्तथा।" इति ॥

राजा—अथवा किं भवान् मन्यते ? ॥ १

अमात्यः—शास्त्रदृष्टमाह देवः ॥ २

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ ८ ॥

राजा—तेन हि अवितथं तन्त्रकारवचनम् । इदमेव निमित्तमादाय समुद्योज्यतां सेनापतिः ॥ ३

अमात्यः—तथा ( इति निष्क्रान्तः । ) ॥ ४

[ परिजनो यथाव्यापारं राजानमभितः स्थितः ] ॥ ५

---

१ पक्षान्तरं पृच्छति । अथवा इति ॥

२ शास्त्रदृष्टं शास्त्रे नीतिविद्यायां दृष्टम् अत एव युक्तमित्यर्थः । आह ब्रवीति । " ब्रुवः पञ्चानाम् " इति तिपो णल् ब्रुवश्चाहः ॥

शास्त्रे किं दृष्टमित्याह—अचिरेति ॥ अचिराधिष्ठितराज्यः अचिरं नवीनम् अधिष्ठितमध्यासितं स्वीकृतमिति यावत् राज्यं राज्ञः कर्म येन स तथाभूतः । शत्रुः रिपुः प्रकृतिषु अमात्येषु । अरूढमूलत्वात् अरूढम् अदृढीभूतं मूलं वशीकारो यस्य तथाभूतत्वात् हेतोः । अनतिपरिचयादवशीकृतामात्य इत्यर्थः । " मूलं पार्श्वाद्ययोरुडौ । विकुञ्जशिफयोः स्वीये शिलायां च वशीकृतौ ॥ " इति हैमः । नवं नवीनं यत्संरोपणं तेन शिथिलः अदृढः तरुर्वृक्ष इव । सोऽप्यरूढमूल एव भवति । समुद्धर्तुम् उन्मूलयितुं सुकरः शक्यः पूर्णोपमालङ्कारः । आर्यालक्षणं तृतीयपद्ये व्याख्यायाम् ॥ ८ ॥

३ वितथम् असत्यं न भवतीत्यवितथम् । तन्त्रकाराः शास्त्रकाराः । इदमेव माधवसेनमोचनरूपमेव । आदाय अधिकृत्य समुद्योज्यतां युद्धार्थं गमनाय प्रवर्त्यताम् ॥

४ तथा इति राजोक्तस्याङ्गीकारे ॥

५ व्यापारः कर्म तदनतिक्रम्य यथाव्यापारम् । स्वस्वकर्मानुरूपमित्यर्थः ॥

**विदूषकः**—( प्रविश्य ) आणत्तो म्हि तत्तभवदा रण्णा । " गोदम ! चिंतेहि दाव उवाअं । जह मे जदिच्छादिट्ठप्पडिकिदी मालविआ पच्चक्खदंसणा होदि " त्ति । मए अ तं तहा किदं दाव से णिवेदेमि ॥ ( आज्ञप्तोऽस्मि तत्रभवता राज्ञा । " गौतम ! चिन्तय तावत् उपायम् । यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवति " इति । मयाऽपि तत् तथाकृतं तावदस्मै निवेदयामि ) ( इति परिक्रामति ) ॥ १

**राजा**—( विदूषकं दृष्ट्वा ) अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ॥ २

---

१ विदूषकः शृङ्गारे सहायः । तल्लक्षणं दर्पणे । यथा " कुसुमवसन्ताद्यभिधः कर्मवपुर्वेशभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः॥ " इति । आज्ञप्तोऽस्मि कृताज्ञोऽस्मि । तत्रभवता पूज्येन । अनेनाज्ञाकरणयोग्यत्वं ध्वन्यते । आज्ञास्वरूपं प्राह। गौतमेति। यदृच्छादृष्टप्रतिकृतिः यदृच्छया स्वैरितया दृष्टा प्रतिकृतिश्चित्रं यस्याः सा । " यदृच्छा स्वैरिता हेतुशून्ये " इत्यमरः । " प्रतिमा प्रतियातना प्रतिच्छाया।प्रतिकृतिः " इति च। प्रत्यक्षदर्शना प्रत्यक्षं समक्षम् इन्द्रियग्राह्यमित्यर्थः दर्शनं यस्याः तथाभूता । " प्रत्यक्षं स्यादैन्द्रियकम् " इत्यमरः । शरदादित्वाट्टच् समासान्तः । " दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ।" इति मेदिनी । अनेन दर्शनान्मालविकायां पूर्वरागः कथितः । " इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् । " इत्युक्तेः ॥

२ अपरः वाहतकाद्भिन्नः यद्वा परो न भवति तथाभूतः । मद्भिन्न इत्यर्थः । अनेन गुप्तकार्यनियोगयोग्यत्वं सूच्यते । कार्यान्तरे राजकीयभिन्नकार्ये सचिवः सहायः । " सचिवो मन्त्रिचेटयोः।सहाये च " इति मेदिनी । उपस्थितः प्राप्तः ॥

विदूषकः—( उपगम्य ) वड्ढदु भवम् ॥ ( वर्धतां भवान् )

राजा—( सशिरःकम्पम् ) इत आस्यताम् । ( विदू उपविष्टः ) ॥ १

राजा—कच्चिदुपेयोपायदर्शने व्यापृतं ते प्रज्ञाचक्षुः ? ॥ २

विदूषकः—पओअसिद्धिं पुच्छ ॥ ( प्रयोगसिद्धिं पृच्छ ) ॥ ३

राजा—कथमिव ? ॥ ४

विदूषकः—( कर्णे ) एव्वं ( एवमिव ) ( इत्यावेदयति ) ॥ ५ ॥

राजा—साधु वयस्य ! निपुणमुपक्रान्तम् । इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयं त्वाऽऽशंसामहे । कुतः ॥ ६

---

१ आस्यताम् उपविश्यताम् । कर्मणि लोट् ॥

२ उपेयस्य साध्यस्य मालविकासाक्षाद्दर्शनस्य उपायस्य साधनस्य दर्शने ज्ञाने व्यापृतं प्रसृतम् । प्रज्ञाचक्षुः बुद्धिरूपं नेत्रम् । कच्चिदिति प्रश्ने । " कच्चित्कामप्रवेदने । प्रश्न " इति मेदिनी । अपि जानासि कच्चिदुपायं मालविकादर्शने इति भावः ॥

३ प्रयोगसिद्धिं प्रयुज्यतेऽस्मै प्रयोगः कार्यम् । तस्य सिद्धिं मालविकादर्शनरूपां पृच्छ । न केवलमुपायं जानामि किन्तु मालविकादर्शनमपि कारयिताऽस्मीति भावः ॥

४ कथमिव केन प्रकारेण कार्यसिद्धिः ॥

५ प्रसङ्गादग्रे प्रकाशनीयं गोप्यं वस्तु कर्णे एवमिव इति कविभिः प्रयुज्यते । तदुक्तम् । " कर्णे एवमिवेत्युक्त्वा ज्ञाप्यः पश्चात्प्रसङ्गतः । " इति । एवमिव अनेन प्रकारेण सिद्धिः सा च नाट्याचार्ययोः कलहोत्पादनपुरःसरं तयोः श्रेष्ठत्वावबोधाय मालविकायाश्छलिकनाट्याभिनय इति स्फुटीभविष्यति परस्तात् ॥

६ साधु प्रशंसायाम् । उपक्रान्तम् आरब्धम् । दुरधिगमा दुष्प्रापा कृच्छ्रसाध्येत्यर्थः सिद्धिर्यस्य तथाभूते । " ईषद्दुःसुषु कृच्छ्राकृच्छ्रा-

**सप्रतिबन्धं कार्यं प्रभुरधिगन्तुं सहायवानेव ।**
**दृश्यं तमसि न पश्यति दीपेन विना सुचक्षुरपि ॥ ९ ॥**

**( नेपथ्ये ) अलमलं बहु विकथ्य । राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्तिर्भविष्यति ॥ १**

---

" इति खलु । अस्मिन् मालविकावलोकनरूपे आरम्भे उद्यमे "आरम्भस्तु त्वरायां स्यादुद्यमे" इति मेदिनी । त्वा त्वाम् आशंसामहे इच्छामः सहायमिति शेषः ॥

**सप्रतिबन्धमिति** ॥ सप्रतिबन्धं प्रतिबन्धैः सहितं कार्यम् अधिगन्तुं प्राप्तुं निष्पादयितुमित्यर्थः । सहायवानेव प्रभुः समर्थः। अत्र दृष्टान्तमाह । सुचक्षुः प्रशस्तनेत्रोऽपि पुमान् दृश्यम् अवलोकनार्हं पदार्थम् अर्हार्थे " ऋदुपधाच्चाक्लृपि चृतेः " इति क्यप् । तमसि अन्धकारे दीपेन करणभूतेन विना । " पृथग्विना " इत्यादिना तृतीया । न पश्यति नावलोकयति । यथा तमसावृतं दृश्यं दीपेन विना न द्रष्टुं शक्यं तथा धारिणीरावत्यादिप्रतिबन्धबहुलमिदं मालविकादर्शनरूपं कार्यं सहायभूतेन त्वां विना न शक्यं साधयितुम् इति भावः । अत्र सचक्षुरपीति पाठो न युक्तः । अपिशब्दस्य स्वारस्याभावापातात् । न ह्यचक्षुः किञ्चिदपि प्रभवति द्रष्टुमिति विभावनीयं सुधीभिः । कार्यदृश्ययोर्बिम्बप्रतिबिम्बभावात् दृष्टान्तालङ्कारः। तदुक्तम् । " दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् । " इति । उक्तचरलक्षणा आर्या जातिः । अस्या लक्षणं तृतीयपद्ये द्रष्टव्यम् ॥ ९ ॥

१ नेपथ्ये नटानां भूमिकापरिग्रहस्थानं नेपथ्यं तत्र । विकथ्य आत्मानं स्तुत्वा अलम् । " कत्थ श्लाघायाम् " इत्यतो विपूर्वात् " अलंखल्वोः प्रतिषेधयोः " इति क्त्वाप्रत्यये " समासेऽनञ्पूर्वे " इति ल्यप् । प्रत्यक्षम् । "अव्ययीभावे शरत्प्रभृतिभ्यः" इति टच् । अधरोत्तरयोः भावप्रधानोऽयं निर्देशः । तेन अधरत्वोत्तरत्वयो-

राजा—( आकर्ण्य ) सखे ! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नमिदम् ॥ १

विदूषकः—फलं पि देक्खिस्ससि ॥ ( फलमपि द्रक्ष्यसि )॥

[ ततः प्रविशति कञ्चुकी । ]

कञ्चुकी—देव ! अमात्यो विज्ञापयति । अनुष्ठिता प्रभोराज्ञा एतौ पुनर्हरदत्तगणदासौ ॥ २

उभावभिनयाचार्यौ परस्परजयैषिणौ ।
त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ॥ १० ॥

---

रित्यर्थः । अधरोऽनुत्तमः। उत्तर उत्तमः । "अधरस्तु पुमानोष्ठे हीने" इति । उत्तरशब्दार्थेषु च । "ना स्यादूर्ध्वोदीच्योत्तरे त्रिषु" इति मेदिनी । व्यक्तिः स्पष्टत्वं निर्णय इति यावत् ॥

१ त्वत्सुनीतिपादपस्येति । तव या सुनीतिः मालविकादर्शनार्थे प्रयुक्ता शोभना युक्तिः सैव पादपो वृक्षस्तस्य पुष्पं पुष्पसदृशो नाट्याचार्ययोः कलहः । उद्भिन्नमुत्पन्नम् । अभिनयदर्शनव्याजेन राज्ञे मालविकां दर्शयितुं हरदत्तगणदासयोर्मध्ये विदूषकेणैव कलह उदपादि । यथा वृक्षस्य प्रथमं पुष्पं ततश्च फलमुत्पद्यते तथा विदूषकप्रयुक्ताया नीत्याः पूर्वावस्थेयं फलप्राप्तेः। फलं तु मालविकादर्शनमवश्यं भावीति पादपशब्देन ध्वन्यते ॥

२ देव राजन्। विज्ञापयति " ज्ञा नियोगे " इति चौरादिकस्य णिचि पुकि च रूपम् । अन्यथा हि घटादित्वान्मित्त्वे विज्ञपयति इति स्यात् । प्रभोर्भवतः आज्ञा सेनापतिसमुद्योगरूपा ॥

उभाविति ॥ अभिनयाचार्यौ अभिनयशिक्षकौ कर्त्तारौ साक्षान्मूर्तिमन्तौ भावौ अभिप्रायव्यञ्जकचेष्टाविशेषाविव वर्तमानौ परस्परस्य अन्योऽन्यस्य जयम् अभिभवम् इच्छतस्तादृशौ सन्तौ । त्वां द्रष्टुम् उद्यतौ प्राप्तौ इति यावत् । "वागङ्गसत्वोपेतान् काव्यार्थान् भावयन्तीति भावाः " इति भरतः ॥ १० ॥

राजा—प्रवेशय तौ ॥

कञ्चुकी—यदाज्ञापयति देवः। [ इति निष्क्रम्य ताभ्यां सह प्रविश्य ] इत इतो भवन्तौ ॥ १

गणदासः—( राजानं विलोक्य ) अहो दुरासदो राजमहिमा॥

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ ११ ॥

प्रभावना प्रतिश्रयाति एक

---

१ यदाज्ञापयतीति प्रभोर्निदेशाङ्गीकारे प्रयुज्यते ॥

न च नेति ॥ अयं राजा न परिचित इति न। अवश्यं परिचित इत्यर्थः। नञ्द्वयं प्रकृतार्थदार्ढ्यायेत्युक्तेः। न चापि अरम्यः असुन्दरः उग्र इति यावत् । तथापि अपरिचितत्वारम्यत्वरूपभीतिहेत्वोरभावेऽपि । अस्य राज्ञः पार्श्वं समीपं प्रति चकितं सभयं यथा तथा। उपैमि प्राप्नोमि । अनेन राज्ञस्तेजस्वितातिशयो व्यज्यते । किं च स एव दृष्टपूर्व एव अयं राजा मे अक्ष्णोः नयनयोः सलिलनिधिरिव प्रतिक्षणं नवो नवो भवति । अत्र पूर्वार्धे भीतिहेत्वभावेऽपि तदुद्भवोक्तेर्विभावनालङ्कारः । तदुक्तम् ।" विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते ।" इति । उत्तरार्धे तु एकस्यैव पुनः पुनर्नवीनत्वप्रतिपादनादभेदे भेदप्रतिपादनरूपातिशयोक्तिः । तस्याश्च सलिलनिधिरिवेत्युपमाङ्गम् इति तयोरङ्गाङ्गिभावेन सङ्करः । " सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते । भेदेऽप्यभेदः संबन्धेऽसंबन्धस्तद्विपर्ययौ ॥ " इत्युक्तेः । पुष्पिताग्रा वृत्तम् । तल्लक्षणं तु " अयुजि नयुगरेफतो यकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा । " इति च्छन्दोमञ्जर्याम् ॥ ११ ॥

**हरदत्तः**—महत्खलु पुरुषाकारमिदं ज्योतिः । तथाहि ॥ १

द्वारे नियुक्तपुरुषानुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन् ।
तेजोभिरस्य विनिवर्तितदृष्टिपातै-
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥ १२ ॥

**कञ्चुकी**—एष देवः । उपसर्पतां भवन्तौ ॥

**उभौ**—( उपेत्य ) विजयतां देवः ॥

**राजा**—स्वागतं भवद्भ्याम्। ( परिजनं विलोक्य ) आसने तावदत्रभवतोः । ( उभौ परिजनोपनीतयोरासनयोरुपविष्टौ ) ॥ २

---

१ पुरुषाकारं पुरुषात्मकम् इदं दृश्यमानं ज्योतिः तेजः राजरूपमित्यर्थः ॥

**द्वार इति** ॥ द्वारे नियुक्तेन अधिकृतेन पुरुषेण दौवारिकेण अनुमतः अनुमोदितः प्रवेशो यस्य तथाभूतः सिंहासनान्तिकचरेण सिंहासनं राजासनं तस्य अन्तिकचरेण समीपसंचारिणा सेवकेन सह उपसर्पन् समीपं गच्छन् अहमिति शेषः । अनेन प्रतिवारणाभावः सूच्यते । विनिवर्तितदृष्टिपातैः विनिवर्तितः प्रतिनिवारितः दृष्टिपातः नयनविक्षेपो हरदत्तकृत इत्यर्थः। यैस्तथाभूतैः । तेजसामतिदुःसहत्वात्तत्र नेत्रविक्षेपः कर्तुं न शक्यत इति भावः । अत एव अस्य राज्ञः तेजोभिः कान्तिभिः वाक्यादृते प्रतिवारणवाक्यं विनैव पुनः पर्यायेण प्रतिवारितोऽस्मीव दूरीकृतोऽस्मीवेत्युत्प्रेक्षा।"पुनरप्रथमे भेद " इत्यमरः । भेदश्च पर्यायोऽपि । अत्र प्रतिवारणे विनिवर्तितदृष्टिपातैरिति हेतूपादानात् पदगतहेतुककाव्यलिङ्गोत्थापित उत्प्रेक्षालङ्कारः । वाच्या क्रियोत्प्रेक्षा । वसन्ततिलकाख्यं वृत्तम् । तल्लक्षणं रत्नाकरे।"उक्ता वसन्ततिलका तभजा जगौ गः" इति॥१२

२ सुष्ठु सुखेन आगतम् आगमनं भवद्भ्यां भवतोरित्यर्थः। "क्रि-

**राजा**—किमिदं शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम् ? ॥ १

**गणदासः**—देव श्रूयताम् । मया सुतीर्थादभिनयविद्या सुशिक्षिता । दत्तप्रयोगश्चास्मि । देवेन देव्या च परिगृहीतः ॥ २

**राजा**—बाढं जाने । ततः किम् ? ॥ ३

**गणदासः**—सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षम् । अयं न मे पादरजसाऽपि तुल्य इत्यधिक्षिप्तः ॥ ४

---

यया यमभिप्रैति" इति संप्रदानतेति वाचस्पतिः । अत्रभवतोः पूज्ययोरनयोः । तावत् सत्वरम् । आसने आनीयेतामिति शेषः ॥

१ इदं शिष्योपदेशकाले शिष्यशिक्षणावसरे । आचार्याभ्यां शिक्षकाभ्यामिति उपस्थानायोग्यत्वं सूच्यते । युगपत् एकस्मिन्नेव काले उपस्थानम् आगमनम् । किं किमर्थम् । भावे ल्युट् ॥

२ सुतीर्थात् शोभनगुरोः सकाशात् "तीर्थमृषिजुष्टे जले गुरौ" इत्यमरः । "आख्यातोपयोगे" इत्यपादानत्वे पञ्चमी । अभिनयविद्या नाट्यशास्त्रम् । दत्तप्रयोगः दत्तः शिष्येभ्यः प्रतिपादितः प्रयोगो येन तथाभूतः । शिक्षितशिष्य इत्यर्थः । यद्वा दत्तो दर्शित इति यावत् प्रयोगः अभिनयो येन तथाभूतः । परिग्रहः स्वीकारोऽनुग्रह इति यावत् ॥

३ बाढम् अत्यन्तम् ॥

४ अमुना इति सर्वनामप्रयोगात् हरदत्तविषये कोपातिशयो ध्वन्यते । प्रधानपुरुषाणां श्रेष्ठपुरुषाणां समक्षमित्यधिक्षेपायोग्यत्वं सूच्यते । अधिक्षेपमनुवदति । अयमिति । अयं गणदासः मे हरदत्तस्य । अधिक्षिप्तः प्रतिक्षिप्तः निन्दित इत्यर्थः । "कस्यचित् शौर्यादि[1]कं प्रतिस्पर्धमानस्य दुर्वचनमधिक्षेपः" इत्यमरटीकायां राजमुकुटः । एतादृशेन दुर्वचनेनाहं योजित इत्यर्थः ॥

---

१ गुणानित्यर्थः ।

**हरदत्तः**—देव ! अयमेव प्रथमं परिवादकरः । अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरम् इति । तदत्रभवान् इमं मां च शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ॥ १

**विदूषकः**—समत्थं पडिण्णादम् ॥ ( समर्थं प्रतिज्ञातम् )॥ २

**गणदासः**—प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ॥ ३

**राजा**—तिष्ठ तावत् । पक्षपातमत्र देवी मन्यते। तत् अस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ॥ ४

---

१ परिवादकरो निन्दाकरः । कासौ निन्देत्याह । अत्रेति । अत्र नाटयशास्त्रे भवतः हरदत्तस्य मम गणदासस्य च। समुद्रपल्वलयोः समुद्राल्पसरसोः इव । व्युत्क्रमेण यथासंख्यम् । तथा च समुद्र इव गणदासो विद्या शेवधिः पल्वल इव किञ्चिज्ज्ञो हरदत्त इत्यर्थः। अन्यथा हि परिवादानुपपत्तिः । अत्रभवान् पूज्योऽग्निमित्रः । शास्त्रे नाटयशास्त्रे । प्रयोगे तस्याभिनये च । विमृशतु परीक्षताम् । नौ आवयोः विशेषज्ञो ज्ञानाधिक्यवेत्ता । प्राश्निकः प्रश्ने विवादानुगत-विषयपृच्छायां नियुक्तः प्राश्निकः सभ्यः । " तत्र नियुक्तः " इति टिठन् । " सभ्यास्तु प्राश्निकाः " इति त्रिकाण्डशेषः ॥

२ प्रतिज्ञातं प्रतिज्ञा भावे क्तः । तवेति शेषः । समर्थं योग्यता-ज्ञाने शक्तम् । यदुक्तं भवता । " देव एव नौ विशेषज्ञः प्राश्निक " इति । तया ते प्रतिज्ञया भवतोर्गौरवनिर्णयः स्यादित्यर्थः ॥

३ प्रथमो मुख्यः कल्पो न्यायः भवदुक्तिरूप इत्यर्थः । " प्रथ-मस्तु भवेदादौ प्रधानेऽपि च" इति । "कल्पः शास्त्रे विधौ न्याये" इति च मेदिनी । अवहितः अनन्यासक्तचित्तः ॥

४ तावत् देव्यागमनपर्यन्तमित्यर्थः । तिष्ठ विरतकर्मा भव । अत्र अस्मत्कृतन्यायविषये । पक्षपातं पक्षे आत्माभिलषितपक्षे पातमभिनिवेशम् । स्वपक्षहितकारित्वं मन्यते मंस्यत इत्यर्थः ।

विदूषकः—सुठ्ठ भवं भणादि ॥ ( सुष्ठु भवान् भणति ) ॥

आचार्यौ—यद्देवाय रोचते ॥ १

राजा—मौद्गल्य ! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी ॥ २

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः । ) इत इतो भवती ॥ ३

धारिणी—( परिव्राजिकां विलोक्य ) भअवदि ! हरदत्तस्स गणदासस्स अ संरंभं कहं पेक्खसि ? ॥ ( भगवति ! हरदत्तस्य गणदासस्य च संरम्भं कथं प्रेक्षसे ? ) ॥ ४

---

" वर्तमानसामीप्ये" इति लट् । पण्डिता विदुषी कौशिकी देव्याः पीठमर्दिका धारिण्याः सकाशे परिव्राजिकारूपेणावस्थिता ।" स्त्रियाः पुंवत् " इत्यादिना पण्डिताशब्दस्य पुंवद्भावः । तया सहितायाः । न्याय्यो न्यायादनपेतो युक्त इत्यर्थः । " धर्मपथ्यर्थन्यायादनपेत । " इति यत् । व्यवहारो विवादः ॥

१ देवाय " रुच्यर्थानां प्रीयमाणः " इति चतुर्थी ॥

२ मौद्गल्य इति कञ्चुकिनो नाम । प्रस्तावो नाट्याचार्ययोः परीक्षारम्भः । सार्धं सह ॥

३ परिव्राजिका संन्यस्ता कौशिकी ॥

४ भगवति कौशिक्याः संबुद्धिः ।" तपस्विन्यो देवताश्च वाच्यास्तु भगवन्निह । " इति भरतः । संरम्भं विवादावेशं कथं केन प्रकारेण प्रेक्षते पश्यति । उभयोर्मध्ये कस्य जयमुद्भावयसीत्यर्थः । " आवेशाटोपसंरम्भाः " इति त्रिकाण्डशेषः । अपि नाम स्याज्जयो गणदासस्य इति भावः ॥

परिव्राजिका—अलं स्वपक्षावसादशङ्कया । न परिहीयते प्रतिवादिनो गणदासः ॥ १

धारिणी—जइवि एव्वं तहवि राअपरिग्गहो पहुत्तणं उवहरदि ॥ ( यद्यप्येवं तथापि राजपरिग्रहः प्रभुत्वमुपहरति ) ॥ २

परिव्राजिका—अयि ! राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती ॥ ३

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ १३ ॥

---

१ स्वपक्षस्य आत्मवर्गस्य अवसादः क्षयः पराजय इति यावत् । तद्विषयिण्या शङ्कया भीत्या । " शङ्का त्रासे " इति मेदिनी । स च भीतिः । अत्र हेतुमाह । गणदासः देवीपक्षीयो नाट्याचार्यः प्रतिवादिनो हरदत्तादपेक्षया न परिहीयते न हीनो भवति । किन्तूत्कृष्ट एवेति भावः ॥

२ एवं गणदासः प्रतिवादिनोऽपेक्षया न हीनगुण इति सत्यम् । राजपरिग्रहः राज्ञः परिग्रह आत्मीयत्वेन स्वीकारः । प्रभुत्वं सामर्थ्यम् उपहरति ददाति ॥

३ यदि राजपरिग्रहस्य महत्त्वे हेतुत्वं तदा राज्ञीपरिग्रहोऽपि तथाविध एव समानन्यायात् इत्याह । अयीति ॥

पतिरिव पत्न्यपि स्वपक्षीयमहत्त्वप्रकाशने प्रभवतीति दृष्टान्तेन द्रढयति—अतिमात्रेति ॥ अनलः अग्निः कर्ता । भानोः सूर्यस्य परिग्रहात् स्वतेजःप्रदानरूपादनुग्रहात् हेतोः । अतिमात्रभासुरत्वम् अतिमात्रमत्यन्तं भासुरत्वं प्रकाशशालित्वं पुष्यति वर्धयति । " भञ्जभासमिद " इति घुरच् । प्रकाशशाली भवतीत्यर्थः । निशापरिगृहीतः रात्र्या कृतानुग्रहः चन्द्रोऽपि महिमानं गौरवं प्रकाशातिशयशालित्वरूपम् अधिगच्छति प्राप्नोति । "रात्र्यां स्वकीयं तेजो

विदूषकः—अविहा अविहा । उवट्ठिदा देवी पीठमद्दिअं पण्डिदकोसिइं पुरोकरिअ तत्तभोदी धारिणी ॥ ( अपिहा अपिहा । उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी ) ॥ १

राजा—पश्याम्येनां यैषा ॥

मङ्गलालङ्कृता भाति कौशिक्या यतिवेषया ।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥ १४ ॥

---

रविरग्नौ निदधाति " इति धर्मशास्त्रकारा मन्यन्ते । यथा रविपरिगृहीतोऽग्निस्तथैव निशापरिगृहीतश्चन्द्रो महिमानं भजत इति तुल्ययोग्यताकत्वाद्राजपक्षीयो हरदत्त इव भवत्पक्षीयो गणदासोऽपि न हीनगौरवो भविष्यतीति भावः । अत्र एकस्यैव अतिमात्रभासुरत्वरूपधर्मस्य पृथङ्निर्देशात्प्रतिवस्तूपमा । तदुक्तम् । " प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥ " इति । आर्याजातिः लक्षणं तृतीयपद्ये द्रष्टव्यम् ॥ १३ ॥

१ अपिहा इत्यानन्देऽव्ययम् । पीठमर्दिकां धारिणीरूपनायिकायाः प्रियाम् । पुरस्कृत्याग्रे कृत्वा । "अतः कृकमि " इति सः । " पीठमर्दोऽतिधृष्टे स्यान्नायकस्य प्रियेऽपि च । " इति मेदिनी । स्वार्थे कः ततष्टाप् । "प्रत्ययस्थात्कात् " इति इत् । धारिणी देवी धारिणी नाम राज्ञो ज्येष्ठा भार्या । पीठमर्दलक्षणं दर्पणे । "दूरानुवर्तिनि स्यात् तस्य प्रासङ्गिकेऽतिवृत्ते तु । किंचित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥ " इति ॥

मङ्गलेति ॥ यैषेति सम्बध्यते । मङ्गलालङ्कृता मङ्गलानि अलङ्कृतानि भूषणानि यस्यास्तथाभूता । यतिवेषया यतीनां वेष आकारो यस्यास्तथाभूतया परिव्राजिकया कौशिक्या । सहार्थकश-

**परिव्राजिका**—( उपेत्य ) विजयतां देवः ॥

**राजा**—भगवति ! अभिवादये ॥ १

**परिव्राजिका**—महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।

धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥ १५ ॥

---

ब्दप्रयोगाभावेऽपि तृतीया । "वृद्धो यूना" इति निर्देशात् । कौशिक्या सहितेत्यर्थः । विग्रहवत्या मूर्तिमत्या । "शरीरं वर्ष्म विग्रहः" इत्यमरः । अध्यात्मविद्यया आत्मानं ब्रह्म अधिकृत्य या विद्या तया ब्रह्मप्रतिपादिकाभिरुपनिषद्भिरित्यर्थः । समं सह । "सहयुक्ते" इति तृतीया । त्रयी ऋग्यजुःसामरूपं वेदत्रयमिव भाति शोभते । अत्र कौशिक्या इत्यस्याध्यात्मविद्ययेति प्रतिबिम्बनाद्बिम्बप्रतिबिम्बभावेनोपमालङ्कारः । पथ्यावक्त्रं वृत्तम् । तल्लक्षणं तु "युजोश्चतुर्थतो जेन पथ्यावक्त्रं प्रकीर्तितम् ।" इति ॥ १४ ॥

१ अभिवादये प्रणमामि ॥

**महासारेति** ॥ द्व्यर्थमिदं पद्यम् । महासारप्रसवयोः महान् सारो बलं यस्य तथाभूतः प्रसवो अपत्यं यस्याः । पक्षे महता आसारेण धारासम्पातेन पर्जन्यातिशयेन प्रसवः फलं यस्याः तथाभूतयोः सदृशक्षमयोः । राज्ञीपक्षे सदृशी योग्या राजकुलोचिता क्षमाऽपराधसहिष्णुत्वं यस्यां तथाभूता । पृथ्वीपक्षे सदृशी उचिता क्षमा भूतधारणसामर्थ्यवती च तयोः । धारिणीभूतधारिण्योः धारिणीनामायाः राज्याः पृथिव्याश्च । शरदां वर्षाणां शतम् । "कालाध्वनोः" इति द्वितीया । भर्ता पतिः पोषकश्च भव । अत्र सदृशक्षमयोरिति अर्थस्यापाततः पौनरुक्त्याभासात्पुनरुक्तवदाभासोऽलङ्कारः शाब्दः । महासारेत्यादौ पदानामेकार्थस्वभावानामनेकार्थवाचनाच्छ्लेषः । अभिलषितवस्त्वाशंसनाच्च आशीरलङ्कारः । सर्वेषां च तिलतन्दुलन्यायेन संसृष्टिः । लक्षणानि तु "आपाततो यदर्थस्य पौनरुक्त्यावभासनम् । पुनरुक्तवदाभासः स भिन्नाकारश

धारिणी—जेदु जेदु अज्जउत्तो ॥ (जयतु जयत्वार्यपुत्रः)॥ १

राजा—स्वागतं देव्यै । ( परिव्राजिकां विलोक्य ) भगवति ! क्रियतामासनपरिग्रहः ॥ २

( सर्वे उपविशन्ति । )

राजा—भगवति ! अत्रभवतोः हरदत्तगणदासयोः परस्परं विज्ञानसङ्घर्षिणोर्भगवत्या प्राश्निकपदमध्यासनीयम् ॥ ३

परिव्राजिका—( सस्मितम् ) अलमुपालम्भेन । पत्तने सति ग्रामे रत्नपरीक्षा ? ॥ ४

---

ब्दगः॥" इति । "शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।" इति च । आशीर्लक्षणं तु प्रथमपद्ये द्रष्टव्यम् । उक्तपूर्वं वृत्तम् । अत्रेष्टाशंसनात् आशीर्नाम नाट्यालङ्कारोऽपि । तल्लक्षणं दर्पणे । "आशीरिष्टजनाशंसा" इति ॥ १९ ॥

१ आर्यपुत्रः " आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेन वा ।" इति भरतः ॥

२ आसनपरिग्रहः आसनस्य स्वीकारः ॥

३ परस्परम् अन्योऽन्यम् । विज्ञानसङ्घर्षिणोः सङ्घर्षः पराभवेच्छा अस्त्यनयोस्तौ सङ्घर्षिणौ । "अत इनिठनौ " इति मत्वर्थे इनिः । विज्ञाने शास्त्रज्ञानविषये सङ्घर्षिणोः स्पर्धावतोः । "विज्ञानं शिल्पशास्त्रयोः " इति अमरः । अध्यासितव्यं स्वीकर्तव्यम् । अत्राध्यासनीयमित्यपि पाठः । प्राश्निकपदं सभ्यस्थानं सभ्याधिकार इत्यर्थः ॥

४ उपालम्भः परिहासः । पत्तने नगरे बहुविधपरीक्षकसङ्कुल इत्यर्थः । ग्रामे अनभिज्ञजनबहुल इत्यर्थः । रत्नस्य परीक्षा योग्यताज्ञानम् । अत्र पत्तनादीनां सम्बन्धोऽसम्भवन् क्रमेण राजपारिव्राजिकानाट्याचार्यपरीक्षाणां बिम्बानुबिम्बत्वं बोधयतीति असं-

राजा—नैतदेवम् । पण्डितकौशिकी खलु भगवती पक्षपातिनावहं देवी च ॥ १

आचार्यौ—सम्यगाह देवः । मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति ॥ २

राजा—तेन हि प्रस्तूयतां विवादः ॥ ३

परिव्राजिका—देव ! प्रयोगप्रधानं हि नाट्यशास्त्रम् । किमत्र वाग्व्यवहारेण ? कथं वा देवी मन्यते ॥ ४

देवी—जइ मं पुच्छसि तदा एदाणं विवादो एव्व ण मे रुच्चदि ॥(यदि मां पृच्छसि तदा एतेषां विवाद एव न मे रोचते )॥५

---

भवद्वस्तुसंबन्धो निदर्शनालङ्कारः । तदुक्तम् " सम्भवन् वस्तुसंबन्धोऽसम्भवन्वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ॥ " इति । तथा च त्वयि सति मम प्राश्निकपदस्वीकारो न युक्त इत्यर्थः ॥

१ पण्डितकौशिकी पण्डा तत्त्वातत्त्वविवेकक्षमा बुद्धिः सञ्जातास्यां तथाभूता पण्डिता चासौ कौशिकी चेति । " बुद्धिः पण्डा विद्या चार्वी " इति त्रिकाण्डशेषः । अनेन परीक्षाक्षमत्वं ध्वन्यते ॥

२ नौ आवां प्रति परिच्छेत्तुं परिमातुम् । एतस्यैतावन्तो गुणा एतस्यैतावन्तो दोषाश्चेति परिमाणं कर्तुमित्यर्थः । गुणदोषतः गुणेषु दोषेषु च सप्तम्यर्थे तसिः ॥

३ प्रस्तूयताम् आरभ्यताम् । प्रपूर्वात्स्तौतेरारम्भार्थात्कर्मण्यधीष्टे लोट् ॥

४ प्रयोगप्रधानं प्रयोगोऽभिनय एव प्रधानो मुख्यो यत्र तथाभूतम् । अत्र नाट्यशास्त्रे वाग्व्यवहारेण वाङ्मात्रप्रस्तावेनेत्यर्थः । किं निष्फलो वाग्व्यवहार इति भावः ॥

५ एतेषां गौरवे बहुवचनम् । अनयोर्हरदत्तगणदासयोर्विवादः स्पर्धा । स्पर्धापि न रोचते कुतस्तु प्रयोगपरीक्षेति भावः ॥

गणदासः—देवि ! न मां समानविद्यतया परिभवनीयमवगन्तुमर्हसि ॥ १

विदूषकः—भोदि ! पेक्खामो उअरंभरिसंवादं किं मुधा वेदणदाणेण एदाणं ॥ ( भवति ! प्रेक्षामह उदरम्भरिसंवादम् । किं मुधावेतनदानेन एतेषाम् ) ॥ २

देवी—णं कलहप्पिओ सि ॥ ( ननु कलहप्रियोऽसि ) ॥

विदूषकः—मा एव्वं चंडि ! अण्णोण्णकलहप्पिआणं मत्तहत्थिणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो ॥ ( मा एवं चण्डि ! अन्योऽन्यकलहप्रिययोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः ) ॥ ३

---

१ विवादारम्भे कदाचिदात्मपक्षीयस्य गणदासस्य पराभवः स्यादित्याशङ्क्य देव्या इयमुक्तिः इति सम्भावयन् गणदासः प्राह। देवीति । परिभवनीयं पराभवार्हम् । तेन न किञ्चित्प्रयोगदर्शने प्रतिबन्धकमिति भावः ॥

२ उदरम्भर्योः स्वोदरपूरकयोः तन्मात्रव्यवसाययोरित्यर्थः । संवादं विवादरूपम् । उदरोपपदाद्भृञ इन् । चान्द्रमते आत्मोदरकुक्षिष्विनो विधानात्साधुः । तथा च प्रयोगोऽनर्घराघवे । " स्मेरा दिशः कुमुदमुद्भिदुरं पिबन्ति ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः । " इति । अत्र उरभ्र इति पाठे उरभ्रौ एडकौ तयोरिव प्रमत्तयोरित्यर्थः । मुधा व्यर्थम् । यदि नैतौ विवादक्षमौ तदा व्यर्थमेतयोर्वेतनदानं योग्यत्वाभावादिति भावः । गौरवे बहुवचनम् ॥

३ मत्तहस्तिनोः इति निर्धारणे षष्ठी । तयोर्मध्ये । एकतरस्मिन् एकस्मिन् । " द्विवचनविभज्योपपदे " इति तरप् ॥

राजा—ननु स्वाङ्गसौष्ठवातिशयमुभयोर्दृष्टवती भगवती ॥ १

परिव्राजिका—अथ किम् ॥ २

राजा—तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम् ? ॥ ३

परिव्राजिका—तदेव वक्तुकामाऽस्मि ॥ ४

शिष्टा क्रिया कस्यचिदात्मसंस्था
संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव ॥ १६ ॥

---

१ स्वाङ्गसौष्ठवातिशयम् । अनयोर्हरदत्तगणदासयोः स्वाङ्गसौष्ठवस्य आत्मनोऽवयवानां पाटवस्यातिशयं विशेषम् । तेन एताभ्यामात्मनैव नाट्यप्रयोगदर्शनं नानुष्ठेयम् । शिष्यद्वारैव तु तदभिनेतव्यमिति ध्वनिः ॥

२ अथ किम् । राजोक्तस्य स्वीकारे एवमिदमित्यर्थः । "अथ किं स्वीक्रियार्थकम्" इत्यनर्घराघवटीकायां रुचिकरः ॥

३ प्रत्याययितव्यं ज्ञापयितव्यम् । प्रतिपूर्वात् " इण् गतौ " इत्यतो णिजन्तात्तव्यः ॥

४ तदेव प्रत्याययितव्यमेव । वक्तुकामा वक्तुं कामो वाञ्छा यस्यास्तथाभूता । "तुं काममनसोरपि" इति म्लोपः ॥

शिष्टेति ॥ कस्यचित् गुरोः आत्मसंस्था स्वनिष्ठा क्रियाऽभिनयरूपा सैव नतु शिष्याध्यापनमित्यर्थः । सर्वं वाक्यं सावधारणमिति न्यायात् । शिष्टा विशिष्टा उत्तमेत्यर्थः । उपसर्गाणां द्योतकत्वपक्षे निरुपसर्गाणामपि सोपसर्गवदर्थप्रतीतेः । अन्यस्य तद्भिन्नस्य कस्यचित् गुरोः संक्रान्तिः शिष्यमनसि स्वनिष्ठगुणसंयोजनम् । विशेषेण आधिक्येन युक्ता । संक्रान्तिरेव विशेषयुक्ता न त्वात्मनिष्ठा क्रियेति भावः । यस्य उभयम् आत्मनिष्ठा क्रिया

विदूषकः—सुदं अज्जेहिं भअवदीए वअणं ? एसो पिंडितत्थो उवदेसदंसणादो णिण्णओ त्ति ॥ (श्रुतमार्याभ्यां भगवत्या वचनम् ? एष पिण्डितार्थ उपदेशदर्शनान्निर्णय इति )॥१

हरदत्तः—परमभिमतं नः ॥ २

गणदासः—देवि ! एवं स्थितम् ॥ ३

देवी—जदा उण मन्दमेधा सिस्सा उवदेसं मलिणेदि तदाणं आआरिअस्स दोसो ? ॥ ( यदा पुनर्मन्दमेधा शिष्योपदेशं मलिनयति तदानीमाचार्यस्य दोषः ? ) ॥ ४

---

संक्रान्तिश्चेति द्वयं साधु समीचीनम्। स एव शिक्षकाणामध्यापकानां धुरि अग्रभागे स्थापयितव्य एव अवश्यं स्थापनीयः। मुख्य इति ज्ञातव्य इति भावः। एवं च आभ्याम् आत्मसंस्था क्रिया संक्रान्तिश्चेति द्वयमपि प्रत्याययितव्यमिति फलितम्। तत्र च अनयोरात्मसंस्था क्रिया प्रतीतपूर्वैवेति केवलमाभ्यां शिष्यसंक्रान्तिरेव प्रत्याययितव्येति भावः। उपजातिवृत्तं तल्लक्षणं तु "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।" इति। इन्द्रवज्रोपेन्द्रवज्रयोर्मिश्रीभाव उपजातिरित्यर्थः। तयोश्च लक्षणे। "स्यादिन्द्रवज्रा यदि तौ जगौ गः"। "उपेन्द्रवज्रा प्रथमे लघौ सा" इति। तथा चात्र चरणत्रयमिन्द्रवज्रायास्तुरीयस्तु चरण उपेन्द्रवज्राया इत्युपजातिः ॥१६॥

१ आर्याभ्यां हरदत्तगणदासाभ्यां कर्तृभ्याम्। पिण्डितार्थो निष्कृष्टार्थः। कौशिकीवचनस्येति शेषः। उपदेशः शिक्षणं लक्षणया उपदिष्टाभिनय इत्यर्थः ॥

२ परम् अत्यन्तम् अभिमतं संमतम् ॥

३ एवम् अनेन प्रकारेण स्थितम् उपस्थितं प्राप्तम् ॥

४ मन्दमेधा मन्दबुद्धिः। "धीर्धारिणावती मेधा" इत्यमरः। उपदेशं शिक्षां मलिनयति विस्मृत्यादिना दूषयति ॥

राजा—देवि ! एवमापठ्यते । विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ॥ १

देवी—( जनान्तिकम् ) कहं दाणिं ? ( गणदासं विलोक्य प्रकाशम् ) अलं अज्जउत्तस्स उस्साहकारणं मणोरहं पूरिअ विरम णिरत्थादो आरंभादो ॥ ( कथमिदानीम् ? अलमार्यपुत्रस्योत्साहकारणं मनोरथं पूरयित्वा विरम निरर्थादारम्भात् ) ॥ २

---

१ आपठ्यते उच्यते जनैरिति शेषः । अद्रव्यपरिग्रहः अद्रव्यस्य अपात्रस्यायोग्यशिष्यस्येत्यर्थः । परिग्रहः शिक्षणीयतया स्वीकारोऽपि बुद्धिलाघवं लघोर्मनोज्ञस्य भावो लाघवं बुद्धेर्लाघवं प्रावीण्यमिति यावत् । " इगन्ताच्च लघुपूर्वात् " इति भावेऽण् । प्रकाशयति स्पष्टीकरोति । अपात्रप्रयुक्ताऽपि विद्या गुरोर्विद्वत्त्वमनुमापयितुं समर्थेति भावः । विपूर्वकस्य णीञ्धातोः शिक्षार्थत्वम् । मेदिन्यां यथा । "विनया तु कलायां स्त्री शिक्षायां प्रणतौ पुमान् ।" इति । " लघुरगुरौ च मनोज्ञे " इत्यपि तत्रैव ॥

२ जनान्तिकं जनस्य अभीष्टमनुष्यस्यैव अन्तिकं समीपे । यत्केवलमात्मनोऽभीष्टपुरुषेण श्रोतव्यं नान्यैरिति मनसि कृत्य तस्यैव समीप उच्यते तज्जनान्तिकम् । तल्लक्षणं दर्पणे । " त्रिपताककरेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ॥" इति । कथमिदानीम् इदानीं कथं कर्तव्यमित्यर्थः । आर्यपुत्रस्य राज्ञः उत्साहकारणम् अध्यवसायबीजम् । येन मनुष्योऽसाध्येऽपि कार्ये प्रवर्त्तते स मनोवर्ती धर्मविशेष उत्साहः । मनोरथं वाञ्छां पूरयित्वा । "अलंखल्वोः" इति क्त्वा । निरर्थात् निष्फलात् । आरम्भादुद्योगात् प्रयोगदर्शनरूपात् । " जुगुप्साविराम " इत्यादिनाऽपादानत्वम् ॥

विदूषकः—सुट्ठु भोदी भणादि । भो गणदास ! संगीदअपदं लंभिअ सरस्सईए उवाअणमोदआइं खादमाणस्स किं दे मुहणिग्गहेण विवादेण ? ॥( सुष्ठु भवती भणति । भो गणदास ! सङ्गीतकपदं लब्ध्वा सरस्वत्या उपायनमोदकानि खादतः किं ते मुखनिग्रहेण विवादेन ? ) ॥ १

गणदासः—सत्यमयमेवार्थो देवीवाक्यस्य । श्रूयतामवसरप्राप्तमिदानीम् ॥ २

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम् ।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥ १७ ॥

---

१ विदूषकः पुनर्गणदासं प्रवर्त्तयितुकामो व्याजेन स्तौति । सुष्ठ इति । सुष्ठु शोभनम् । सङ्गीतकपदं सङ्गीतशिक्षकस्थानम् । उपायनभूतानि उपहारभूतानि । मुखनिग्रहेण मुखस्य निग्रहः खादनप्रतिबन्धो यस्मात्तेन । किं न किंचित्फलमित्यर्थः । किमप्यजानतः केवलं शिक्षक इति राजप्रदत्तं वेतनं यदृच्छया स्वीकुर्वतश्च ते विवादः पराजयमूलकतया नानुष्ठेय इति भावः । अत्र " धिक् त्वां वृथा राजद्रव्यापहारिणम् " इति निन्दाया गम्यमानत्वाव्द्याजस्तुतिरलङ्कारः । " उक्ता व्याजस्तुतिः पुनः । निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः ॥ " इत्युक्तेः ॥

२ अयं विदूषकोक्त एव । अवसरप्राप्तं प्रसङ्गागतम् ॥

लब्धास्पद इति ॥ लब्धम् आस्पदं प्रतिष्ठेति यावत् येन तथाभूतः लब्धप्रतिष्ठोऽस्मीति हेतोः विवादभीरोः विवादाद्भयशीलस्य । " भियः क्रुक्लुकनौ " इतिः क्रुः । यदि विवादे पराजयः स्यात्तदा महती मानहानिः स्यात् इति विवाद्भीतस्येत्यर्थः । किंच

देवी—अइरोपणीदा दे सिस्सा । अवरिणिट्ठिदस्स उवदेसस्स-उण अणज्जं आवेदणं ॥ ( अचिरोपनीता ते शिष्या । अपरिनिष्ठितस्योपदेशस्य पुनरनार्यमावेदनम् ) ॥ १

गणदासः—अत एव मे निर्बन्धः ॥ २

---

परेण अन्यकर्तृकां निन्दां तितिक्षमाणस्य सहमानस्य । "तिजेः क्षमायाम्" इति सनि लटः शानच् । यस्य शिक्षकस्य आगमः शास्त्रं केवलजीविकायै जीवनमात्रहेतुर्भवति । न यशसे नापि विवादायेति भावः । तं शिक्षकं ज्ञानमेव पण्यं विक्रेयं वस्तु यस्य तथाभूतं वणिजं क्रयविक्रयिकं वदन्ति । यथा वणिजः समीपे वर्तमानं वस्तुजातं केवलं विक्रयस्यैवोपयोगि तथाऽस्य ज्ञानमपि केवलं शिक्षणमात्रायेति वणिक्साम्यम् । अतः परनिन्दासहिष्णुना यशःकामेन विवादः कर्तव्य एवेति भावः । साङ्गं रूपकं समस्तवस्तुविषयं वणिजः पणस्य चारोपणात् । तदुक्तम् । "आङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत् । समस्तवस्तुविषयमेकदेशविवर्ति च ॥ अङ्गिनो यदि साङ्गस्य रूपणम्" इति । उक्तपूर्वलक्षणमुपजातिवृत्तम् ॥ १७ ॥

१ अचिरेण शीघ्रम् उपनीता उपदेशग्रहणाय त्वदन्तिकं प्रापिता । ते शिष्या मालविका । अपरिनिष्ठितस्य नूतनतया स्थैर्यमप्राप्तस्य । आवेदनं ज्ञापनं सदसत्त्वविचाराय दर्शनमिति यावत् । अनार्यमनुचितम् । इयं चोक्तिः कथंचिदपि राज्ञा मालविका न द्रष्टव्येत्याशयेन । एवमुत्तरत्रापि द्रष्टव्यम् ॥

२ अत एव उपदेशस्यापरिनिष्ठितत्वादेव । निर्बन्धः प्रयोगदर्शनाभिनिवेश इति यावत् । शिष्याया अचिरोपनीतत्वादेव अभिनयकौशलाधिक्ये ममाधिको मान इत्यनुमन्ये उपदेशदर्शनमिति भावः । अत्र मानहानौ हेतुत्वेनोपन्यस्तस्य शिष्याया अचिरोपनीतत्वस्य तद्विरुद्धकरणे हेतुत्वेनोपन्यासाद्व्याघातालङ्कारः । तदुक्तम् । "सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ।" इति ॥

देवी—तेण हि दुवे वि भअवदीए उवदेसं दंसेह ॥ ( तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम् ) ॥ १

परिव्राजिका—देवि ! नैतन्न्याय्यम् । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ॥ २

देवी—( जनान्तिकम् ) मूढे परिव्वाजिए ! मं जग्गतिं विसुत्तं विअ करेसि ? ॥ ( मूढे परिव्राजिके ! मां जाग्रतीमपि सुप्तामिव करोषि ? ) ॥ ३

( इति सासूयं परावर्तते । ) ४

परिव्राजिका—

अनिमित्तमिन्दुवदने किमत्र भवतः पराङ्मुखी भवसि ।
प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः ॥ १८ ॥

---

१ भगवत्यै कौशिक्यायेव नतु राज्ञ इति भावः ॥

२ न्याय्यं युक्तम् । निर्णयस्यायमवरोऽयमुत्तम इति निश्चयस्याभ्युपगमोऽङ्गीकारः । दोषाय दोषहेतुः । तेन राजसहकृतयैव मयैतयोरुपदेशो द्रष्टव्य इति भावः ॥

३ जाग्रतीं मालविकागोपने सावहिताम् । सुप्ताम् अनवहितामिव । अत्र जाग्रत्सुप्तशब्दौ अवहितानवहितयोर्भाक्तौ ॥

४ सासूयम् असूयया सहितं यथा तथा । असूयालक्षणं यथा । " असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता । दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ " इति ॥

अनिमित्तमिति ॥ हे इन्दुवदने चन्द्रमुखि अनिमित्तं नास्ति निमित्तं यत्र कर्मणि तद्यथा तथा निमित्तं विनेत्यर्थः । अत्रभवतः पूज्यस्य राज्ञः पराङ्मुखी विमुखी किं कथं भवसि । तव अकारणकोपो न युक्त इत्यर्थः । हि यतः प्रभवन्त्योऽपि प्रभुत्ववत्योऽपि

**विदूषकः**—णं सकारणं एव्व अत्तणो पक्खो रक्खिदव्वो । ( गणदासं विलोक्य ) णं दिट्ठआ कोपव्वाजेन देवीए परित्तादो भवम् । सुसिक्खिदो वि सव्वो उवदेसदंसणेण णिण्णादो होदि ॥ ( ननु सकारणमेव आत्मनः पक्षो रक्षितव्यः । ननु दिष्टया कोपव्याजेन देव्या परित्रातो भवान् सुशिक्षितोऽपि सर्व उपदेशदर्शनेन निष्णातो भवति ) ॥ १

**गणदासः**—देवि ! श्रूयताम् । एवं जनो गृह्णाति । तदिदानीम् ॥ २

---

कुटुम्बिन्यः कुलीनस्त्रियः कारणकोपाः कारणेन निमित्तेन कोपो यासां तथाभूता भवन्तीति शेषः । अत्र कुलीनानां सकारणः कोप इति सामान्येन वैधर्म्येण राज्ञीकोपानुचितत्वं समर्थ्यत इति वैधर्म्येण सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं विश्वनाथेन । " सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यं च कारणेनेदं कार्येण च समर्थ्यते ॥ साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः। " इति । दण्डिनो मते त्वयं विशेषस्थोऽर्थान्तरन्यासः । आर्या जातिः । लक्षणं तृतीयपद्ये द्रष्टव्यम् ॥ १८ ॥

१ नन्विति किं तत्कारणमित्याह । आत्मन इति । गणदासमुत्तेजयति । दिष्टया हर्षे । देव्याः कोपेन विवादविरामे तव हर्षो भवत्वित्यभिप्रायः । कोपव्याजेन क्रोधस्य मिषेण । परित्रातो रक्षितः । कुत एवमित्याह । सुशिक्षितोऽपि किं पुनरशिक्षित इति भावः । उपदेशदर्शनेन अभिनयदर्शनेन निष्णातः निर्णीतः परिच्छिन्नज्ञान इति यावत् । वृथैव गौरवाधिक्यमारूढस्य तेऽभिनयदर्शने केवलं मानभङ्गः फलमिति न ते युक्तो विवाद इति भावः ॥

२ एवं विदूषकोक्तमिव । गृह्णाति अवधारयति ॥

---

१ इति तर्कवाचस्पतिः । परे तु उपदेशदर्शनविषये निष्णातः कुशलो न भवतीति वते साध्वेतत् ।

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः ।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया ॥ १९ ॥

( इति आसनादुत्थातुमिच्छति । )

देवी—का गई प्पहवदि आआरिअओ सिस्सजणस्स ॥
( का गतिः प्रभवत्याचार्यकः शिष्यजनस्य ) ॥ १

गणदासः—चिरमपदेशशङ्कितोऽस्मि । ( राजानमवलोक्य ) अनुज्ञातं देव्या तदाज्ञापयतु देवः । कस्मिन्नभिनेयवस्तुनि प्रयोगं दर्शयिष्यामि ? ॥ २

राजा—यदादिशति भगवती ॥

परिव्राजिका—किमपि देव्या मनसि वर्तते ततः शङ्किताऽस्मि ॥

---

विवाद इति ॥ आत्मनः स्वकर्तृकाम् । क्रियासंक्रान्तिं क्रियाया अभिनयादिरूपायाः संक्रान्तिं शिष्यमनसि उपदेशद्वारा संयोजनम् । शिष्यगतमात्मगुणमिति यावत् । नानुजानासि नानुमन्यसे । परित्यक्तः कृतत्यागः। यदि नानुज्ञास्यासि तदा त्वां परित्यक्ष्यामीति भावः । पथ्यावक्त्रं वृत्तम् ॥ १९ ॥

१ आचार्यकः गुरुः। स्वार्थे कः ॥

२ अपदेशेन व्याजेन शङ्कितः संजातशङ्कः । व्याजश्च " अभीप्सितार्थसिद्ध्यर्थम् अर्थान्तरानुष्ठानम् " इति महेश्वरः । तथा चात्र राज्ञः मालविकां निगूहयितुं धारिण्या विवादारम्भरूपमर्थान्तरमनुतिष्ठासितमिति सोऽयमपदेशः । शङ्का च वादभीरुरयमकिंचिज्ज्ञ इति लोका वदेयुरिति भीतिः । अत्र अपदे शङ्कितोऽस्मीति पाठे अपदे अस्थाने भीरुत्वाभावेऽपि वादभीरुत्वेनेत्यर्थः । शङ्कितः तर्कितः परैरिति शेषः । साधुरयमपि पाठः । अभिनयवस्तुनि विषये वैषयिकाधिकरणे सप्तमी । अभिनयवस्तु अभिनेतव्यमितिवृत्तम् ॥

देवी—भण वीसद्धम् । पहवदि प्पहू अत्तणो परिअणस्स ॥ ( भण विश्रब्धम् । प्रभवति प्रभुरात्मनः परिजनस्य ) ॥ १

राजा—मम चेति ब्रूहि ॥ २

देवी—भअवदि ! भण दाणिं ॥ ( भगवति ! भणेदानीम् ) ॥

परिव्राजिका—देव ! शर्मिष्ठायाः कृतिं चतुष्पादोत्थं च्छलिकं दुष्प्रयोज्यमुदाहरन्ति । तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः । तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम् ॥ ३

आचार्यौ—यदाज्ञापयति भगवती ॥

---

१ विश्रब्धम् अशङ्कितं यथा तथा । प्रभुः स्वामीति राज्ञि कटाक्षोक्तिः ॥

२ कटाक्षोक्त्याऽऽत्मनि स्थापितं प्रभुत्वं राज्ञ्यामेवारोपयन् राजा प्राह । ममेति । मम राज्ञः ॥

३ शर्मिष्ठायाः ययातिभार्यायाः कृतिं तया रचितमित्यर्थः । चतुष्पदोत्थं चतुर्भ्यः पदेभ्यो वृत्ततुरीयांशेभ्यः उत्तिष्ठति तादृशम्। चतुष्पदीयुक्तमित्यर्थः । च्छलिकं नाट्यविशेषः। तल्लक्षणं तु "तदेव च्छलिकं नाम साक्षाद्यदभिनीयते । व्यपदिश्य पुरावृत्तं स्वाभिप्रायप्रकाशकम् ॥" इति। लक्षणसमन्वयस्तु द्वितीयाङ्के प्रदर्शयिष्यते । दुष्प्रयोज्यं दुःखेन प्रयोजयितुं शक्यम् । उदाहरन्ति वदन्ति । नाट्यवेत्तार इति शेषः । तत्र च्छलिकनाट्ये उभयोर्हरदत्तगणदासयोः एकार्थसंश्रयम् एकः अभिन्नः अर्थः प्रयोज्यं वस्तु संश्रय आश्रयो यस्य तथाभूतं प्रयोगमभिनयं पश्यामः। छलिकगतमेकप्रकरणमेताभ्यामभिनेतव्यमिति भावः । तावता छलिकप्र[illegible]ण उपदेशान्तरम् अन्याच्छिक्षणं ज्ञायत एव। स्थालीपुलाकन्यायेनेति भावः ॥

**विदूषकः**—तेण हि दुवेवि वण्णापेक्खागेहे संगीदरअणं करिअ अत्तभवदो दूदं पेसध। अह वा मुदंगसद्दो एव्व णो उट्ठावयिस्सादि ॥ ( तेन हि द्वावपि वर्णापेक्षागृहे सङ्गीतरचनां कृत्वाऽत्रभवतो दूतं प्रेषयतम् । अथवा मृदङ्गशब्द एव न उत्थापयिष्यति ) ॥ १

**हरदत्तः**—तथा॥(इत्युत्तिष्ठति गणदासो धारिणीमवलोकयति।)

**धारिणी**—( गणदासं विलोक्य ) जयी भोदु अज्जो । णं विजअब्भत्थिणी अहं अज्जस्स ॥ ( जयी भवतु आर्यः । ननु विजयाभ्यर्थिनी अहमार्यस्य ) ॥

( आचार्यौ प्रस्थितौ । )

**परिव्राजिका**—इतस्तावत् ॥

**आचार्यौ**—( परिवृत्य ) इमौ स्वः ॥

**परिव्राजिका**—निर्णयाधिकारे ब्रवीमि । सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ॥ २

---

१ वर्णापेक्षागृहे वर्णस्य भूमिकार्थं रङ्गस्य अपेक्षाया स्वीकारस्य गृहम् । नेपथ्यमित्यर्थः । सङ्गीतरचनां सङ्गीतस्य नृत्यगीतवाद्यात्मकस्य रचनाम् । स्थलनियमादिव्यवस्थामित्यर्थः । सा च भरते द्रष्टव्या । विस्तरभिया नात्रोच्यते ॥

२ निर्णयाधिकारे निर्णयस्य भवतोः सत्त्वासत्वनिर्धारणस्य अधिकारे पदे स्थितेति शेषः । सर्वाङ्गेति । सर्वेषामङ्गानां सौष्ठवस्य अभिनयकुशलत्वात्प्रशस्ततायाः अभिव्यक्तये स्पष्टीकरणार्थम्- "सुष्ठु प्रशंसने" इत्यमरः । उद्गात्रादित्वाद्भावेऽञ् । " प्राणिभृज्जाति वयोवचनोद्गात्रादिभ्योऽञ् " इत्युक्तेः । तादर्थ्ये चतुर्थी । विगतनेपथ्ययोः अलङ्कारशून्ययोः पात्रयोः उक्तपूर्वलक्षणयोः । रा

आचार्यौ—नेदमावयोरुपदेश्यम् ॥ ( इति निष्क्रान्तौ । )

देवी—( राजानमवलोक्य ) जइ राअकज्जेसु वि ईरिसी णिउणदा अज्जउत्तस्स तदो सोहणं भोदि ॥ ( यदि राजकार्येष्वपीदृशी निपुणतार्यपुत्रस्य तदा शोभनं भवति ) ॥ १

राजा—

अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ २० ॥

( नेपथ्ये मृदङ्गध्वनिः । ) ( सर्वे कर्णं ददति । )२

---

मालविकायामनुरागातिशयोत्पादनाय तस्याः सर्वाङ्गावलोकनस्यावश्यकत्वादेषोक्तिः ॥

१ ईदृशी मालविकादर्शनरूपे कार्ये यादृशी तथाविधा । त्वयैवेदमारब्धं विवादप्रकरणमिति भावः ॥

अलमिति ॥ हे मनस्विनि प्रशस्तमनस्के धारिणि ! प्रशंसायां मत्वर्थे । "अस्माया" इति विनिः । अन्यथा असत्यं गृहीत्वा अवधार्य । मयानारब्धेऽत्र प्रकरणे मदारब्धत्वमारोप्येत्यर्थः । अलम् । अन्यथाऽऽशङ्किनी मा भूरित्यर्थः । "अन्यथा पुनः । वितथे च" इति मेदिनी । "अलंखल्वोः" इति क्त्वा । हि इति गम्यम् । यस्मात् इदं विवादप्रकरणं मया न प्रयुक्तं नोत्पादितमिति यावत् । कथं तर्हीदमुत्पन्नमित्याह । प्राय इति । समानविद्याः समाना एका विद्या येषां ते विद्वांसः । प्रायः प्रायेण । परस्परेषामन्योऽन्येषां यशसि कीर्तौ विषये पुरोभागाः दोषमात्रदर्शिनः भवन्ति । अतः समानविद्ययोरनयोर्विवादः साहजिक इति भावः । उक्तपूर्वलक्षणोऽर्थान्तरन्यासोऽलङ्कारः । आर्या जातिः ॥ २० ॥

२ कर्णमिति "सरूपाणाम्" इत्येकशेषो द्वन्द्वश्च । "प्राणितूर्यसेनाङ्गानाम्" इति प्राण्यङ्गत्वादेकवद्भावश्च । ददति मृदङ्गशब्दश्रवणे व्यापारयन्तीत्यर्थः ॥

परिव्राजिका—हन्त ! प्रवृत्तं सङ्गीतकम् तथा ह्येषा ॥ १

भ्रान्तिमान् जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुगमितस्य पुष्करस्य ।
निह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥ २१ ॥

राजा—देवि ! तस्याः सामाजिका भवामः ॥

---

१ हन्त हर्षे । प्रवृत्तम् आरब्धम् ॥

जीमूतेति ॥ जीमूतस्तनितविशङ्किभिः जीमूतस्य मेघस्य स्तनितं गर्जितं विशङ्कन्ते संदिहते तथाभूतैः । मयूरैः अनुगमितस्य हर्षनृत्येनानुसृतस्य । "मेघध्वानेषु नृत्तं भवति च शिखिनाम्" इति कविसमयात् मयूराणां मेघशब्दश्रवणेन नृत्यं वर्ण्यते । उद्ग्रीवैरुन्नतकन्धरैरिति स्वभावोक्तिः । पूर्वं योज्यमिदम् । पुष्करस्य मुरजवाद्यविशेषस्य मार्जनेत्यनेन संबन्धः । निह्रादिनी गभीरस्वरवती । उपहितेन संयोजितेन मध्यमस्वरेण मध्यमस्वरग्रामेणेत्यर्थः । उत्तिष्ठति तथाभूता । "मायूरी मध्यमग्रामे" इति भरतोक्तेः । अत्र उपचितेति पाठे उपचितेन पूर्णतां प्राप्तेनेत्यर्थः । मायूरी एतत्संज्ञका मार्जना वादनाविशेषः । मनांसि प्रति मदयति हर्षयति। "मदी हर्षग्लेपनयोः" इत्यतो णिच् । "मायूरी ह्यर्धमायूरी तथा कर्मारवी पुनः । तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥ गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे । ऊर्ध्वके पञ्चमश्चैव मायूर्यां तु स्वरा मताः ॥" इति भरतः । अत्र मृदङ्गध्वनौ मयूराणां मेघभ्रमप्रतिपादनाद्भ्रान्तिमान्नामाऽलङ्कारः ।"साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता ।" इति विश्वनाथः । प्रहर्षिणी वृत्तम् । "म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयम्" इत्युक्तेः ॥ २१ ॥

देवी—( स्वगतम् ) अहो ! अविणओ अज्जउत्तस्स ॥ ( अहो ! अविनय आर्यपुत्रस्य ) ॥ १ ( सर्वे उत्तिष्ठन्ति । )

विदूषकः—( अपवार्य ) भो धीरं गच्छ । तत्तभोदी धारिणी विसंवाददइस्सदि ॥ ( भो धीरं गच्छ । तत्रभवती धारिणी विसंवादयिष्यति ॥ २

राजा—धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरावोऽयम् ।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥ २२ ॥

---

१ अविनयः धाष्टर्चम् । मत्समक्षमेव मदनिष्टमालविकादर्शनाभिलाष इत्यर्थः ॥

२ अपवार्य अपवारितलक्षणं यथा । "तद्भवेदपवारितम् । रहस्यं तु यदन्यस्य परावृत्त्य प्रकाश्यते ॥ त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।" इति दर्पणे । धीरं गभीरं यथा तथा अप्रकाशितेङ्गित इत्यर्थः । विसंवादयिष्यति आकारचेष्टाविशेषेण भवन्मनोरथमवधार्य गूढमभिनयं प्रतिषिध्य च मालविकादर्शने प्रत्यूहं कृत्वा त्वां विप्रलम्भयिष्यति इति भावः ॥

धैर्यावलम्बिनमिति ॥ धैर्यं विघ्ने सत्यपि कार्यादचलनरूपं मनसोऽचाञ्चल्यम् आलम्बत आश्रयति तथाभूतं धैर्यावलम्बिनमपि धैर्ययुक्तमपीत्यर्थः । "व्यवसायादचलनं धैर्यं विघ्ने महत्यपि ।" इति दर्पणे । माम् अयं श्रूयमाणः मुरजवाद्यरावः मृदङ्गरूपस्य वाद्यस्य ध्वनिः । त्वरयति त्वरायुक्तं करोति । सिद्धिपथं मालविकादर्शनरूपस्य कार्यस्य सिद्धेः मार्गम् । अवतरतः स्वमनोरथस्य स्वस्यात्मनो मन एव रथस्तस्य शब्द इवेत्युत्प्रेक्षा । अत्र पूर्वार्धे त्वरारूपकार्यविरुद्धधैर्यसद्भावमुखेन कार्याभावस्य प्रतिपादनाद्विशेषोक्तिः । धैर्यरूपकारणविरुद्धत्वरासद्भावमुखेन च कारणा-

( इति निष्क्रान्ताः सर्वे । )

## इति प्रथमोऽङ्कः । १

भावप्रतिपादनाद्विभावनेत्यनयोः सङ्करः । तदुक्तं साहित्यदर्पणे विशेषोक्तिप्रकरणे । इह ( विशेषोक्तौ ) च कार्याभावः कार्यविरुद्ध-सद्भावमुखेनापि निबध्यते । विभावनायामपि कारणाभावः कारण-विरुद्धसद्भावमुखेनापि इति । अनयोर्लक्षणे तु । " विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते । " इति । " सति हेतौ फलाभावो विशे-षोक्तिः " इति च उत्तरार्धे तु उत्प्रेक्षा । तस्याश्च मनसि रथत्वारो-पाद्रूपकमङ्गम् इति तयोरप्यङ्गाङ्गिभावेन सङ्करः । आर्या जातिः लक्षणं तृतीयपद्ये द्रष्टव्यम् ॥ २२ ॥

१ अत्र नृत्याभिनयदर्शननिश्चयान्त एव प्रथमाङ्के परिसमापित-व्ये द्वितीयाङ्के विष्कम्भादौ प्रतिपादनीयायाः सङ्गीतरचनाया अपि अत्रैव प्रतिपादनादङ्कावतारो नाम अर्थोपक्षेपकमुक्तम् । तदुक्तं दर्पणे । " अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः । यत्राङ्कोऽव-तरत्येषोऽङ्कावतार इति स्मृतः ॥ " इति । अङ्कः । तल्लक्षणं भरते । " नायकदेवीपरिजनपुरोहितामात्यसार्थवाहानाम् । नैकरसान्तरविहि-तो ह्यङ्क इति स वेदितव्यस्तु ॥ " इति । सविस्तरं चैतल्लक्षणं प्रतिपादितं साहित्यदर्पणे । यथा " प्रत्यक्षनेतृचरितो रसभावस-मुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ विच्छिन्नावान्तरै-कार्थः किञ्चित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्यैर्बीजसंहृति-मान्न च ॥ नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्याणामविरोधाद्विनिर्मितः ॥ नानेकदिननिर्वर्त्यकथया संप्रयोजितः। आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥ दूराह्वानं वधो युद्धं राज्य-देशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा ॥ दन्त-च्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरं च यत् । शयनाधरपानादि नगरा-द्यवरोधनम् ॥ स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिज-

# अथ द्वितीयोऽङ्कः ।

( ततः प्रविशति सङ्गीतरचनायां कृतायामासनस्थः सवयस्यो राजा धारिणी परिव्राजिका विभवतश्च परिवारः । ) १

**राजा**—भगवति ! अत्रभवतोराचार्ययोः कतरस्य प्रथममुपदेशं द्रक्ष्यामः ? ॥ २

**परिव्राजिका**—ननु समानेऽपि ज्ञानवृद्धभावे वयोवृद्धत्वाद्गणदासः पुरस्कारमर्हति ॥ ३

**राजा**—तेन हि मौद्गल्य ! एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु ॥ ४

---

नादीनाममात्यवणिजामपि ॥ प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः । अन्तर्निष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः ॥ " इति ॥

इति श्रीवैय्याकरणशेखरपण्डितराजवंशावतंसश्रीकान्ताचार्यच्छात्रेण राशिवडेकरश्रीसदाशिवबुधसूनुना श्रीअप्पाशर्मविद्यावाचस्पतिना विरचितायां बालबोधिन्याख्यायां मालविकाग्निमित्रव्याख्यायां प्रथमोऽङ्कः ।

---

१ सङ्गीतरचनायां सङ्गीतस्य नृत्यगीतवाद्यानां रचना योजनेति यावत् । तस्यां कृतायां सत्याम् । विभवतः विभवानुरूपेणेत्यर्थः ॥

२ आचार्ययोरिति निर्धारणे षष्ठी । हरदत्तगणदासयोर्मध्य इत्यर्थः । कतरस्य कस्य द्वयोर्निर्धारणे डतरः ॥

३ ज्ञानेन वृद्धो ज्येष्ठः तस्य भावो ज्ञानवृद्धत्वं ज्ञानाधिक्यमित्यर्थः । तस्मिन् समाने तुल्ये सत्यपि । पुरस्कारं प्रथमं प्रयोगदर्शनरूपं संमानम् ॥

४ एवं " गणदास एव प्रथममुपदेशं दर्शयतु " इति आवेद्य कथयित्वा । नियोगमादिष्टं कार्यम् अशून्यं कुरु अनुतिष्ठेत्यर्थः ॥

कञ्चुकी—यदाज्ञापयति देवः ॥ ( इति निष्क्रान्तः । )

गणदासः—( प्रविश्य ) देव ! शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदाऽस्ति। तस्यास्तु छलिकप्रयोगमेकमना देवः श्रोतुमर्हति॥ १

राजा—आचार्य ! बहुमानादवहितोऽस्मि ॥ २

( निष्क्रान्तो गणदासः । )

राजा—( जनान्तिकम् ) वयस्य !

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥ १ ॥

---

१ " शर्मिष्ठा नाम वृषपर्वणो राक्षसराजस्य दुहिता " इति काटयवेमः । कृतिः काव्यम् । लयेन तौर्यत्रिकसाम्येन मध्या मध्यमानयुक्ता मध्यलयसंयुक्तेत्यर्थः । तस्यां शृङ्गारस्य प्रतिपादनान्मध्यो लयस्तदुक्तं भरतेन । " शृङ्गारहास्ययोर्मध्यलयः " इति । चतुष्पदा चत्वारि पदानि वृत्ततुरीयांशा यस्यां तथाभूता । छलिकं छलेन प्रवर्तते तथाभूतो नाट्यविशेषस्तल्लक्षणं तूक्तम् । तस्य प्रयोगमभिनयम् । एकमनाः एकस्मिन्नेव वस्तुनि मनो यस्य तथाभूतः। अनन्यासक्तचित्तः सन् । एतच्च नृत्यमन्यदीयावस्थाऽभिनयच्छलेनात्मनोऽवस्थां सूचयितुं प्रयुज्यत इति च्छलिकमित्युच्यते ॥

२ बहुमानात् अत्यादरेणेत्यर्थः । अवहित एकाग्रचित्तः ॥

नेपथ्येति ॥ नेपथ्यगृहे भूमिकापरिग्रहगेहे स्थितायाः गतायाः विद्यमानायाः तस्याः मालविकायाः । दर्शनसमुत्सुकं दर्शने अवलोकने समुत्सुकमुत्कण्ठितं मे मम चक्षुः नयनं कर्तृ । अधीरतया कालातिशयासहिष्णुत्वेनेत्यर्थः । हेतौ तृतीया । तिरस्करिणीं जवनिकां संहर्तुमुद्धर्तुं पाटयितुमिति यावत् । व्यवसितमिव उद्यतमिव । अतिशयोक्त्यनुप्राणित उत्प्रेक्षालङ्कारः । आर्या तल्लक्षणं तु प्रथमाङ्के तृतीयपद्ये द्रष्टव्यम् ॥ १ ॥

विदूषकः—( अपवार्य ) उवट्ठिदं णअणमहु । ता अप्पमत्तो दाणिं पेक्ख ॥( उपस्थितं नयनमधु । तदप्रमत्त इदानीं प्रेक्षस्व)॥ १

( ततः प्रविशत्याचार्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका । )

विदूषकः—( जनान्तिकम् ) पेक्खदु भवम् । ण क्खु से पडिच्छंदादो वि हीअदि महुरदा ? ॥ ( प्रेक्षतां भवान् । न खल्वस्याः प्रतिच्छन्दादपि हीयते मधुरता ? ) ॥ २

राजा—( अपवार्य ) वयस्य !

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।
सम्प्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ २ ॥

---

१ नयनमधु नयनयोर्नेत्रयोर्मधु इवास्वाद्यं । नयनसुभगं वस्तु मालविकेत्यर्थः । उपस्थितं प्राप्तम् ॥

२ अस्याः मालविकायाः मधुरता रमणीयत्वम् । प्रतिच्छन्दात् दृष्टचरप्रतिमायाः अपेक्षया न हीयते न न्यूनं भवतीति प्रश्नः । यथा त्वया चित्रे मालविकाया रूपं दृष्टं तदपेक्षया प्रत्यक्षीभूतमिदं हीनमुताहो उत्तमम् इति भावः ॥

चित्रगतायामिति ॥ चित्रे गतायां विद्यमानायामस्यां मालविकायां दृष्टायामिति शेषः । मे मम हृदयं मनः कर्तृ । कान्तेः विसंवादम् असादृश्यं शङ्कते संदिग्धे तथाभूतम्। यथा चित्रे दृश्यते तथैवास्या लावण्यं स्यान्न वेति शङ्कितमासीदित्यर्थः । सम्प्रति इदानीं तु येन चित्रकारेण इयं मालविका आलिखिता चित्रे निवेशिता तमालेखकम् । शिथिलसमाधिं शिथिलः लावण्यातिशयचिन्तनेन स्खलितधैर्यतया अदृढः समाधिः चित्तस्यैकाग्र्यं यस्य तथाभूतं मन्ये । चित्रापेक्षयाप्यधिकसौन्दर्यस्य प्रत्यक्षभावात् । " नीवातदीपवच्चित्तं समाधिरभिधीयते । " इति विद्यारण्याचार्याः । प्रायेण चित्रकारा हीनमपि पदार्थं लावण्यमयमिवालिखन्तीति चि-

गणदासः—वत्से ! मुक्तसाध्वसा सत्त्वस्था भव ॥ १

राजा—( स्वगतम् ) अहो सर्वस्थानानवद्यता रूपस्य । तथा हि ॥ २

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निबिडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽमितं च जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथाऽस्या वपुः ॥३॥

---

त्रगतसौन्दर्यमेव पारमार्थिकसौन्दर्यमतिशेते । इयं तु चित्रमपि सौन्दर्येणातिरिणक्ति इति भावः । कान्त्यातिशयो द्योत्यते । आर्या जातिः । लक्षणं तु प्रथमाङ्के तृतीयपद्ये द्रष्टव्यम् ॥ २ ॥

१ मुक्तसाध्वसा मुक्तं त्यक्तं साध्वसं भयं यया तथाभूता । सत्त्वस्था सत्वे मनसो निर्विकारत्वे तिष्ठति तथाभूता सत्वगुणयुक्तेत्यर्थः । सत्वं तु " चित्तस्याविकृतिः सत्वं विकृतेः कारणे सति । " इति । " सत्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्मः " इति विश्वनाथः ॥

२ सर्वस्थानानवद्यता । सर्वेषु स्थानेष्ववयवप्रदेशेषु अनवद्यता अगर्ह्यत्वं सौन्दर्यमित्यर्थः ॥

**दीर्घाक्षमिति** ॥ वदनं मुखम् । दीर्घाक्षं दीर्घे विशाले अक्षिणी नेत्रे यस्य तथाभूतम् । किं च । शरदिन्दुकान्ति शरदिन्दोरिव शरत्कालिकचन्द्रस्येव कान्तिर्यस्य तथाभूतम् । अस्तीति शेषः । बाहू भुजौ अंसयोः स्कन्धयोः अपेक्षया नतौ नम्रौ । उरः हृदयं निबिडोन्नतस्तनं निबिडौ परस्परं संश्लिष्टौ उन्नतौ च स्तनौ यत्र तथाभूतम् । अत एव संक्षिप्तं सङ्कुचितमविशालमिति यावत् । पार्श्वे कुक्षिप्रदेशौ प्रमृष्टे कृतमार्जने इव । मार्जनं शुद्धिर्न्यग्भावश्च । अत्र न्यग्भवनमेव वाचस्पत्यभिमतम् । " ईदूदेद्द्विवचनं प्रगृह्यम् " इति

मालविका—( उपगानं कृत्वा चतुष्पदवस्तु गायति ) ॥ १

दुल्लहो पिओ मे तस्सिं भव हिअअ णिरासं अंभो अपंगओ मे परिप्फुरइ किंवि वामओ । एसो सो चिरदिट्ठो कहं उण उवणइदव्वो णाह मं पराहीणं तुइ गणअ सतिण्हम् ॥ ४ ॥

(दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशम्
अहो अपाङ्गको मे परिस्फुरति किमपि वामकः ।
एष स चिरदृष्टः कथं पुनरुपनेतव्यो
नाथ मां पराधीनां त्वयि गणय सतृष्णाम् ॥४॥ )

---

प्रगृह्यतायां " प्लुतप्रगृह्या अचि नित्यम् " इति प्रकृतिभावः । मध्यो मध्यदेशोऽवलग्नं पाणिमितः मुष्टिग्राह्यः अतिकृश इत्यर्थः । जघनं कटिपुरोभागः । अमितं विशालम् । अत्र नितम्बीति पाठे नितम्बयुक्तमित्यर्थः । पादौ अरालाङ्गुली अराला वक्राः सङ्कुचिता इति यावत् । अङ्गुलयो यत्र तथाभूतौ । अत एव अस्या वपुः शरीरं कर्तृ । नर्तयितुः नृत्यं कारयितुः नाट्यगुरोर्गणदासस्य मनसि यथा यादृशं छन्दः अभिलाषः तथा श्लिष्टं संनिहितमित्यर्थः । समश्लिषज्जतुकाष्ठमित्यादौ श्लिषेः प्रत्यासत्तिमात्रार्थकत्वस्याप्यभ्युपगमात् । सङ्गतमिति तु काटयवेमः । अनेन नृत्यप्रावीण्यं ध्वन्यते । शार्दूलविक्रीडितम् । " सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम् । " इत्युक्तेः । अत्र चतुर्थपादार्थे चरणत्रयगतवाक्यानि हेतव इति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । " हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् । " इत्युक्तेः ॥ ३ ॥

१ उपगानं गानात्प्राक्कर्तव्यं रागानुगतं स्वरपरिवर्तनमित्यर्थः । चतुष्पदवस्तु चतुष्पदं चरणचतुष्टययुक्तं वस्तुप्रबन्धम् । " प्रबन्धो रूपकं वस्तु निबन्धस्याभिधात्रयम् । " इत्युक्तेः ॥

दुर्लभ इति ॥ हे हृदय चित्त ! प्रियः कान्तः दुर्लभः कृच्छ्रेण

( ततो यथारसमभिनयति । ) १

**विदूषकः**—( अपवार्य ) भो वअस्स ! चतुष्पदवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो विअ अप्पा अत्तभोदीए ॥ ( भो वयस्य ! चतुष्पदावस्थाकं द्वारीकृत्य त्वय्युत्थापित इवात्माऽत्रभवत्या ) ॥ २

**राजा**—सखे ! एवमेव ममापि हृदयम् । अनया खलु ॥ ३

---

प्राप्यः । अतः तस्मिन् तद्विषये निराशमाशारहितं भव । दुर्लभस्य प्राप्त्याशाया निष्फलत्वादिति भावः । अहो इत्याश्चर्ये । आशाया निष्फलत्वेऽपि इष्टप्राप्तिफलकस्य वामनयनस्य स्फुरणादाश्चर्यम् । मे वामको वामः अपाङ्गको नेत्रप्रान्तः । किमपि कथमपि किमर्थमित्यर्थः। स्फुरति प्रियस्य दुर्लभत्वादस्य स्फुरणेन किं फलमिति भावः। एषः मनसि प्रत्यक्षायमाणः स प्रियः पुनः कथम् उपनेतव्यः प्राप्तव्यः । एवमात्मनोऽभिलाषं सूचयित्वा प्रियं संबोध्य प्रार्थयति । हे नाथ ! पराधीनामस्वतन्त्रामपि मां त्वयि त्वद्विषये सतृष्णाम् । अभिलाषयुक्तां त्वत्प्राप्त्यभिलाषवतीमित्यर्थः । गणय मन्यस्व । निश्चिन्विति यावत् ॥ ४ ॥

१ यथारसं रसानुगुणम् ॥

२ चतुष्पदावस्थाकं चतुष्पदरूपा एव अवस्था यत्र तद्गीतं द्वारीकृत्य निमित्तीकृत्य । अत्रभवत्या मालविकया । आत्मा स्वशरीरं त्वयि त्वद्विषये उपस्थापित उपहारीकृत इत्यर्थः । गीते चुतस्रोऽवस्थास्तु वैराग्यमौत्सुक्यं संकल्प आत्मोपसर्पणं चेति । " दुर्लभः प्रिय " इति पद्ये त्विमाः क्रमशः प्रतिचरणं द्रष्टव्याः ॥

३ हृदयमभिप्राय इत्यर्थः ॥

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणी सन्निकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ ५ ॥

( मालविका गीतान्ते निष्क्रमितुमारब्धा । )

विदूषकः—भोदि चिठ्ठ । किं वि वो विसुमरिदो तत्त कम्मभेदो । तं दाव पुच्छिस्सम् ॥ ( भवति ! तिष्ठ । किमपि वो विस्मृतः तत्र कर्मभेदः । तं तावत्प्रक्ष्यामि ) ॥ १

---

जनमिति ॥ हे नाथ ! इमं मद्रूपं जनम् । अनुरक्तं त्वद्विषयकप्रीतियुतं विद्धि जानीहि । इति एतदात्मकं गेये गाने स्थितामिति शेषः । वचनं स्वाङ्गस्यात्मनः शरीरस्य निर्देशः पूर्वो यत्र कर्मणि तथाभूतं यथा तथा। नाथ मामिति मालविकास्वरूपमात्मानं निर्दिश्येत्यर्थः। अभिनयन्त्या हस्तादिना तदभिप्रायं सूचयन्त्या। धारिणीसंनिकर्षात् राज्ञ्याः सामीप्याद्धेतोः । प्रणयगतिं प्रणयस्यात्मविषयकानुरागस्य गतिं राजमनसि प्रवेशम् । अदृष्ट्वा अनालोक्य । प्रणयोद्भूतरोमाञ्चादिसमुद्भवमदृष्ट्वेत्यर्थः । सुकुमाराऽनुद्धता प्रार्थनैव व्याजो मिषं यत्र कर्मणि तथोक्तम् । " नाथ मां पराधीनां त्वयि गणय सतृष्णाम् " इति प्रार्थनामिषेणेत्यर्थः । अहम् उक्त इवेत्युत्प्रेक्षा । मालिनी वृत्तम् । " ननमयययुतेयं मालिनी भोगिलोकैः । " इति लक्षणात् ॥ ५ ॥

१ भवति मालविकासंबोधनमिदम् । " वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः । " इत्युक्तेः । कर्मभेदः । अभिनये विशेषः विधिविशेषो वा । किमपि कश्चिदित्यर्थेऽव्ययमिदम् । एतद्वाक्यमारभ्य " सा ननु वो विस्मृता " इत्यन्तेन राज्ञा मालविकादर्शनार्थं हास्यकरवचनप्रयोगाद्व्याहारो नाम वीथ्यङ्गमुक्तं भवति । तल्लक्षणं

**गणदासः**—वत्से ! क्षणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि । ( मालविका स्थिता ) ॥ १

**राजा**—( स्वगतम् )अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति । तथा हि ॥ २

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥६॥

---

तु साहित्यदर्पणे । " व्याहारो यत्परस्यार्थे हास्यलोभकरं वचः ।" इति । मालविकां राज्ञः पुरश्चिरमवस्थापयितुं च विदूषकवचनप्रवृत्तिः ॥

१ वत्से शिष्यो गुरुणा वत्स इति वक्तव्यः । तदुक्तम् । " वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्यः " इति । स्त्रियां टाप् । उपदेशे नाट्यप्रयोगरूपे विशुद्धा कर्मविस्मरणरूपदोषरहिता सती विस्मृतं कर्म प्रदर्श्येत्यर्थः ॥

२ शोभान्तरं कान्तिविशेषम् । अनेन माधुर्यं नाम नायिकालङ्कार उच्यते । तदुक्तम् । " सर्वावस्थाविशेषेषु माधुर्यं रमणीयता । " इति ॥

**वाममिति** ॥ सन्धिस्तिमितवलयं सन्धौ मणिबन्धरूपे स्तिमितानि निश्चलतयावस्थितानीत्यर्थः वलयानि कङ्कणानि यस्मिंस्तथाभूतम् । वामं सव्यं हस्तं नितम्बे कटिपश्चाद्भागे न्यस्य निधाय । द्वितीयं दक्षिणं हस्तमित्यर्थः । स्रस्तं शिथिलं यथा तथा मुक्तं विसृष्टम् । अत एव श्यामायाः सरलालतायाः विटपेन शाखया सदृशं कृत्वा । तदुक्तम् ऋतुसंहारे । श्यामालताः कुसुमभारनतप्रवालाः स्त्रीणां हरन्ति धृतभूषणबाहुकान्तिम् । " इति । पादाङ्गुष्ठेन आलुलितानि ईषच्चालितानि कुसुमानि पूर्वं विकीर्णानि पुष्पाणि

देवी—णं गोदमवअणं वि अज्जो हिअए करेदि ? ॥ (ननु गौतमवचनमप्यार्यो हृदये करोति ?) ॥१

गणदासः—देवि ! मा मैवम् । देवप्रत्ययात् संभाव्यते सूक्ष्मदर्शिता गौतमस्य । पश्य ॥ २

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ ७ ॥

---

यस्य तथोक्ते कुट्टिमे इन्द्रनीलादिभिर्निबद्धायां भूमौ । पातिताक्षं पातिते व्यापारिते अक्षिणी नेत्रे यस्मिन् तथाभूतम् । ह्रिया चरणाग्रन्यस्तदृष्टीत्यर्थः । ऋजु सरलमायतं च अर्धम् उपरितनः शरीरार्धभागो यत्र तथाभूतं च । अस्याः मालविकायाः स्थितमवस्थानं निष्क्रियतया स्थितिरित्यर्थः । नपुंसके भावे क्तः । नृत्यात् नृत्यापेक्षया कान्तं रमणीयं वर्तत इति शेषः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । मन्दाक्रान्ता वृत्तम् । "मन्दाक्रान्ताम्बुधिरसहयैर्मो भनौ तौ गुरू चेत् ।" इति रत्नाकरे ॥ ६ ॥

१ गौतमवचनमिति गौतमस्य काका अनभिज्ञस्येत्यर्थः । हृदये करोति विचार्यतयाऽङ्गीकरोति ॥

२ देवप्रत्ययात् देवे राज्ञि प्रत्ययात् सूक्ष्मदर्शित्वस्यानुभावाद्धेतोः । गौतमस्य विदूषकस्यापि सूक्ष्मदर्शित्वं संभाव्यते । साहचर्यनियमादित्यर्थः । पश्येति तथा हीत्यर्थे ॥

मन्द इति ॥ विपश्चितो विदुषः संसर्गेण सहवासेन मन्दो मूर्खोऽपि अमन्दताम् अमूर्खत्वं विद्वत्त्वमित्यर्थः एति प्राप्नोति । पङ्कं छिनत्ति दूरीकरोति पङ्कच्छित् कतकनामा वृक्षः तस्य फलस्य निकषेण संसर्गेणेति यावत् । आविलं कलुषं पयो जलमिव । अत्रामन्दता नाम शुद्धत्वम् । पथ्यावक्त्रं वृत्तम् ॥ ७ ॥

( विदूषकं विलोक्य ) तच्छृणुमो विवक्षितमार्यस्य ॥ १

**विदूषकः**—( गणदासं विलोक्य ) कोसिइं दाव पुच्छ । पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सम् ॥ ( कौशिकीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणिष्यामि ) ॥ २

**गणदासः**—भगवति ! यथादृष्टमभिधीयतां गुणो वा दोषो वेति ॥ ३

**परिव्राजिका**—यथादृष्टं सर्वमनवद्यम् । कुतः ॥ ४

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव ॥८॥

---

१ विवक्षितं वक्तुमिष्टम् ॥

२ तावत् प्रथमम् ॥

३ यथादृष्टं दृष्टमनुसृत्येत्यर्थः ॥

४ यथादृष्टं दृष्टमनतिक्रम्य । अनवद्यमगर्ह्यं रमणीयमित्यर्थः । " अवद्यपण्य " इति निपातनात् साधु ॥

**अङ्गैरिति** ॥ अन्तर्निहितवचनैः अन्तः अन्तर्भागे निहितं वचनं गीतोक्तिर्यैस्तथाभूतैरिवेति गम्योत्प्रेक्षा । अङ्गैरवयवैः करणभूतैः अर्थः सम्यक् सूचितः । गीतानुरूपाभिनयकरणेऽङ्गानां पाटवातिशयादेषोक्तिः । पादन्यासः पादयोर्नृत्यावसरे निक्षेपः । लयं मानसाम्यमनुगतोऽनुसृतः । अत्रोपगत इत्यपि पाठः । लयलक्षणं तु भरते । " च्छन्दोऽक्षरपदानां हि समत्वं यत्प्रकीर्तितम् । कलाकलान्तरकृतः स लयो मानसंज्ञितः ॥ " इति । तथा रसेषु शृङ्गारादिषु तन्मयत्वं रसात्मकत्वमिवास्या भवतीति शेषः । रसानुगुणचेष्टाकरणे तस्याः पाटवातिशयादेवमुत्प्रेक्षा । अभिनयः नाट्यप्र-

**गणदासः**—देवः कथं मन्यते ? ॥

**राजा**—वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः ॥ १

**गणदासः**—अद्य नर्तयिताऽस्मि । कुतः ॥ २

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।
श्यामायते न विद्वत्सु यः काञ्चनमिवाग्निषु ॥ ९ ॥

---

योगः । " प्रयोगो यस्तु नाट्यादेर्भवेदभिनयो हि सः । " इत्युक्तेः। शाखायोनिः शाखा आङ्गिकोऽभिनयः योनिः प्रभवो यस्य तथाभूतः । आङ्गिकबहुल इत्यर्थः । " आङ्गिकस्तु भवेच्छाखा " इति भरतः । मृदुरनुद्धतश्च सुकुमार इत्यर्थः । " प्रयोगो द्विविधश्चैव विज्ञेयो नाट्यमाश्रितः । सुकुमारस्तथा विद्धो नानाभावरसाश्रयः ॥ " इति भरतोक्तेः। आङ्गिकेऽपि मृदुत्वोक्त्या नैपुण्यातिशयो द्योत्यते । तद्विकल्पानुवृत्तौ तस्य नाट्यप्रयोगस्य विकल्पसहिता विरामसहकृता या अनुवृत्तिः पुनः प्रयोगः तत्र। शाकपार्थिवादित्वात्समासः। भावः हस्तादिभिः पद्यार्थसूचनम् । कर्ता स एव । अत्र एवशब्दोऽत्यन्तसादृश्ये । सः नायकादौ प्रत्यक्षायमाण एव रागबन्धः प्रीतिसम्बन्ध इव वर्तमान इति शेषः । यथा नायकादौ पूर्वरागाद्युत्पत्तौ दृश्यतेऽवस्था तथैवास्यामवलोकितेति भावः । स च भावं मनः प्रति । विषयात् अन्यविषयात् आच्छिद्य नुदति आत्मनि प्रेरयतीत्यर्थः । अस्या भावमवलोक्य मनो विषयान्तराणि विस्मरतीवेत्यर्थः। मन्दाक्रान्ता वृत्तम् । लक्षणं तूक्तम् ॥ ८ ॥

१ स्वपक्षशिथिलाभिमानाः । स्वस्यात्मनः पक्षे पक्षविषये शिथिलाभिमानाः क्षीणगर्वाः संवृत्ताः जाताः । हरदत्तशिष्यापेक्षयाऽस्यां कौशलातिशयप्रत्ययादिति भावः ॥

२ नर्तयिता नाट्यगुरुः । शिष्यप्रशंसाया अद्यैव जातत्वादद्याहं कृतार्थोऽस्मि इत्यर्थः ॥

**उपदेशमिति** ॥ सन्तः सदसद्विवेकक्षमा विद्वांसः कर्तारः उप-

देवी—दिठ्ठिआ परिक्खआराहणेण अज्जो वड्ढदि ॥ (दिष्ट्या परिषदाराधनेन आर्यो वर्धते) ॥ १

गणदासः—देवि ! त्वत्परिग्रहोऽपि मे वृद्धिहेतुः । (विदूषकं विलोक्य) गौतम ! वदेदानीं यत्ते मनसि वर्तते ॥

विदूषकः—पढमोवदेसदंसणे पढमं बह्मणपूजा कादव्वा । सा णं वो विसुमरिदा ॥ (प्रथमोपदेशदर्शने प्रथमं ब्राह्मणपूजा कर्तव्या । सा ननु वो विस्मृता) ॥ २

परिव्राजिका—अहो प्रयोगाभ्यन्तरः प्रश्नः ॥ ३

(सर्वे प्रहसिताः मालविकाऽपि स्मितं करोति ।)

---

देशिनः उपदेष्टुः शिक्षकस्येत्यर्थः । तं वक्ष्यमाणम् उपदेशं शिक्षां शुद्धं निर्दोषं विदुः जानन्ति । "विदो लटो वा" इति उस् । कमुपदेशमित्याह । यः उपदेशः । अग्निषु काञ्चनं सुवर्णमिव विद्वत्सु संक्रान्तः न श्यामायते न दुष्टो भवति । "लोहितादिडाज्भ्यः" इति क्यषि "वा क्यषः" इत्यात्मनेपदम् । अनुक्तहेतुको व्यतिरेकालङ्कारः । उपमानात्काञ्चनादपेक्षयोपदेशस्याधिक्यबोधनात् । "आधिक्यमुपमेयस्योपमानान्न्यूनताऽथ वा । व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा ॥" इत्युक्तेः ॥ ९ ॥

१ परिषदाराधनेन परिषदः सभाया आराधनेन संतोषणेन हेतुना ॥

२ एतेन शुद्धहास्यविहितं नर्म नाम कौशिक्यङ्गमुक्तम् । तल्लक्षणं तु "वैदग्ध्यक्रीडितं नर्म । इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् । विहितं शुद्धहास्येन सश्रृङ्गारभयेन च ॥" इति ॥

३ प्रयोगाभ्यन्तरः प्रयोगानुगत इत्यर्थः । उपहासोऽयम् ॥

**राजा**–( स्वगतम् ) उपात्तसारश्चक्षुषा मे स्वविषयः । यदनेन ॥ १

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम् ।
असमग्रलक्ष्यकेशरमुच्छ्वसदिव पङ्कजं दृष्टम् ॥ १० ॥

**गणदासः**–महाब्राह्मण ! न खलु प्रथमं नेपथ्यसवनमिदम् । अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः ॥ २

**विदूषकः**–मए णाम सुक्खघणगज्जिदे अंतरिक्खे जलपाणं इच्छदा चादआइदं ॥( मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् ॥ ) ३

---

१ मे मम चक्षुषा कर्त्रा । स्वविषयः मालविकादर्शनमित्यर्थः । उपात्तसारः उपात्तो गृहीतः सारः स्थिरांऽशो यस्य तथाविधः कृत इत्यर्थः । दृष्टद्रष्टव्यं मे चक्षुरित्यर्थः । अनेन नेत्रेण कर्त्रा ॥

**स्मयमानमिति** ॥ आयताक्ष्याः विशालनेत्रायाः मालविकायाः । किञ्चिदभिव्यक्तदशनशोभि किञ्चिदीषदभिव्यक्तैः स्पष्टीभूतैः दशनैर्दन्तैः शोभते तथाभूतम् । स्मयमानम् ईषद्धासं कुर्वत् । " ष्मिङ् ईषद्धसने " इत्यतो लटः शानच् । मुखं वक्त्रं कर्मभूतम् । असमग्रलक्ष्यकेशरम् असमग्रम् असाकल्येन लक्ष्याणि नयनगोचरीभवन्ति केशराणि यस्य तथाभूतम् उच्छ्वसत्फुल्लत् पङ्कजं कमलमिव दृष्टम् । अत्र दशनकेशराणां मुखकमलयोः स्मितविकाशयोर्बिम्बानुबिम्बभावेनोपन्यासाद्बिम्बानुबिम्बभावेनोपमा । आर्या जातिः १०

२ नेपथ्यसवनं नाट्यमण्डपे विघ्नोपशान्तये प्रथमं क्रियमाणो यज्ञः । स च भरतेन नाट्यशास्त्रारम्भे प्रोक्तः । नेपथ्यसेवनमित्यपि पाठः । तत्र च भूमिकापरिग्रह इत्यर्थः । महाब्राह्मणमिति दक्षिणीयामिति च व्याजोक्तिः । दक्षिणामर्हति दक्षिणीयः । " कडङ्करदक्षिणाच्छ च " इति छः ॥

३ अन्तरिक्षे गगने । शुष्कघनानां निर्जलमेघानां गर्जितं यत्र

परिव्राजिका—एवमेव ॥

विदूषकः—तेण हि पंडिदपरितोसपच्चआ णं मूढा जादी। जदि अत्तभोदीए शोहणं भणिदं तदो इमं से पारितोसिअं पअच्छामि ॥ (तेन हि पण्डितपरितोषप्रत्यया ननु मूढा जातिः। यद्यत्रभवत्या शोभनं भणितं तत इदं ते पारितोषिकं प्रयच्छामि)॥ १

( इति राज्ञो हस्तात्कटकमाकर्षति। )

देवी—चिठ दाव। गुणंतरं अजाणंतो किं णिमित्तं तुमं आहरणं देसि ? ॥ ( तिष्ठ तावत्। गुणान्तरमजानन् किंनिमित्तं त्वमाभरणं ददासि ? ) ॥

विदूषकः—परकेरं ति करिअ ॥ (परकीयमिति कृत्वा)॥ २

देवी—( आचार्यं विलोक्य) अज्ज गणदास ! णं दंसिदोवदेसा दे सिस्सा ॥ ( आर्य गणदास ! ननु दर्शितोपदेशा ते शिष्या )॥ ३

---

तथाभूते सति। चातकायितं चातकवदाचरितम्। " कर्तुः क्यङ् सलोपश्च"इति क्यङ् क्तश्च ततः। यथा शुष्कमेघगर्जितमाकर्ण्य चातको वञ्चितो भवति एवं भवतः प्रयोगडम्बरमालोकमानोऽहं विप्रलब्ध इति भावः। शुष्कं निःसारं निष्फलमित्यर्थः। इति वा एतच्च गर्जितविशेषणम् ॥

१ मूढा जातिः मादृशो मूढजन इत्यर्थः। पण्डितपरितोषप्रत्यया पण्डितानां विशेषज्ञानां परितोष एव प्रत्ययो विश्वाससाधनं यस्याः सा हेतुहेतुमतोरभेदाङ्गीकारात्। पण्डितजनसन्तोषत एव मूढैः साधोः साधुत्वं प्रतीयते इति भावः। पारितोषिकम् उपहारः ॥

२ परकीयमन्यदीयम्। इति कृत्वा इति हेतोरित्यर्थः ॥

३ दर्शितोपदेशेति। तेन हि गच्छत्वेषेति भावः ॥

**गणदासः**—वत्से ! एहि गच्छाव इदानीम् ॥ ( सहाचार्येण निष्क्रान्ता मालविका । )

**विदूषकः**—( जनान्तिकम् ) एत्तिओ मे मदिविहवो भवंतं सेविदुम् ॥ ( एतावान्मे मतिविभवो भवन्तं सेवितुम् ) ॥ १

**राजा**—अलमलं परिच्छेदेन । अहं हि ॥ २

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम् ॥ ११ ॥

**विदूषकः**—( जनान्तिकम् ) साहु ! दलिद्दो विअ आदुरो वेज्जेण ओसहं दीअमाणं इच्छसि ? ॥ (साधु ! दरिद्र इवातुरो वैद्येनौषधं दीयमानमिच्छसि ? ) ॥ ३

---

१ एतावान् मालविकादर्शनपर्यन्त इत्यर्थः । मतिविभवः बुद्धिप्रभावः । एतावानेव नाधिक इत्यर्थः । अत एव परिच्छेदोऽयम् ॥

२ परिच्छेदेन एतावानितीयत्ताकरणेन । अतः परमपि भवत्साहाय्यमपेक्षितमिति भावः ॥

भाग्येति ॥ तस्याः मालविकायाः तिरस्करिणीं जवनिकान्तःप्रवेशमिति यावत् । अक्ष्णोर्नेत्रयोर्भाग्यास्तमयमिव भाग्यविनाशमिव । हृदयस्य मनसः महोत्सवावसानमिव महोत्सवस्यावसानं समाप्तिमिव । धृतेः धैर्यस्य द्वारपिधानमिव निरोधमिव प्रवेशप्रतिबन्धमिवेत्यर्थः । तस्यां निष्क्रान्तायां नयनं निष्फलीभूतम् । महोत्सवो नष्टो धैर्यं च व्यपेतमिति भावः । अत एव ममानवधानाद्भवन्तमन्तरा न मे गतिरिति एतावान् मे मतिविभव इति परिच्छेदो न कर्तव्य इति भावः । उत्प्रेक्षालङ्कारः । आर्या जातिः ॥ ११ ॥

३ यथा रोगातुराय दरिद्राय वैद्यो नौषधं ददात्येवं तव सहायं नाहं करोमीति भावः ॥

हरदत्तः—( प्रविश्य ) देव ! मदीयमिदानीं प्रयोगमवलोकयितुं प्रसादः क्रियताम् ॥

राजा—( स्वगतम् ) अवसितो मे दर्शनार्थः । ( दाक्षिण्यमवलम्ब्य प्रकाशम् ) ननु पर्युत्सुका एव वयम् ॥ १

हरदत्तः—अनुगृहीतोऽस्मि ॥

( नेपथ्ये )

जयतु जयतु देवः । उपारूढो मध्याह्नः । तथा हि ॥ २

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि ।
बिन्दूत्क्षेपान्पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृप गुणैर्दीप्यते सप्तसप्तिः ॥ १२ ॥

---

१ अवसित इति । दर्शनार्थः दर्शनस्य प्रयोगावलोकनस्यार्थः प्रयोजनं मालविकादर्शनरूपम् अवसितं समाप्तं निष्पन्नमिति यावत् । दाक्षिण्यं सारल्यमुभयत्र तुल्यत्वम् । पर्युत्सुकाः प्रयोगदर्शन उत्कण्ठिताः ॥

२ उपारूढः उत्पन्न इत्यर्थः । मध्याह्नोऽह्नो मध्यं दिनस्य मध्यकाल इत्यर्थः ॥

पत्रच्छायास्विति ॥ हंसाः कर्तारः । दीर्घिकापद्मिनीनां दीर्घिकाणां वापीनां सम्बन्धिनीनां पद्मिनीनां कमलिनीनां छायासु मुकुलितनयनाः मुकुलितानि निमीलितानि नयनानि नेत्राणि यैस्तथाभूताः सन्तीति शेषः । रविकराणामतिप्रखरत्वादसह्यत्वेन मुकुलितनयना इति स्वभावोक्तिः । सौधानि राजगृहाणि कर्तृणि । "सौधोऽस्त्री राजसदनम्" इत्यमरः । वलभिपरिचयद्वेषिपारावतानि वलभीनां गृहच्छादनार्थे वक्रदारूणां परिचयं द्विषन्ति तथाभूताः पारावताः कलरवाः यत्र तथाभूतानि । अत्र हेतुः । अत्यर्थतापात्

---

१ 'पारवे' इति भाषायाम् ।

विदूषकः—अविहा अविहा ! अह्माणं भोअणवेला। अत्त-भवदो उइदवेलादिक्कमे चिइच्छआ दोसं उदाहरंति । हरदत्त ! किं भणासि ? ॥ ( अविहा अविहा ! अस्माकं भोजनवेला । अत्रभवत उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति । हरदत्त ! किं भणासि ) ? ॥ १

हरदत्तः—अस्ति चान्यस्य वचनावकाशोऽत्र ॥ २

---

अत्यन्ततापात् हेतोः । " गोपानसी तु वलभी च्छादने वक्रदारुणि । " इत्यमरः । अस्य ह्रस्वान्तत्वमप्याह महेश्वरः । पिपासुः जलं पातुमिच्छुः। "पा पाने" इत्यतः सनि "सनाद्यन्त" इत्युः।शिखी मयूरः । बिन्दूनां जलकणानामुत्क्षेपान् उद्गमान् उत्पतितान् जलबिन्दूनित्यर्थः । भ्रान्तिमद्भ्रमणयुक्तं वारियन्त्रं जलयन्त्रं परिसरति उपगच्छति । हे नृप राजन् । गुणैः शौर्यादिभिः समग्रः पूर्णस्त्वमिव । सर्वैरुस्रैः किरणैः समग्रः पूर्णः सप्तसप्तिः सप्त सप्तयोऽश्वा यस्य स सूर्यः कर्ता। दीप्यते प्रकाशते । "हयसैन्धवसप्तयः" " समग्रं सकलं पूर्णम्" इति चामरः । अत्र समग्रैरिति पाठे चैतद्गुणानामेव विशेषणम् । सूर्यस्य सप्ताश्वत्वे प्रमाणं श्रुतिः । " सप्त त्वा हरितो रथे वहन्ति देव सूर्य " इति । अत्र हंसादीनां नयनमुकुलनादौ सूर्यदीपनस्य हेतुत्वेनोपन्यासाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । तस्य चतुर्थपादगता बिम्बप्रतिबिम्बभावेनोपमाङ्गम् इति सङ्करः । स्रग्धरा वृत्तम् ॥ १२ ॥

१ अत्रभवतः पूज्यस्य भोजनस्येत्यर्थः । उचितवेलातिक्रमे योग्यकालस्योल्लङ्घने सति चिकित्सका वैद्याः दोषम् उदाहरन्ति कथयन्ति । तद्भन्तव्यमिति भावः । " नाजीर्णे भोजनं कुर्यात्कुर्यान्नातिबुभुक्षितः । " इत्युक्तेः ॥

२ अन्यस्य प्रतिपक्षिणो गणदासस्य । कर्तरि षष्ठी । वचनावकाशः वचनस्य " त्वत्पक्षपातिनापि राज्ञा नावलोकितस्ते प्रयोग

राजा—तेन हि त्वदीयमुपदेशं श्वो द्रक्ष्यामः। विरमतु भवान्॥

हरदत्तः—यथाज्ञापयति देवः ॥ (इति निष्क्रान्तः।)

देवी—णिव्वत्तेदु अज्जउत्तो मज्झणविहिम् ॥ (निर्वर्तयत्वार्यपुत्रो मज्जनविधिम्) ॥ २

विदूषकः—भोदी! विसेसेण पाणभोअणं तुवरावेहि ॥ (भवति! विशेषेण पानभोजनं त्वरय) ॥

परिव्राजिका—(उत्थाय) स्वस्ति भवते ॥ (इति देव्या सह निष्क्रान्ता।)

विदूषकः—भो! ण केवलं रूपे सिप्पे वि अदुदीआ मालविआ ॥ (भो! न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका)॥ ३

राजा—वयस्य!

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।
उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः ॥ १३ ॥

---

इति मदपेक्षया निकृष्टतरस्त्वम" इतिरूपस्य निन्दावचनस्य अवकाशोऽवसरः। तेन मदुपदेशमवलोक्यैव गमनं युक्तमिति भावः ॥

१ तेन हि एवं चेदित्यर्थः। विरमतु विरामं लभताम्। विरम्यतामित्ययुक्तः पाठः ॥

२ मज्जनविधिं स्नानक्रियाम्। निर्वर्तयतु निष्पादयतु करोत्वित्यर्थः। मध्याह्नविधिमिति पाठे मध्याह्नसम्बन्धिनं विधिं स्नानभोजनादिक्रियामित्यर्थः ॥

३ अद्वितीया न विद्यते द्वितीयम् उपमानं यस्यास्तथाभूता निरुपमा ॥

अव्याजेति ॥ अव्याजसुन्दरीम्। अव्याजेन भूषणभारादिव्याजाभावेन सुन्दरीं स्वभावसुन्दरीमित्यर्थः। तां ललितेन विज्ञानेन। सुन्दरेण शिल्पज्ञानेन योजयता विधात्रा ब्रह्मणा कर्त्रा। विषदिग्धः विषेण दिग्ध उपलिप्तः कामस्य मदनस्य बाणः उपकल्पितः सज्जि-

किं बहुना चिन्तयितव्योऽस्मि ॥ १

विदूषकः—भवदा वि अहं । दिढं विपणिकंदू विअ मे हिअअब्भंतरं दज्झइ ॥ ( भवताऽप्यहम् । दृढं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते ) ॥ २

राजा—एवमेव भवानस्मदर्थे त्वरताम् ॥ ३

विदूषकः—गृहीददक्खिणो ह्मि । किंतु मेहावलीणिरुद्धा जोण्हा विअ पराहीणदंसणा तत्तभोदी मालविआ । भवं वि सूणापरिचरो विअ गिद्धो आमिसलोलुबो भीरुओ अ । अच्चंतादुरो विअ कज्जसिद्धिं पत्थंतो मे रोआसि ॥ ( गृहीतदक्षिणोऽस्मि । किंतु मेघावलीनिरुद्धा ज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका । भवानपि सूनापरिचर इव गृध्र आमिषलोलुपो भीरुकश्च । अत्यन्तातुर इव कार्यसिद्धिं प्रार्थयमानो मे रोचसे ) ॥ ४

---

धापितः । यथा विषदिग्धो बाणः समधिकं पीडयति एवं स्वभावसुन्दर्यपि विज्ञानयुक्तेयं मे मनसि मदनानलं समधिकमुद्दीप्य व्यथयतीति भावः । अत्र विज्ञानयोजनबाणसन्निधापनरूपयोर्वस्तुनोः संबन्धोऽसंभवन् मालविकाशिल्पज्ञानयोर्बाणविषसादृश्यमाक्षिपतीति निदर्शनालङ्कारः । आर्या जातिः ॥ १३ ॥

१ चिन्तयितव्यः स्मरणीयस्त्वयेति शेषः । कामस्यातीवोद्दीपनादतः परं न जीविष्यामि इति भावः ॥

२ भवतापि चिन्तनीय इत्यनुषज्यते । अत्र हेतुमाह । विपणिकन्दुरिव विपण्याः पण्यवीथिकायाः संबन्धी कन्दुः स्वेदनी भाटी इति ख्यातः पात्रविशेषः । सुरानिष्पादनपात्रविशेष इति महेश्वरः । काटयवेमस्तु भ्राष्ट्रमित्याह । यथा भ्राष्ट्रं कान्दविकविपणौ दह्यते तथैव मम हृदयाभ्यन्तरं बुभुक्षया पीड्यत इति भावः ॥

३ एवमेव यथा भोजने त्वरसे तथेति भावः ॥

४ गृहीतदक्षिणः गृहीता दक्षिणा पुरस्कारद्रव्यं येन तथाभूतः

राजा—कथमनातुरो भविष्यामि ॥

सर्वान्तःपुरवनिताव्यापारप्रतिनिवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥ १४ ॥

( इति निष्क्रान्ताः सर्वे । )

## इति द्वितीयोऽङ्कः ।

---

बद्धपरिकर इति यावत् । यथा दत्तद्रव्यः सेवकः सर्वदा सन्निहितो यथाकालं कार्यं साधयते तथाहमस्मीति भावः । परिहासोऽयम् । मेघावलीनिरुद्धा मेघावल्या मेघपङ्क्त्या निरुद्धा अन्तरिता ज्योत्स्ना चन्द्रिकेव । पराधीनं दर्शनं यस्यास्तथाभूता पराधीनदर्शना । राज्ञी-प्रतिबन्धादिति भावः । सूनापरिचरः सूनायां: वधस्थानस्य परि-चरः समीपसंचारी । आमिषलोलुपो आमिषे मांसे पक्षे भोग्यवस्तु-नि च लोलुपोऽतिशयेन लुब्धः । गृध्रः पक्षिविशेष इव । भीरुर्भ-यशीलश्च । अत्रोपमायागर्ह्यत्वमपि विदूषकवचनान्न दोषाय । अत्यन्तातुरः रोगेणात्यन्तपीडितः आसन्नमरण इति यावत् । कार्य-सिद्धिं रोगपरिहाररूपाम् । प्रार्थयमानः इच्छन् । रोचसे प्रतिभासि । "चन्द्रिका कौमुदी ज्योत्स्ना" इत्यमरः । "सूना पुत्र्यां वधस्थाने" इति । " आमिषं पुन्नपुंसकम् । भोग्यवस्तुनि संभोगेऽप्युत्कोचे पललेऽपि च ॥ " इति च मेदिनी । अनातुर इति युक्तः पाठ उत्तरवचनानुरोधात् । तथा च त्वं नातुरोऽसीति भावः ॥

**सर्वेति** ॥ सर्वासामन्तःपुरवनितानाम् अवरोधवर्तिस्त्रीणां व्या-पारात्संबन्धात्प्रतिनिवृत्तं परावृत्तं हृदयं यस्य तथाभूतस्य मे मम स्नेहस्य प्रीतेः सा वामलोचना सुन्दरनयना मालविकैव एकायनी-भूता मुख्याश्रयभूता । अत एव तदलाभादातुर एवाहमिति भावः । आर्या ॥ १४ ॥

इति श्रीअप्पाशर्मविद्यावाचस्पतिविरचितायां बालबोधिन्याख्यायां मालविकाग्निमित्रव्याख्यायां द्वितीयोऽङ्कः ।

# अथ तृतीयोऽङ्कः।

( ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका। )

**समाहितिका**—आणत्त ह्मि भअवदीए । " समाहितिए ! देवस्स उववणत्थं बीजपूरअं गेण्हिअ आअच्छे" त्ति । ता दाव पमदवणपालिअं महुअरिअं अण्णेसामि। ( परिक्रम्यावलोक्य च) एसा तवणीआसोअं आलोअंती महुअरिआ चिट्ठदि । ता जाव णं संभावेमि ॥ ( आज्ञप्ताऽस्मि भगवत्या । "समाहितिके ! देवस्योपवनस्थं बीजपूरकं गृहीत्वा आगच्छ " इति । तद्यावत्प्रमदवनपालिकां मधुकरिकामन्विच्छामि । एषा तपनीयाशोकमालोकमाना मधुकरिका तिष्ठति। तद्यावदेनां संभावयामि ) ॥ १

( ततः प्रविशत्युद्यानपालिका । )

---

१ भगवत्या कौशिक्या । " भगवन्निति वक्तव्याः सर्वे देवर्षिलिङ्गिनः । " इति साहित्यदर्पणे । आज्ञामनुवदति । समाहितिके इति । देवस्य राज्ञः । उपवनस्थं कृत्रिमवनवर्ति बीजपूरकं मातुलुङ्गफलम् । " फले लुक् " इति विकारार्थप्रत्ययलुक् । स्वार्थे कः । " आरामः स्यादुपवनं कृत्रिमं वनमेव यत् । " इति । " फलपूरो बीजपूरो रुचको मातुलुङ्गके । " इति चामरः । प्रमदवनपालिकां प्रमदवनस्य राज्ञामन्तःपुरोचितस्य वनस्य पालिकां रक्षणकर्त्रीम् । अन्विच्छामि मार्गयामि।"प्रमदवनमन्तःपुरोचितम्"इत्यमरः। मधुकरिकेति उद्यानपालिकाया नाम । तपनीयाशोकं तपनीयं सुवर्णमिव पीतोऽशोकस्तपनीयाशोकः । पीतवर्णपुष्पत्वात्तस्य तथात्वम्। संभावयामि वाचा संमानयामीत्यर्थः ॥

---

१ ' महाळुंग ' इति भाषायाम् ।

**समाहितिका**—( उपसृत्य ) महुअरिए! अवि सुहो दे उज्जाण-वावारो ?॥( मधुकरिके! अपि सुखस्ते उद्यानव्यापारः ? ) ॥ १

**मधुकरिका**—अम्भो समाहितिआ। सहि! साअदं दे॥ (अहो समाहितिका। सखि! स्वागतं ते )॥

**समाहितिका**—हला! भअवदी आणवेदि। अरित्तपाणिणा अह्मारिसजणेण देवी देक्खिदव्वा ता बीजपूरएण पेक्खेदुं इच्छामि त्ति॥ ( हला! भगवती आज्ञापयति। " अरिक्तपाणिनाऽस्मादृशजनेन देवी द्रष्टव्या तद्बीजपूरकेण प्रेक्षितुमिच्छामि " इति )॥ २

**मधुकरिका**—णं सण्णिहिदं जेव्व बीजपूरअम्। कहेहि अण्णोण्णसंघस्सिदाणं णट्टाआरिआणं उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो ?॥ ( ननु सन्निहितमेव बीजपूरकम्। कथय अन्योऽन्यसङ्घर्षितयोर्नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ? )॥ ३

---

१ उद्यानव्यापारः उद्यानस्य राज्ञः साधारणवनस्य व्यापारः पालनादिकर्म। सुखः सुखकरः॥

२ अस्मादृशजनेन अस्मत्सदृशेन जनेन। "त्यदादिषु दृशोऽनालोचने कञ् च" इति दृशेः कञि "आसर्वनाम्नः" इति अस्मद् आदन्तादेशः। अरिक्तपाणिना न रिक्तः फलादिभिः शोभनवस्तुभिः शून्यः पाणिर्यस्य तथाभूतेन। किमपि करे गृहीत्वेत्यर्थः। " रिक्तपाणिर्न गच्छेत्तु राजानं देवतां गुरुम्।" इत्युक्तेः। बीजपूरकेण मातुलुङ्गफलेन युक्ता। उपलक्षणे तृतीया। एवं " जटाभिः स्निग्धताम्राभिराविरासीद्वृषध्वजः।" इति। " त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः।" इत्यादयो दाण्डिनः प्रयोगा द्रष्टव्याः॥

३ अन्योऽन्यसङ्घर्षितयोः अन्योऽन्यं परस्परं सङ्घर्षितयोः सञ्जात-

**समाहितिका**—दुवे वि किल आगमिणो पओअणिउणा अ। किन्दु सिस्साए मालविआए गुणविसेसेण गणदासस्स उवदेसो पसंसिदो ॥ (द्वावपि किल आगमिनौ प्रयोगनिपुणौ च । किंतु शिष्याया मालविकाया गुणविशेषेण गणदासस्योपदेशः प्रशंसितः

**मधुकरिका**—अह मालविआगदं कोलीणं कीरिसं सुणीअदि ? ( अथ मालविकागतं कौलीनं कीदृशं श्रूयते ? ) ॥ २

**समाहितिका**—बाढं किल तस्सिं साहिलासो भट्टा । केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तणं दंसेदि । मालविआ वि इमेसु दिअसेसु अणुहूतमुत्ता विअ मालदीमाला मिलाणालक्खीअदि । अदो अवरं ण जाणे । विसज्जेहि मं ॥ ( बाढं किल तस्यां साभिलाषो भर्ता । केवलं देव्या धारिण्याश्चित्तं रक्षन् आत्मनः प्रभुत्वं दर्शयति । मालविकापि अनुभूतमुक्तेव मालतीमाला म्लाना लक्ष्यते। अतोऽपरं न जाने। विसृज माम्)॥ ३

---

सङ्घर्षयोः । सङ्घर्षः पराभिभवेच्छा । परस्परपराभवेच्छावतोरित्यर्थः । नाटचाचार्ययोर्गणदासहरदत्तयोर्मध्ये । निर्धारणे षष्ठी । प्रशंसितः अभिनन्दितः । उत्तमत्वेन निर्णीत इत्यर्थः ॥

१ आगमिनौ शास्त्रिणौ नाटचशास्त्रवेत्तारावित्यर्थः । "आगमः शास्त्रआगमे" इति मेदिनी । प्रयोगनिपुणौ प्रयोगेऽभिनयविषये निपुणौ कुशलौ । गुणविशेषेण गुणाधिक्येन हेतुना । हेतौ तृतीया ॥

२ मालविकागतं मालविकायां विषये गतं विद्यमानं मालविकासंबन्धीत्यर्थः । कौलीनं "राजा मालविकां स्पृहयति" इति लोकवादः । कीदृशम् । "इदंकिमोरीश्की" इति किमः की । "स्यात्कौलीनं लोकवादः" इत्यमरः ॥

३ बाढमत्यन्तम् । तस्यां मालविकायां विषये । साभिलाषः अ-

मधुकरिका—एदं साहावलंबि बीजपूरअं गेण्ह ॥ ( एतच्छाखावलम्बि बीजपूरकं गृहाण ) ॥ १

समाहितिका—( नाट्येन गृहीत्वा ) हला ! तुमं वि इदो पेसलतरं साहुजणसुस्सूसाए फलं पावेहि ॥ ( हला ! त्वमपीतः पेशलतरं साधुजनशुश्रूषायाः फलं प्राप्नुहि)॥ ( इति प्रस्थिता । ) २

मधुकरिका—सहि ! समं जेव्व गच्छह्म । अहं वि अस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि ॥ ( सखि ! सममेव गच्छावः । अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि ) ॥ ३

---

भिलाषेण इच्छया सहितः । चित्तं रक्षन् आवर्जयन्नित्यर्थः । प्रभुत्वं स्वामित्वं कामवेदनासहनसामर्थ्यमित्यर्थः । दर्शयति प्रकटीकरोति । कामावस्थां न प्रकटीकरोतीति भावः । अनुभूतमुक्ता आदौ अनुभूता पश्चान्मुक्ता । "पूर्वकालैकसर्वजरत्" इत्यादिना समासः । मालतीमाला मालत्याः जातीपुष्पाणां माला इव । " पुष्पमूलेषु बहुलम् " इति तद्धितलुप् । " सुमना मालती जातिः" इत्यमरः। म्लाना क्षीणहर्षा हीनकान्तिश्च । लक्ष्यते दृश्यते । अनेन वैवर्ण्यरूपः सात्विकभावः प्रोक्तः । " वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विका मताः । " इति दर्पणे । " विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता । " इति च । विसृज बीजपूरं दत्त्वा प्रतिनिवर्तय ॥

१ शाखावलम्बि शाखाश्रितं शाखायां विद्यमानमित्यर्थः ॥

२ इतः बीजपूरात् पेशलतरं चारुतरं नित्यत्वात् । सुकृतरूपमित्यर्थः । साधुजनशुश्रूषायाः साधुजनस्य कौशिकीरूपस्य शुश्रूषायाः सेवायाः बीजपूरप्रदानरूपायाः । फलं सुकृतरूपं प्राप्नुहि ॥

३ समं सह एव । चिरायमाणकुसुमोद्गमस्य चिरायमाणो विल-

---

१ ' जाई ' इति भाषायाम् ।

समाहितिका—जुज्जइ । अहिआरो क्खु तुह ॥ ( युज्यते । अधिकारः खलु तव ) ॥ २

( इति निष्क्रान्ते । )

इति प्रवेशकः । ३

( ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च । ) ३

राजा—( आत्मानं विलोक्य )

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति ।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदयपरितापं व्रजसि किम् ॥ १ ॥

---

म्बमानः कुसुमोद्गमः पुष्पोत्पत्तिर्यस्य तथाभूतस्य । तपनीयाशोकस्य पीताशोकस्य । दोहदनिमित्तं दोहदस्य नारीपादाघातरूपस्य निमित्तं प्रयोजनं यद्वा निमित्तान्तं क्रियाविशेषणम् । तेन दोहदविषये इत्यर्थः । देव्यै धारिण्यै निवेदयामि कथयामि ॥

१ युज्यते योग्यमिदमित्यर्थः । अत्र हेतुः । अधिकार उद्यानपालिकात्वादुद्याने विशेषानुष्ठेयानिवेदनं ते कर्मैवेति॥

२ नीचपात्रैः प्राकृतभाषया विहितमर्थोपक्षेपकं प्रवेशकः । तदुक्तं भरतेन । " नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः । प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥ " इति ॥

३ कामयमानावस्थः कामयमानानां कामुकानामिवावस्था यस्य तथाभूतः । व्याधिरूपां कामदशामनुभवन्नित्यर्थः । तास्तु दर्पणे । " अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसंप्रलापाश्च । उन्मादोऽथ व्याधिर्जडता मृतिरिति दशात्र कामदशाः ॥ " व्याधिलक्षणं तु " व्याधिस्तु दीर्घनिश्वासपाण्डुताकृशतादयः । " इति । एतच्चानुपदं व्याख्यास्यमाने " शरीरं क्षामं स्यात् " इति पद्ये द्रष्टव्यम् ॥

शरीरमिति ॥ दयितालिङ्गनसुखे दयितायाः प्रियाया माल-

विदूषकः—अलं भवदो धीरदां उज्झिअ परिदेविदेण दिट्ठा मए मालविआए पिअसही बउलावलिआ। सुणा विदा अ अत्थं जो भवता संदिट्ठो॥ (अलं भवतो धीरतामुज्झित्वा परिदेवितेन। दृष्टा मया मालविकायाः प्रियसखी बकुलावलिका। श्राविता चार्थं यो भवता संदिष्टः)॥ १

राजा—ततः किमुक्तवती?॥

---

विकाया आलिङ्गनसुखे आश्लेषजन्ये सुखे असति अविद्यमाने। शरीरं देहः क्षामं कृशं स्यात् भवेत्। शरीरकार्श्ये दयितालिङ्गनसुखाभावस्य हेतुत्वात्तद्युक्तमिति भावः। "क्षायो मः" इति निष्ठातस्य मः। सा प्रिया क्षणमपि न दृश्यते इति हेतोः चक्षुर्नयनं कर्तृ सास्रं बाष्पयुक्तं भवेत्। तद्दर्शनस्याह्लादकत्वाद्दर्शनाभाव दुःखं युक्तमिति भावः। हे हृदय त्वं कर्तृ। तया सारङ्गाक्ष्या मृगलोचनया मालविकया कदाचित् कदापि विरहितं वियुक्तं नासि न भवसि इति निर्वाणे सुखे प्रसक्ते प्राप्ते सति। परितापं सन्तापं किं किमर्थं व्रजसि यासि। तस्या विरहाभावात्तव सन्तापोऽयुक्त इति भावः। "निर्वाणं निर्वृतौ[1] मोक्षे" इति त्रिकाण्डशेषः। एतेन चिन्तानाम व्यभिचारिभाव उच्यते। तल्लक्षणं तु। "ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।" इति। विभावनाविशेषोक्त्योः सङ्करः। शिखरिणी वृत्तम्। "रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इत्युक्तेः॥ १॥

१ धीरतां धैर्यम्। उज्झित्वा त्यक्त्वा। परिदेवितेन विलापेन। संदिष्ट उक्तः। तमिति शेषः। तमर्थं श्राविता "श्रु श्रवणे" इत्यतो णिजन्तान्निष्ठा॥

---

१ निर्वृतिः सुखम्।

विदूषकः—विण्णवेहि भट्टारअम् । अणुगिहीदं ह्मि इमिणा णिओएण । किंदु सा तवस्सिणी देवीए अहिअअरं रक्खीअमाणा णाअरक्खिदो विअ णिही ण सुहं समासादइदव्वा । तह वि जतिस्सम् ॥ ( विज्ञापय भट्टारकम् । अनुगृहीताऽस्म्यनेन नियोगेन । किंतु सा तपस्विनी देव्याऽधिकतरं रक्ष्यमाणा नागरक्षित इव निधिर्न सुखं समासादयितव्या । तथापि यतिष्ये )॥ १

राजा—भगवन् संकल्पयोने ! प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेश्य किं तथा प्रहरसि ? यथा जनोऽयं न कालान्तरक्षमो भवति ॥ २

( सविस्मयम् )

क्व रुजा हृदयप्रमाथिनी क्व च ते विस्मयनीयमायुधम् ।
मृदु तीक्ष्णतरं यदुच्यते तदिदं मन्मथ दृश्यते त्वयि ॥२॥

---

१ तपस्विनी अनुकम्पार्हा मालविका । " तपस्वी तापसे चानुकम्प्ये त्रिषु " इति मेदिनी । अधिकतरं सविशेषं यथा तथा । नागरक्षितः नागेन सर्पेण रक्षितः पालितः। निधिः भूम्यादौ न्यस्तं द्रव्यम् । सुखं यथा तथा । समासादयितव्या समासादयितुं प्राप्तुं शक्या न । यतिष्ये तया भवन्तं सङ्गमयितुमित्यर्थः ॥

२ संकल्पयोने मदन । " सङ्कल्पभवोऽङ्गजश्च रूपास्त्रः " इति मदननामसु त्रिकाण्डशेषः। प्रतिबन्धवत्स्वपि सप्रतिबन्धेष्वपि विषयेषु पदार्थेषु विषये अभिनिवेश्य इच्छातिशयमुत्पाद्य । प्रहरसि आहंसि ॥

क्वेति ॥ हृदयप्रमाथिनी हृदयस्य क्लेशदात्री रुजा तापः क्व । ते तव विश्वसनीयम् " कुसुममयत्वान्नेदं दुःखं जनयिष्यति " इति विश्वासपात्रम् आयुधम् अस्त्रं कुसुममित्यर्थः क्व । " मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतोः । " इति कविस-

विदूषकः—णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेवो त्ति । ता पज्जवत्थावेदु भवं अत्ताणम् ॥ ( ननु भणामि तस्मिन् साधनीये कार्ये कृतो मयोपायोपक्षेप इति । तत्पर्यवस्थापयतु भवानात्मानम् ) ॥ १

राजा—अथेमं दिवसशेषमुचितव्यापारविमुखेन चेतसा क्व नु यापयामि ? ॥ २

---

मयः । द्वयमिदमत्यन्तं विरुद्धमित्यर्थः । हे मन्मथ मदन । " मदनो मन्मथो मारः " इत्यमरः । मृदु सुकुमारं वस्तु । तीक्ष्णतरम् अत्यन्तप्रखरम् इति यत् उच्यते लोकैरिति शेषः । तन्मृदोस्तीक्ष्णत्वम् इदं प्रत्यक्षायमाणं त्वयि दृश्यते । तवायुधस्य मृदुत्वेऽपि तीक्ष्णत्वादित्यर्थः । अत्र आयुधरूपहेतोः रोगरूपकार्यस्य च मृदुत्वसन्तापकत्वरूपविरुद्धगुणोद्भवाभिधानाद्विषमालङ्कारः । तदुक्तं विश्वनाथेन । " गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्ययोः । यद्वारब्धस्य वैफल्यमनर्थस्य च संभवः ॥ विरूपयोः सङ्घटना या च तद्विषमं मतम् । " इति । सुन्दरी वृत्तम् । " अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदा । " इत्युक्तेः ॥ २ ॥

१ साधनीये साधयितुं योग्ये कार्ये कार्यविषये । उपायोपक्षेप उपायस्य साधनयुक्तेरुपक्षेप आरम्भः । पर्यवस्थापयतु स्थिरीकरोतु। धैर्यमवलम्बस्वेति भावः ॥

२ उचितव्यापारविमुखेन उचिते योग्ये व्यापारे कर्मणि विमुखेन पराङ्मुखेन चेतसा मनसा युक्तः । यापयामि अतिवाहयामि । वर्तमानसामीप्ये भविष्यति लट् ॥

विदूषकः—अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसंतावदारव्ववदेसेण इरावदीए णिउणिआमुहेण आचक्खिदो । " इच्छेमि अज्जउत्तेण सह दोलाधिरोहणं अणुभविदुं " त्ति । भवदा वि से पडिण्णादम् । ता पमदवणं एव्व गच्छह्म ॥ ( अद्यैव प्रथमावतारसुभगानि रक्तकुरबकाणि उपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेनाख्यातः । " इच्छाम्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुम् " इति । भवतापि अस्यै प्रतिज्ञातम् । तत्प्रमदवनमेव गच्छामः )॥ १

राजा—न क्षममिदम् ॥ २

विदूषकः— कहं विअ ? ॥ ( कथमिव ? ) ॥

---

१ प्रथमावतारसुभगानि प्रथमेनावतारेण प्रादुर्भावेन हेतुना सुभगानि सुन्दराणि । रक्तकुरबकाणि रक्तकुरण्टकपुष्पाणि । तद्रूपमित्यर्थः । उपायनमुपढौकनं प्रेष्य । नववसन्तावतारव्यपदेशेन नवस्य नवीनस्य वसन्तावतारस्य वसन्तर्तुप्रादुर्भावस्य व्यपदेशेन मिषेण । इरावती कनीयसी राजभार्या । निपुणिका इरावत्याः दासी। आख्यात उक्तो भवानिति शेषः । उक्तिमनुवदति । इच्छामीति । दोलायां प्रेङ्खायाम् अधिरोहणमारोहणम् । अस्यै एतामनुकूलयितुम् । " क्रियार्थोपपदस्य च कर्मणि स्थानिनः " इति चतुर्थी । प्रतिज्ञातं स्वीकृतम् । आगमिष्यामीत्युक्तमित्यर्थः । प्रमदवनं राज्ञामन्तःपुरोचितं वनम् ॥

२ न क्षमं न योग्यम् । " क्षमा भूमौ तितिक्षायां स्त्रियां युक्ते नपुंसकम् । " इति मेदिनी ॥

---

१ ' कोरंटा ' इति भाषायाम् । २ ' नजराणा ' इति भाषायाम् । ३ ' झोंपाळा ' इति भाषायाम् ।

राजा—वयस्य ! निसर्गनिपुणाः स्त्रियः । कथं मामन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति ? अतः पश्यामि ॥ १

उचितः प्रणयो वरं विहन्तुं
(अविज्ञ) बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां (पत्युः सनार्थं यदसत्यभाषणं उपचारः)
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ ३ ॥

---

१ निसर्गनिपुणाः निसर्गेण स्वभावेन एव निपुणाः परेङ्गितज्ञाने कुशलाः । उपलालयन्तं बाह्यव्यापारेण प्रीतिमाविष्कुर्वन्तम् अपि माम् । अन्यसंक्रान्तहृदयम् अन्यस्यां स्वस्माद्भिन्नायां स्त्रियां संक्रान्तं मिलितं आसक्तमित्यर्थः । हृदयं मनो यस्य तथाभूतम् । न लक्षयिष्यति न ज्ञास्यति । पश्यामि मन्ये ॥

उचित इति ॥ उचितः योग्योऽपि प्रणयः प्रार्थना विहन्तुं खण्डयितुमित्यर्थः । वरं मनाम् युक्तः । " वरः श्रेष्ठे त्रिषु क्लीबे मनाक् प्रिये " इत्यमरः । हि यतः खण्डनहेतवः प्रणयभङ्गकारणानि बहवो दृष्टाः बहवः कल्पयितुं शक्या इत्यर्थः । प्रणयभङ्गे सुस्पष्टान्यपि बहूनि कारणानि कथयितुं शक्यानीति भावः । तु किंतु पूर्वाभ्यधिकोऽपि पूर्वस्मादुपचारविधेरधिकोऽपि भावशून्यः नायिकान्तरव्यापृतचित्तत्वादनुरागरहितः । मनस्विनीनां प्रशस्तमनस्कानां स्त्रीणाम् । अनेन परेङ्गितज्ञत्वं व्यज्यते । उपचारविधिः सेवनक्रिया न वरमित्यनुषङ्गः । अत्र मनस्विनामु पचारविधेर्मनागपि प्रियत्वाभावं प्रति भावशून्य इति पदं हेतुरिति पदार्थहेतुकं काव्यलिङ्गम् । औपच्छन्दसिकं वृत्तम् । " तत्रैवान्तेऽधिके गुरौ स्यादौपच्छन्दसिकं कवीन्द्रहृद्यम् । " तत्रैव वैतालीय एव । तल्लक्षणं तु " षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः । न समात्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ " इति ॥ ३ ॥

विदूषकः—णारिहदि भवं अन्देउरट्ठिदं दक्खिण्णं एक्कपदे पिट्ठदो कादुं ॥ ( नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे पृष्ठतः कर्तुम् ) ॥ १

राजा—( विचिन्त्य ) तेन हि प्रमदवनमार्गमादेशय ॥

विदूषकः—इदो इदो भवम् ॥ ( इत इतो भवान् ) ॥

( उभौ परिक्रामतः । )

विदूषकः—णं एदं पमदवणं पवणबलचलाहिं पल्लवङ्गुलीहिं तुवरावेदि विअ भवन्तं पविसिदुम् ॥ ( नन्वेतत्प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् ) ॥ २

राजा—( स्पर्शं रूपयित्वा ) अभिजातः खलु वसन्तः। सखे ! पश्य ॥ ३

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्के चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ ४ ॥

---

१ दाक्षिण्यं दक्षिणस्य छन्दोवर्तिनो भावः । प्रेमेति यावत् । " दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु। " इति मेदिनी । पृष्ठेकर्तुमपाकर्तुम् ॥

२ प्रमदवनमन्तःपुरोचितमुद्यानम् । पल्लवाङ्गुलीभिः पल्लवरूपाभिः करशाखाभिः करणभूताभिः।त्वरयतीव त्वरायुक्तं करोतीवेत्युत्प्रेक्षा । एकदेशविवर्तिरूपकं च ॥

३ रूपयित्वा अभिनीय । अभिजातः प्रादुर्भूतः ॥

**उन्मत्तानामिति** ॥ उन्मत्तानां " वसन्ते कोलिला उन्माद्यन्ति " इति कवीनां समयः । कोकिलानां श्रवणसुभगैः कर्णम-

विदूषकः—पविस णिव्वुदिलाहाअ ॥ ( प्रविश निर्वृतिलाभाय ) ॥ १

( उभौ प्रविशतः । )

विदूषकः—अवधाणेण दिट्ठिं देहि । एदं क्खु भवंतं विअ लोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावअत्तिअं कुसुमणेवत्थं गहीदम् ॥ ( अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेषलज्जापयितृकं कुसुमनेपथ्यं गृहीतम् ) ॥ २

---

धुरैः कूजितैः स्वरैः करणभूतैः । कूजतेर्भावे क्तः । मनसिजरुजः मनसिजस्य मदनकर्तृकायाः रुजो रोगस्य सह्यतां सहनयोग्यत्वम् । सानुक्रोशं सदयं यथा तथा पृच्छता इव । " दयानुकम्पा स्यादनुक्रोशः " इत्यमरः । माधवेन वैशाखमासेन कर्त्रा । " माधवौ हरिवैशाखौ " इति त्रिकाण्डशेषः। मे मम अङ्गे शरीरे चूतप्रसवसुरभिः चूतप्रसवानामाम्रगुच्छानां सुरभिः सुगन्धो यत्र तथाभूतः । दक्षिणः दक्षिणायां दिशि भवः। "दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु । " इति मेदिनी । मारुतो वायुः कर्मभूतः । सान्द्रस्पर्शः सान्द्रो घनः स्पर्शो यस्य तथाभूतः।करतल इव व्यापृतः परिवर्तितः । " वसन्ते दक्षिणो वातः " इति कविसमयः । लोकेऽपि कश्चिदनामयमनुयुञ्जानः सखा पृष्ठे करं परिवर्तयतीति द्रष्टव्यम् । अत्र मारुते सखिकार्येण तद्व्यवहारारोपणात्समासोक्तिः । पृच्छतेवेत्यत्र क्रियोत्प्रेक्षा करतल इति द्रव्योत्प्रेक्षा चेत्येतेषां सङ्करः । " समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः। व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥" इति । मन्दाक्रान्ता वृत्तम् ॥ ४ ॥

१ निर्वृतिलाभाय सुखावाप्त्यर्थम् । " निर्वृतिः सुस्थितावस्तंगमने च सुखे स्त्रियाम् । " इति मेदिनी ॥

२ एतदिति । इवशब्दो भिन्नक्रमः । लोभयितुकामयेव लोभ-

राजा—ननु विस्मयादवलोकयामि ॥ १

रक्ताशोकलताविशेषितगुणो बिम्बाधरालक्तकः

प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।

आक्रान्ता तिलकक्रियापि तिलकैर्लग्नद्विरेफाञ्जनैः

सावज्ञेव मुखप्रसाधनविधौ श्रीमाधवी योषिताम् ॥ ५ ॥

---

यितुम् आवर्जयितुं कामो वाञ्छा यस्यास्तथाभूतयेवेत्युत्प्रेक्षा । प्रमदवनलक्ष्म्या अन्तःपुरोचितवनशोभया कर्त्र्या । युवतिवेषस्य तरुणस्त्रीणां वेषस्य लज्जापयितृकं लज्जाकरम् । स्त्रीणां वेषतोऽपि रमणीयमित्यर्थः । कुसुमनेपथ्यं पुष्पमयभूषणम् । "नेपथ्यं स्यादलंकारे" इति मेदिनी ॥

१ विस्मयात् विस्मयम् आश्चर्यं प्राप्य । "ल्यब्लोपे" इति कर्मणि पञ्चमी ॥

रक्तेति ॥ रक्ताशोकस्य लतया शाखयाऽविशेषितः न्यूनीकृतस्तिरस्कृत इति यावत् । गुणो रक्तिमरूपो यस्य तथाभूतः । तुलित इति वाचस्पतिः।तथा च अवज्ञानुपपत्तिरिति द्रष्टव्यम् । "समे शाखालते" इत्यमरः । बिम्बाधरालक्तकः बिम्बाधरे बिम्बसदृशेऽधरे य आलक्तको यावकरसः स इति रक्ताशोक इत्यस्मात्पूर्वं योज्यम् । "विशेषणं विशेष्येण बहुलम्" इति समासः। "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इत्युपमितसमासस्तु ग्राम्यत्वान्नाङ्गीकृत इति काटयवेमः । पुरा विलासिन्योऽधरस्य रक्तिमातिशयाविर्भावायालक्तकं निषिञ्चन्ति स्म । किंच श्यामावदातारुणं श्यामं नीलम् अवदातं पाण्डुरम् अरुणं रक्तं च। "वर्णो वर्णेन" इति कर्मधारयः । कुरबकं कुरण्टकम् । प्रत्याख्यातविशेषकं प्रत्याख्यातः निराकृतो विशेषकः पत्रभङ्गः कपोले क्रियमाणो येन तथाभूतम् । विशेषकः पत्रभङ्ग इति वाचस्पतिकाटयवेमौ । अस्तीति शेषः । अपिः समुच्चये । लग्नद्विरेफाञ्जनैः लग्नाः संसक्ताः द्विरेफा भ्रमरा

( इत्युद्यानशोभां निरूपयतः । ) १

( ततः प्रविशति पर्युत्सुका मालविका । ) २

मालविका—अविण्णाअहिअअं भट्टारअं अहिलसंदी अत्तणो वि दाव लज्जेमि । कूदो विहवो सिणिद्धस्स सहीजणस्स वुत्तंतं आचक्खिदुम् । ण जाणे अप्पडिआरगुरुअं वेअणं केत्तिअं कालं मअणो मं णइस्सदि त्ति । ( इति कतिचित्पदानि गत्वा ) कहिं खु पत्थिद ह्मि । ( विचिन्त्य ) आं संदिट्ठं देवीए । "मालविए ! गोदमचापलादो दोलापरिब्भट्टाए सरुजो मह चलणा । तुमं दाव तवणीआसोअस्स दोहलं णिव्वट्टेहि । जइ सो पंचरत्तब्भंतरे कुसुमं दंसेदि तदो अहं ( इत्यन्तरा निःश्वस्य ) अहिलासपूरइत्तिअं पसादं दावइस्सं" त्ति । ता जाव णिओअभूमिं पढमं गदा होमि दाव अणुपदं मह चरणालंकारहत्थाए बउलावलिआए आअंदव्वम् । ता परिदेविस्सं दाव वीसद्धं मुहुत्तअम् ॥ ( अविज्ञातहृदयं भट्टारकमभिलषन्ती आत्मनोऽपि तावल्लज्जे । कुतो विभवः स्निग्धस्य सखीजनस्य वृत्तान्तमाख्या-

---

एवाञ्जनं यत्र तथाभूतैस्तिलकैः तिलपुष्पैः । तिलकक्रिया तिलकस्य ललाटिकायाः क्रिया कर्म आक्रान्ता अभिभूता । अत एव माधवी वैशाखसंबन्धिनी श्रीः शोभा कर्त्री। योषितां स्त्रीणाम् । "स्त्री योषिदबला योषा" इत्यमरः । मुखप्रसाधनविधौ मुखालङ्काररचनायां विषये सावज्ञेव अवज्ञयाऽवमाननया सहितेवेत्युत्प्रेक्षा । अवमानयतीवेत्यर्थः । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

१ निरूपयतः पश्यतः ॥

२ पर्युत्सुका उत्कण्ठिता ॥

तुम् । न जाने अप्रतीकारगुरुकां वेदनां कियन्तं कालं मदनो मां नेष्यतीति । कुत्र खलु प्रस्थितास्मि । आं संदिष्टं देव्या । "मालविके ! गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मम चरणौ। त्वं तावत्तपनीयाशोकस्य दोहदं निर्वर्तय । यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति तदाहम् अभिलाषपूरयितृकं प्रसादं दापयिष्यामि " इति । तद्यावन्नियोगभूमिं प्रथमं गता भवामि तावदनुपदं मम चरणालङ्कारहस्तया बकुलावलिकया आगन्तव्यम् । तत्परिदेविष्ये तावद्विश्रब्धं मुहूर्तकम् ॥ ( इति परिक्रामति । ) १

---

१ अविज्ञातहृदयम् अविज्ञातम् अज्ञातं हृदयमाशयो यस्य तथाभूतं भट्टारकं राजानम् अभिलषन्ती इच्छन्ती । आत्मनः स्वस्मादपि लज्जे । अविमृष्यकारित्वादिति भावः । सखीजनस्य सखीजनायेत्यर्थः । वृत्तान्तं राजाभिलाषरूपामात्मनः प्रवृत्तिम् आख्यातुं कथयितुम् । विभवः सामर्थ्यं कुतः न कुतोऽपीत्यर्थः । स्निग्धस्य प्रीतियुक्तस्य । कियन्तं कालं कियत्कालपर्यन्तम् । " कालाध्वनोः " इति द्वितीया । मदनः कर्ता । अप्रतीकारगुरुकाम् अप्रतीकारां प्रतिक्रियाशून्याम् अत एव गुरुकां गुर्वीम् । वेदनां दुःखम् । नेष्यति प्रापयिष्यति । अकथितकर्मत्वाद्वेदनाशब्दाद्द्वितीया । आम् इति स्मरणे । संदिष्टास्मि आज्ञप्तास्मि । गौतमचापलात् गौतस्य विदूषकस्य चापलात् चपलतया । दोलाप्रभ्रष्टायाः दोलायाः प्रेङ्खायाः सकाशात्परिभ्रष्टायाः पतितायाः । सरुजौ रुजया रोगेण सहितौ । तपनीयाशोकस्य पीताशोकस्य दोहदं पादाघातरूपम् । तावत् साकल्येन निर्वर्तय निष्पादय । " यावत्तावच्च साकल्ये " इत्यमरः । पञ्चरात्राभ्यन्तरे पञ्चानां रात्रीणां समूहः पञ्चरात्रं तस्याभ्यन्तरे मध्ये । "सङ्ख्यापूर्वं रात्रम् " इति क्लीबत्वम् । कुसुमं पुष्पं दर्शयति प्रकटीकरिष्यति प्रसोष्यते इत्यर्थः । निःश्वस्येति ।

**विदूषकः**—( दृष्ट्वा ) ही ही ! एदं क्खु सीहुपाणुव्वेजिअस्स मच्छंडिआ उवणदा ॥ ( आश्चर्यमाश्चर्यम् ! एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता ) ॥ १

**राजा**—अये ! किमेतत् ? ॥ २

**विदूषकः**—एसा णादिपरिक्खिदवेसा ऊसुअवअणा एआइणी मालविआ अदूरे वट्टदि ॥ (एषा नातिपरिष्कृतवेषोत्सुकवदना एकाकिनी मालविकाऽदूरे वर्तते ) ॥ ३

---

अभिलाषस्य राजसमागमरूपत्वात्तस्य च दुर्घटत्वाद्विषादसूचको निःश्वासः । अभिलाषपूरयितृकम् इच्छायाः पूरकं प्रसादं पारितोषिकमित्यर्थः । नियोगभूमिं नियोगस्याशोकदोहदपूरणरूपस्य कार्यस्य संबन्धिनीं भूमिम् अशोकसान्निहितां भूमिमित्यर्थः । चरणालङ्कारहस्तया चरणालङ्काराः पादभूषणानि हस्ते यस्यास्तथाभूतया । गृहीतचरणालङ्कारयेत्यर्थः । विश्रब्धं निःशङ्कं यथा तथा । परिदेविष्ये विलपिष्यामि । मुहूर्तकं किंचित्कालपर्यन्तमित्यर्थः ॥

१ एतन्मालविकोपस्थानम् । सीधुपानेन मद्यपानेन उद्वेजितस्य विह्वलस्य मत्स्यण्डिका खण्डसिता नाम शर्कराविशेषः । उपनता उपस्थिता । यथा मद्यपानविह्वलस्य मदप्रशमनाय खण्डसितोपकारिका भवति तथा मदनव्याधिपीडितस्य तवेयं मालविकेत्यर्थः । तदुक्तं शङ्करपाण्डुरङ्गकृतटिप्पण्याम् । "मत्स्यण्डिका खण्डसिता" इति । तल्लक्षणमपि तत्रैव।"वालुकेव भृशं सूक्ष्मा सुस्निग्धा सितपिङ्गला । मत्स्यण्डाकृतिसादृश्ययोगान्मत्स्यण्डिका स्मृता ॥ " इति । " मदयति न हि मद्यं जातु चित्पीतमद्यं पिबति घृतसमेतां शर्करामेव सद्यः । " इत्यजीर्णामृतमञ्जर्याम् ॥

२ एतद्विदूषकोक्तस्यैतच्छब्दस्यानुवादः । एतन्नाम किमित्यर्थः॥

३ नातिपरिष्कृतवेषा नातिपरिष्कृतोऽनत्यन्तोज्ज्वलो वेषः प्रसा-

राजा—( सहर्षम् ) कथं मालविका ? ॥

विदूषकः—अह इम् ? ॥ ( अथ किम् ? ) ॥ १

राजा—शक्यमिदानीं जीवितमवलम्बयितुम् ॥ २

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम् ।
तरुवृतां पथिकस्य जलार्थिनः
सरितमारसितादिव सारसात् ॥ ६ ॥

---

धनकर्म यस्यास्तथाभूता । राजैकासक्तत्वाद्भूषणादावनादरात् । अदूरे समीपे । उत्सुकमुत्कण्ठासूचकं म्लानमित्यर्थः वदनं यस्यास्तथाभूता ॥

१ अथ किम् । यत्त्वयोक्तं तदेव मालविकैवेत्यर्थः । " अथ किं स्वीक्रियार्थकम् " इत्यनर्घराघवटीकायां रुचिकरः ॥

२ जीवितम् जीवम् । अवलम्बयितुं धारयितुम् । तस्य मालविकाश्रयत्वादिति भावः ॥

त्वदिति ॥ त्वत् त्वत्तः प्रियां मालविकां समीपगतां समीपे वर्तमानाम् उपलभ्य ज्ञात्वा त्वद्वचनादनुमायेत्यर्थः । विक्लवं पूर्वं विह्वलीभूतम् । मम हृदयं मनः कर्तृ । उच्छ्वसितं हर्षेण स्फीतम् इति वाचस्पतिः । विक्लवं मूढम् । उच्छ्वसितमिदानीं लब्धसंज्ञमिति त्वपरे । आरसितात् कृतशब्दात् । " रस शब्दे " इति धातोः क्तः । सारसात् हंसभेदात् अनुमाने हेतुभूतात् । तरुवृतां वृक्षच्छन्नां सरितं नदीम् उपलभ्येत्यनुषङ्गः । जलार्थिनः पानीयमिच्छोः पथिकस्य पान्थस्य हृदयमिव । " तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घः " इति कविसमयेषु विश्वनाथः । तथा तृषया विह्वलान्तरः पान्थो हंसरासितात् जलमनुमाय संतुष्यति एवमहमपि त्वद्वाक्येन मालविकामदूरवर्तिनीमनुमाय संतुष्ट इति

क्व तत्रभवती ? ॥

**विदूषकः**—एसा तरुराइमज्झादो णिक्कंता इदो ज्जेव्व परिवट्टंती दीसदि ॥ ( एषा तरुराजिमध्यान्निष्क्रान्तेत एव परिवर्तमाना दृश्यते ) ॥ १

**राजा**—पश्याम्येनाम् ॥

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः ।
अत्यायतं नयनयोर्मम जीवितमेतदायाति ॥ ७ ॥

सखे ! पूर्वस्मादवस्थान्तरमारूढा तत्रभवती । तथा हि ॥ २

---

भावः । उपमालङ्कारः । द्रुतविलम्बितं वृत्तम् । " द्रुतविलम्बितमाह नभौ भरौ " इति लक्षणात् ॥ ६ ॥

१ तरुराजेर्वृक्षश्रेण्याः मध्यात् निष्क्रान्ता निर्गता । परिवर्तमानागच्छन्ती ॥

**विपुलमिति** ॥ नितम्बदेशे कटिपश्चाद्भागे विपुलं विस्तृतम् । मध्येऽवलग्ने क्षामं कृशम् । "क्षायो मः" इति निष्ठातस्य मः । कुचयोः स्तनद्वये समुन्नतमुच्छ्रितम् । नयनयोर्नेत्रद्वये अत्यायतम् अतिविशालम् । एतत्प्रत्यक्षायमाणं मम जीवितं जीवितहेतुर्मालविका आयाति आगच्छति । अत्र जीवितमिति हेतुहेतुमतोरभेदेनाभिधानाद्धेतुरलङ्कारः । " अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह । " इत्युक्तेः । एकस्यैव जीवितस्य विषयभेदादनेकधोल्लेखादुल्लेखश्चेत्यनयोः सङ्करः । " क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् । एकस्यानेकधोल्लेखो यः स उल्लेख इष्यते ॥ " इत्युक्तेः । " अकृशं कुचयोः कृशं वलग्ने विपुलं वक्षसि विस्तृतं नितम्बे । अधरेऽरुणमाविरस्तु चित्ते करुणाशालि कपालि भागधेयम् ॥ " इत्ययमस्यैव प्रतिच्छायायमानः श्लोकः कुवलयानन्द उल्लेखोदाहरणम् । आर्या ॥७॥

२ अवस्थान्तरं मन्मथव्यथोचितामन्यामवस्थाम् । उपारूढा प्राप्ता । तत्रभवती मालविका ॥

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा ।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता ॥ ८ ॥

विदूषकः—एसा वि भवं विअ मअणव्वाहिणा परिमिट्ठा बहिस्सदि ॥ ( एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति ) ॥ १

राजा—सौहार्दमेवं पश्यति ॥ २

मालविका—अअं सो ललिदसुउमारदोहलापेक्खी अगिहीदकुसुमणेवत्थो उक्कंठिदाए मह सोअं अणुकरेदि असोओ। जाव से पच्छाअसीदले सिलापट्टए णिसण्णा अत्ताणं विणोदेमि॥ ( अयं स ललितसुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य उत्कण्ठिताया मम शोकमनुकरोत्यशोकः । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णाऽऽत्मानं विनोदयामि ) ॥ ३

---

शरकाण्डेति ॥ शरकाण्डपाण्डुगण्डस्थला शरस्य वेणुविशेषस्य काण्डं पर्वेव पाण्डु विरहतापात् धवलं गण्डस्थलं कपोलदेशो यस्याः तथाभूता। परिमिताभरणा अनत्यधिकभूषणा इयं मालविका कर्त्री । माधवपरिणतपत्रा माधवेन वैशाखेन परिणतानि पत्राणि पल्लवा यस्यास्तथाभूता । कतिपयकुसुमा परिमितपुष्पा कुन्दलता कुन्दवल्लीव आभाति शोभते । बिम्बानुबिम्बेन पूर्णोपमा । आर्या जातिः ॥ ८ ॥

१ मदनव्याधिना मदनरूपेण रोगेण । परिमृष्टा अभिभूता ॥

२ सौहार्दं सुहृत्त्वम् । युवादित्वाद्भावेऽञ् । पश्यति संभावयतीत्यर्थः । सख्यादेवं संभाव्यत इति भावः ॥

३ ललितेति । ललितं रमणीयं सुकुमारं च दोहदं नारीपादाघातरूपम् अपेक्षत इच्छतीति तथाभूतः मालविकापक्षे दोहदमिच्छा-

विदूषकः—सुदं भवदा? उक्कंठिद ह्मि त्ति अत्तभोदी मंतेदि॥
(श्रुतं भवता? उत्कण्ठितास्मीत्यत्रभवती मन्त्रयते)॥ १
राजा—नैतावता भवन्तं प्रसन्नतर्कं मन्ये। कुतः॥ २

वोढा कुरबकरजसां किसलयपुटभेदशीकरानुगतः।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः॥ ९॥

(मालविकोपविष्टा।)

---

विषयो राजसमागमः। अगृहीतकुसुमनेपथ्यः अगृहीतं न स्वीकृतं कुसुमनेपथ्यं पुष्पमयं भूषणं येन तथाभूता मालविकाप्यगृहीतनेपथ्या। अत एव उत्कण्ठितायाः कान्तं सस्पृहं यथा तथा स्मरन्त्याः सञ्जातोत्कण्ठायाः। "स्मरणं सस्पृहे पुनः। उत्कण्ठा" इत्यमरटीकायां शब्दार्णवः। शोकं शोकावस्थामित्यर्थः। अनुकरोति इवेति गम्यम्। प्रच्छायशीतले प्रकृष्टा च्छाया यत्र स प्रच्छायः तथाभूते अत एव शीतले शीते। शिलापट्टके पाषाणफलके। निषण्णा उपविष्टा विनोदयामि रमयामि॥

१ अत्रभवती मालविका। मन्त्रयते गुप्तं परिभाषते। "मत्रि गुप्तपरिभाषणे" इत्यस्माच्चुरादेर्लट्॥

२ एतावता उत्कण्ठितास्मीति वचनश्रवणमात्रेण। प्रसन्नतर्कं प्रसन्नो निर्दोषस्तर्को मालविकाया उत्कण्ठितत्वानुमानं यस्य तथाभूतम्। "प्रसन्नप्रायस्ते तर्कः" इति मालतीमाधवे॥

वोढेति॥ कुरबकरजसां कुरण्टकपुष्पपरागाणां वोढा धारकः। अनेन सौगन्ध्यं ध्वन्यते। वहतेः "ण्वुल्तृचौ" इति तृचि "सहिवहोरोदवर्णस्य" इत्योत्। तद्योगे च "कर्तृकर्मणोः कृति" इति रजःशब्दात्षष्ठी। किसलयपुटभेदशीकरानुगतः किसलयानां नवपल्लवानां पुटानि संश्लेषान् भिनत्ति विघटयति तथाभूतः। शीकरैरम्बुकणैरनुगतोऽनुसृतश्चेति मन्दत्वं शैत्यं च व्यज्यते। भिनत्तेः कर्मण्यण्। मलयवातः मलयाचलसम्बन्धी वायुः कर्ता।

राजा—सखे ! इतस्तावदावां लतान्तरितौ भवावः ॥ १

विदूषकः—इरावदिं विअ अदूरे पेक्खामि ॥ ( इरावतीमिवादूरे प्रेक्षे ) ॥ २

राजा—न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ॥ ( इति विलोकयन् स्थितः । ) ३

मालविका—हिअअ ! णिरवलंबणादो अदिभूमिलंघिणो मणोरहादो विरम । किं मं आआसिअ ? ॥ ( हृदय ! निरवलम्बनादतिभूमिं गतान्मनोरथाद्विरम । किं मामायास्य ? ) ॥ ४

( विदूषको राजानं वीक्षते । )

राजा—पश्य महत्त्वं स्नेहस्य ॥

---

मनसः अनिमित्तोत्कण्ठाम् अनिमित्तां विरहादिहेतुशून्यामुत्कण्ठामौत्सुक्यम् । अपिर्भिन्नक्रमः । अनिमित्तामप्युत्कण्ठामित्यर्थः । जनयति ॥ ९ ॥

१ लतान्तरितौ मालविकाया भावज्ञानाय लतानिगूढौ ॥

२ इरावतीं राज्ञः कनीयसीं भार्याम् । इवेति संदेहे । राज्ञस्त्रासार्थमियमुक्तिः ॥

३ न हीति । यथा मतङ्गजः हस्ती कमलिनीं दृष्ट्वा तल्लोभाविष्ट इति यावत् । ग्राहं स्वविरुद्धमपि मकरं नावेक्षते न गणयति तथा मालविकाभिनिविष्ट इरावतीं न गणयामीति भावः ॥

४ निरवलम्बनादाश्रयशून्यात् । अतिभूमिलङ्घिनः अतिभूमिमत्यन्तावस्थां लङ्घते गच्छति तथाभूतात् । "कक्किवकि" इत्यादिदण्डके पठिताद्गत्यर्थकाल्लघिधातोरिनिः । अतिभूम्या अतिशयेन लङ्घयति पीडयति तथाभूताद्वा मनोरथादभिलाषात् । विरम "जुगुप्साविराम" इत्यपादानत्वम् । आयास्य श्रमयित्वा किं किं फलम् ? न किमपीति भावः ॥

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्वावबोधैकफलो न तर्कः ।
तथापि रम्भोरु करोमि लक्ष्य-
मात्मानमेषां परिदेवितानाम् ॥ १० ॥

विदूषकः—संपदं भवदो णिस्संसअं भविस्सदि । एसा अप्पिदमअणसंदेसा विवित्ते णं बउलावलिआ उवगदा ॥ (साम्प्रतं भवतो निःसंशयं भविष्यति । एषाऽर्पितमदनसंदेशा विविक्ते ननु बकुलावलिकोपगता ) ॥ १

राजा—अपि स्मरेदभ्यर्थनाम् ॥ २

---

औत्सुक्येति ॥ हे रम्भोरु रम्भे कदल्याविव सुकुमारौ ऊरू यस्यास्तथाभूते मालविके! त्वं कर्त्री। त्वम् औत्सुक्यहेतुम् औत्सुक्यस्योत्कण्ठायाः हेतुं कारणं न विवृणोषि न प्रकाशयसि । ननु तथापि तर्क्यतां मदुत्कण्ठाहेतुरित्याशङ्कां परिहरति । तर्कः अनुमानं तु तत्वावबोधैकफलः तत्वस्य परमार्थस्य अवबोधो ज्ञानं फलं यस्य तथाभूतो न व्यभिचाराद्यनेकदोषसंभवात्तवोत्कण्ठाया बीजं तत्त्वतो नानुमातुं शक्यमिति भावः। तथापि तवोत्कण्ठाबीजाज्ञानेऽपि एषां त्वत्कृतानां परिदेवितानां विलापानां लक्ष्यमुद्देश्यम् आत्मानं मामित्यर्थः करोमि । मामुद्दिश्यैव तवेयमुत्कण्ठेति तर्कयामि । कामी स्वतां पश्यतीति भावः। उपजातिवृत्तम् ॥ १० ॥

१ साम्प्रतम् इदानीं भवतः तव निःसंशयं संशयाभावः । अर्पितमदनसंदेशा अर्पितः प्रदत्तः कथित इति यावत् मदनसंदेशः मदनाविषयि वाचिकं यस्यै तथाभूता । तव संदेशं श्रावितेत्यर्थः । विविक्ते रहसि इति रहस्यप्रकाशयोग्यत्वं सूच्यते । " विविक्तविजनच्छन्ननिःशलाकास्तथा रहः । " इत्यमरः ॥

२ अभ्यर्थनां प्रार्थनां मदनसंदेशरूपाम् ॥

---

१ ' निरोप ' इति भाषायाम् ।

विदूषकः—किं दाणिं एसा दासीए दुहिदा दाव गुरुअं संदेसं विसुमरेदि ॥ ( किमिदानीमेषा दास्या दुहिता तावद्गुरुकं संदेशं विस्मरति ) ॥ १

( प्रविश्य चरणालङ्कारहस्ता बकुलावलिका । )

बकुलावलिका— अवि सुहं सहीए ? ॥ ( अपि सुखं सख्याः ? ) ॥

मालविका—अम्भो बउलावलिआ उवट्ठिदा । सहि ! साअदं दे उवविस ॥ ( अहो बकुलावलिकोपस्थिता । सखि ! स्वागतं त उपविश ) ॥

बकुलावलिका(उपविश्य) हला ! तुमं दाणिं जोग्गदाए णिउत्ता । ता एक्कं दे चलणं उवणेहि जाव सालत्तअं सणूउरं अ करेमि ॥ ( हला ! त्वमिदानीं योग्यतया नियुक्ता । तदेकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं च करोमि ) ॥ २

मालविका—( स्वगतम् ) हिअअ अलं सुहिदाए । उवट्ठिदो अअं विहवो । कहं दाणिं अत्ताणं मोचेअम् । अह वा एदं एव्व मे मिच्चुमंडणं भविस्सदि ॥ ( हृदय ! अलं सुखितया । उपस्थितोऽयं विभवः । कथं वेदानीमात्मानं मोचयेयम् । अथवा एतदेव मे मृत्युमण्डनं भविष्यति ) ॥ ३

१ दास्याः चेटयाः दुहिता पुत्री । इति गालिः ॥

२ योग्यतया दोहदनिर्वर्तनार्हतया । नियुक्ता अधिकृता । अत्रेति शेषः । अत्रास्मिन् कर्मणि । उपनय मत्समीपे कुरु । सालक्तकमालक्तकरसेन युक्तं सनूपुरं नूपुरेण तुलाकोटया सहितं च ॥

३ सुखितया सुखयुक्तत्वेन अलम् । कुत इत्याह । उपस्थित

१ ' पैंजण ' इति भाषायाम् ।

बकुलावलिका—किं विआरेसि? उस्सुआ क्खु इमस्स तवणीआसोअस्स कुसुमोग्गमे देवी ॥ (किं विचारयसि? उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी) ॥ १

राजा—कथम् अशोकदोहदनिमित्तोऽयमारम्भः? ॥ २

विदूषकः—किं णु खु आणासि तुमं। "मह कालणादो देवीमं अन्तेउरणेवत्थेण योजइस्सदि" त्ति ॥ (किं नु खलु जानासि त्वम्। "मम कारणाद्देवीमामन्तःपुरनेपथ्येन योजयिष्यति" इति) ॥ ३

---

इति। अयं पुरोवर्ती विभवः अ[illegible] 'षेकभूषणधारणाद्यैश्वर्यम्। उपस्थितः प्राप्तः। अस्य [illegible] कदल्यां निधिमात्रधारणयोग्यत्वात्प्रियस्य च नितान्तं दुर्लभतया [illegible] मदनव्यथोत्तेजको दुःखमात्रहेतुरयं विभव इति सुखित्वेनालमिति भावः। "विभवो रै मोक्षैश्वर्ये" इति मेदिनी। इदानीं साम्प्रतमात्मानं निजदेहं कथं मोचयेयम् अस्मात्कर्मणो मुक्तं करिष्यामि। एतदेव पुरःस्थितमलङ्करणमेव यावकरसनिषेक एव वा। मृत्युमण्डनं मरणालङ्करणम्। एतस्य मदनोद्दीपकत्वात्तद्व्यथायाश्च दुःसहत्वादिति भावः। अनेन कालक्षेपासहिष्णुत्वादौत्सुक्यं नाम व्यभिचारभाव उच्यते। "इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता।" इत्युक्तेः ॥

१ कुसुमोद्गमे पुष्पोत्पत्तौ विषये। उत्सुका कालक्षेपासहिष्णुः। अतोऽलं विचारेण। त्वरय दोहदं पूरयितुमिति भावः ॥

२ कथमिति प्रश्ने। अशोकदोहदनिमित्तः अशोकदोहदं निमित्तं कारणं यस्य तथाभूतः। आरम्भ उद्यमः। अशोकदोहदार्थमियमलंक्रियते न मत्सङ्गमार्थम् इति प्रश्नस्याकूतम्। "कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने संभावनायां च" इति मेदनी ॥

३ किन्नु इति प्रश्ने। खलु निश्चयेन जानासि किम् इत्यर्थः। ज्ञेयमाह। मम राज्ञः कारणादर्थे देवी धारिणी नाम राज्ञो महिषी

**मालविका**—( पादमुपहरति ) हला ! मरिसेहि दाणिम् ॥ ( हला ! मर्षयेदानीम् ) ॥ १

**बकुलावलिका**—अइ ! सरीरं सि मे ॥ (अयि ! शरीरमसि मे ) ( नाट्येन चरणसंस्कारमारभते ) ॥ २

**राजा**—चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य रागलेखाम् ।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ १० ॥

---

कर्त्री । इमां मालविकाम् । अन्तःपुरनेपथ्येन अत्रान्तःपुरशब्द उपचारादन्तःपुरवर्तिरमणीवाचकः । अन्तःपुरस्यान्तःपुरवर्तिनार्याः नेपथ्येनालङ्कारेण योजयिष्यति । इति जानासि किन्नु इत्यनेन संबन्धः । नर्मोक्तिरियम् ॥

१ उपहरति अर्पयति । हलेति । हला सखि । मर्षय क्षमस्व । त्वदङ्के मत्पादार्पणरूपमविनयमित्यर्थः ॥

२ शरीरमसीति । तथा च मदङ्के पादार्पणं नाविनय इति भावः। चरणसंस्कारं चरणयोः संस्कारं यावकरसनिषेकरूपम् । यदन्यस्य गुणा अन्यत्राधीयन्ते स संस्कारः । तथा चात्रालक्तकगतरक्तिम्न-श्चरणयोराधानम् । " संस्कारः प्रतियत्नेऽनुभवे " इति मेदिनी । प्रतियत्नो गुणाधानम् ॥

चरणान्तेति ॥ हे वयस्य सखे । प्रियायाः मालविकायाः । चरणान्तनिवेशितां चरणान्ते पादाग्रे निवेशितां योजितां विरचितामिति यावत् । सरसाम् आर्द्राम् । रागलेखां रागस्य आलक्तकरक्तिम्नो लेखां रेषां कर्मभूताम् । हरदग्धस्य हरेण शिवेन दग्धस्य भस्मीकृतस्य मनोभवद्रुमस्य मदनरूपवृक्षस्य प्रथमामाद्यां पल्लवप्रसूतिं किसलयोत्पत्तिम् इवेत्युत्प्रेक्षा । पश्य । अत्र मनोभवे द्रुमत्वारोपाद्रूपकं पल्लवप्रसूतिसम्भावनादुत्प्रेक्षाया अङ्गमित्युत्प्रेक्षारूप-

विदूषकः—चरणाणुरूओ तत्तभोदीए अहिआरो उवक्खित्तो ॥ ( चरणानुरूपस्तत्रभवत्या अधिकार उपक्षिप्तः ) ॥ १

राजा—सम्यगाह भवान् ॥

नवकिसलयरागेणाग्रपादेन बाला
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥ १२ ॥

विदूषकः—पहरिस्सदि तत्तभोदी तुमं अवरद्धम् ॥ (प्रहरिष्यति तत्रभवती त्वामपराद्धम् ) ॥ २

राजा—मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ॥ ३

---

कयोरङ्गाङ्गिभावेन सङ्करः । औपच्छन्दसिकं वृत्तम् ॥ ११ ॥

१ तत्रभवत्या मालविकायाः । चरणानुरूपः चरणयोर्योग्यः सुकुमार इत्यर्थः । अधिकारोऽशोकदोहदनिर्वर्तनरूपं कर्म । उपक्षिप्तोऽर्पितः ॥

**नवेति** ॥ बाला मालविका कर्त्री । नवकिसलयरागेण नवकिसलयानां नवीनपल्लवानामिव रागो रक्तिमा यत्र तथाभूतेन । आर्द्रपादेन आलक्तकस्निग्धचरणेन करणभूतेन । द्वौ द्वावेवेत्यर्थः। हन्तुं ताडयितुम् अर्हति योग्या भवति । कौ तौ द्वावित्याह । दोहदापेक्षया दोहदस्य नारीपादाघातरूपस्य अपेक्षया इच्छया दोहदपूरणार्थमित्यर्थः । अकुसुमितम् असञ्जातपुष्पम् । तारकादित्वादितच् अशोकं वा । आर्द्रापराधम् आर्द्रः स्निग्धः प्रणयकृत इत्यर्थः अपराधो यस्य तथाभूतम् अत एव प्रणमितशिरसं कान्तं वा । परिसंख्यालङ्कारः मालिनी वृत्तम् ॥ १२ ॥

२ तत्रभवती मालविका । अपराद्धं कृतापराधं त्वाम् ॥

३ मूर्ध्ना शिरसा प्रतिगृहीतं स्वीकृतम् । संमानितमित्यर्थः ।

( ततः प्रविशति युक्तमदेरावती चेटी च । ) १

इरावती—हंजे णिउणिए! सुणामि बहुसो " मदो किल इत्थिआअणस्स विसेसमंडणं " त्ति । अवि सच्चो एसो लोअवादो ? ॥ ( हञ्जे निपुणिके ! श्रृणोमि बहुशः " मदः किल स्त्रीजनस्य विशेषमण्डनम्" इति । अपि सत्य एष लोकवादः?)॥ २

निपुणिका—पढमं लोअवादो एव्व सम्पदं सच्चो संवुत्तो ॥ ( प्रथमं लोकवाद एव साम्प्रतं सत्यः संवृत्तः ) ॥ ३

इरावती—अलं मयि सिणेहेण । कहेहि कुदो दाणिं अवगमिदव्वं दोलाघरं पढमं गदो भट्टा ण वे त्ति ॥ ( अलं मयि स्नेहेन । कथय कुत इदानीमवगन्तव्यं दोलागृहं प्रथमं गतो भर्ता न वेति ) ॥ ४

---

प्रश्नयोक्तिरियम् । सिद्धिदर्शिनः सिद्धिं भाविनीं कार्यसिद्धिं पश्यति साक्षात्करोति तथाभूतस्य भविष्यद्विद इत्यर्थः । ब्राह्मणस्य तव । वचः भाषणम् ॥

१ युक्तमदा युक्तः संक्रान्तः मदो मधुपान जन्मा । यस्यां तथाभूता ॥

२ हञ्जे चेटि । निपुणिका तन्नामा चेटी । विशेषमण्डनं विशेषं स्वर्णादिभूषणापेक्षयाऽधिक्ययुतं मण्डनं भूषणम् । इतीति श्रृणोमीत्यनेन संबन्धः । मदो हि स्त्रीणां स्वाभाविकोऽलङ्कार इति लोकवादो लोकानामुक्तिः । सत्यो यथार्थः । लोकवादान्वय्येतत् ॥

३ प्रथमं भवच्छरीरे प्रादुर्भावात्प्राक् । लोकवाद एव अननुभूतत्वादिति भावः । साम्प्रतम् अधुना । त्वयि प्रत्यक्षीभावे । सत्यो यथार्थः ॥

४ मयि मद्विषयिणा स्नेहेन स्नेहोत्थापितया प्रियोक्त्येत्यर्थः ।

निपुणिका—भट्टिणीए अखंडिदादो पणआदो ॥ (भट्टिन्या अखण्डितात्प्रणयात् ) ॥ १

इरावती—अलं सेवाए । मज्झत्थदं परिगहिअ भणाहि ॥ ( अलं सेवया । मध्यस्थतां परिगृह्य भण ) ॥ २

निपुणिका—णं वसंतोस्सवुवाअणलोलुवेण अज्जगोदमेण कहिदं " तुवरेदु भट्टिणी" त्ति ॥ ( ननु वसन्तोत्सवोपायनलोलुपेनार्यगौतमेन कथितं " त्वरतां भट्टिनी " इति ) ॥ ३

इरावती—( अवस्थासदृशं परिक्रम्य ) हञ्जे ! मदेण गिलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरावेदि । चलणा उण ण ओसलंति ॥ ( हञ्जे ! मदेन ग्लायन्तमात्मानमार्यपुत्रस्य दर्शने हृदयं त्वरयति । चरणौ पुनर्न प्रसरतः ) ॥ ४

---

कुतः केन हेतुना । दोलागृहं दोलासहितं गृहम् । दोलाक्रीडनालय इत्यर्थः । भर्ता राजा ॥

१ भट्टिन्याः कनिष्ठाया राजभार्यायास्तव । अखण्डितादविच्छिन्नात्प्रणयादनुरागाद्धेतोः । यद्भवत्यां तस्य अखण्डितः प्रणयस्तदनुमीयते प्रथममेव तस्य गमनमिति भावः ॥

२ सेवया सेवोचितेन परितोषजनकेन वाक्येनेत्यर्थः । मध्यस्थतां पक्षपातित्वाभावमित्यर्थः ।

३ वसन्तोत्सवोपायनलोलुपेन वसन्ततौ क्रियमाणस्योत्सवस्य संबन्धिषूपायनेषु वायनेषु लोलुपेन अतिमात्रलुब्धेन । त्वरतामागमनाय त्वरां करोतु । गौतमस्य वायनलुब्धत्वाद्वायनानां च राजानमन्तरा दुर्लभत्वान्नृपसहितस्यात्मन आगमनसूचकाद्देव्याः सत्वरागमनाभिधानाच्च विदूषकेण तत्रानीत एव भर्तेति निश्चीयत इति भावः । " व्रतोपायनवायने " इति त्रिकाण्डशेषः ॥

४ अवस्थासदृशम् अवस्थायाः मदानुभवदशायाः सदृशं योग्यं

निपुणिका—णं संपत्त म्ह दोलाघरम् ॥ ( ननु संप्राप्ते स्वो दोलागृहम् )॥

इरावती—णिउणिए ! अज्जउत्तो एत्थ ण दीसदि ॥ ( निपुणिके ! आर्यपुत्रोऽत्र न दृश्यते )॥

निपुणिका—णं भट्टिणी आलोएदु । परिहासणिमित्तं कहिं वि गूढेण भट्टिणा होदव्वं । अम्हे वि इमं पिअंगुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो ॥ ( ननु भट्टिन्यालोकयतु । परिहासनिमित्तं क्वापि गूढेन भर्त्रा भवितव्यम् । आवामपीमं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशामः ) ॥ १

इरावती—तहा ॥ ( तथा ) ॥

---

यथा तथा । परिक्रम्य पादौ विन्यस्य । हञ्जे चेटि । हृदयं मनः कर्तृ । मदेन करणभूतेन ग्लायन्तं म्लानतां गच्छन्तमात्मानं शरीरं प्रति आर्यपुत्रस्य राज्ञो दर्शने विलोकने विषये त्वरयति त्वरायुक्तं करोति । चरणौ पादौ पुनरिति तु इत्यस्यर्थे । न प्रसरतः न गच्छतः । मदेन विक्लवत्वादिति भावः ॥

१ भट्टिनी अकृताभिषेका राजभार्या भवतीरावतीत्यर्थः । " देवी कृताभिषेकायामितरासु तु भट्टिनी ।" इत्यमरः । परिहासनिमित्तम् उपहासार्थम् । गूढेन अन्तर्हितेन भर्त्रा राज्ञा भावितव्यम् । भावे तव्यः । प्रियङ्गुलतापरिक्षिप्तं प्रियङ्गुलतया फलिनीवल्ल्या परिवृतम् । शिलापट्टकं पाषाणफलकम् । प्रविशामो गच्छाम इति यावत् ॥

---

१ 'वाघाटे' इति भाषायाम् ।

**निपुणिका**—( विलोक्य ) आलोअदु भट्टिणी चूदंकुरं विचिण्णंतीणं अम्हाणं पिपीलिआहिं दंसिदम् ॥ ( आलोकयतु भट्टिनी चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् ) ॥ १

**इरावती**—किं विअ एदम् ? ॥ ( किमिवेदम् ? ) ॥

**निपुणिका**—एसा असोअपादवच्छाआए मालविआए बउलावलिआ चरणालंकारं णिव्वट्टेदि ॥ ( एषाऽशोकपादपच्छायायां मालविकाया बकुलावलिका चरणालङ्कारं निर्वर्तयति ) ॥ २

**इरावती**—( शङ्कां रूपयित्वा ) अभूमी इअं मालविआए कहं एत्थ तक्केसि ? ॥ ( अभूमिरियं मालविकायाः कथमत्र तर्कयसि ? ) ॥ ३

---

१ आवयोः चूताङ्कुरम् आम्राङ्कुरं विचिन्वतोर्मार्गयतोः सत्योः । पिपीलिकाभिर्दष्टं[1] दंशः कृतः । यथा चूताङ्कुरान्वेषणे क्रियमाणे मध्ये पिपीलिकादंशश्चित्तस्य वृत्तिं निरुणद्धि एवंराजानमन्विच्छतोरावयोर्मध्ये मालविकादर्शनं चित्तमाकर्षतीति भावः । अत्र राजानमन्विच्छतोरावयोरग्रतो मालविका तिष्ठतीति वक्तव्ये तस्यैव प्रतिबिम्बेन वर्णनाल्ललितं नामालङ्कारः । " कर्णे स्याद्वर्ण्यवृत्तान्तप्रतिबिम्बस्य वर्णनम् । ललितम् " इत्युक्तेः ॥

२ अशोकपादपच्छायायाम् अशोकवृक्षस्य च्छायायाम् । मालविकायाः । निर्वर्तयति निष्पादयति ॥

३ रूपयित्वा प्रकाश्य । इयं चरणालङ्कारनिर्वर्तनक्रिया मालविकायाश्चेट्या इति भावः । अभूमिः अयोग्या । उत्तमस्त्रीणामेवाधिकारात् । अत्र अस्मिन् विषये । कथं केन प्रकारेण तर्कयसि संभावयसि ॥

---

१ ' मुंगी ' इति भाषायाम् ।

निपुणिका—तक्केमि दोलापरिब्भंसिदाए सरुअचलणाए देवीए असोअदोहलाहिआरे मालविआ णिवुत्ते त्ति । अण्णहा कहं देवी सअं धारिदं णूउरजुअलं परिअणस्स अब्भणुजाणिस्सदि ॥ ( तर्कयामि दोलापरिभ्रष्टया सरुजचरणया देव्याऽशोकदोहदाधिकारे मालविका नियुक्तेति । अन्यथा कथं देवी स्वयं धारितं नूपुरयुगलं परिजनस्याभ्यनुज्ञास्यति ) ॥ १

इरावती—महदी क्खु से संभावना ॥ ( महती खल्वस्याः संभावना ) ॥ २

निपुणिका—किं ण अण्णेसीअदि भट्टा ? ॥ ( किं नान्विष्यते भर्ता ? ) ॥ ३

---

१ दोलापरिभ्रष्टया दोलायाः सकाशात्पतितया । अत एव सरुजचरणया सरुजौ रोगयुक्तौ चरणौ यस्यास्तथाभूतया देव्या धारिण्या कर्त्र्या । अशोकदोहदाधिकारे अशोकस्य नारीपादताडनरूपदोहदस्य क्रियायाम् । नियुक्ता अधिकृता । स्वप्रतिनिधित्वेन योजितेत्यर्थः । स्वोक्तं द्रढयति । अन्यथेति । अन्यथा ममोक्तिसंभवाभावे स्वयं धारितम् आत्मना धृतम् इत्यन्यजनधारणायोग्यत्वं ध्वन्यते । परिजनस्य सेवकलोकस्य तेन धारयितुमित्यर्थः । अभ्यनुज्ञास्यति अनुमोदिष्यते ॥

२ अस्यास्तवेत्यर्थः । महती उत्कटकोटिका अवितथेति यावत् । संभावना तर्कः ॥

३ किं कथम् ॥

**इरावती**—हञ्जे ! मे चलणा अग्गदो ण पवट्टन्दि । मदो मं विआरेदि । आसंकिदस्स दाव अंतं गमिस्सं । ( मालविकां निरूप्यात्मगतम् ) ठाणे खु कादरं मे हिअअम् ॥ ( हञ्जे ! मे चरणावग्रतो न प्रवर्तेते । मदो मां विकारयति । आशङ्कितस्य तावदन्तं गमिष्यामि । स्थाने खलु कातरं मे हृदयम् ) ॥ १

**बकुलावलिका**—( मालविकायै चरणं दर्शयन्ती ) अवि रोअदि दे राअरेहाविण्णासो ? ॥ ( अपि रोचते ते रागरेखाविन्यासः ? ) ॥ २

**मालविका**—अत्तणो चलणं त्ति लज्जेमि णं पसंसिदुम् । केण सिप्पसाहणकलाए एव्वं अभिणीदासि ॥ ( आत्मनश्चरणमिति लज्जे प्रशंसितुम् । केन शिल्पसाधनकलायामेवमभिनीतासि ) ॥ ३

---

१ हञ्जे चेटि । न प्रवर्तेते न प्रसरतः । तत्र हेतुः । मद इति । तावत्प्रथमम् आशङ्कितस्य अस्यां मालविकायां राज्यनुरागशङ्काया मदुद्भाविताया इत्यर्थः । आशङ्कितमिति नपुंसके भावे क्तः । अन्तं पारम् । किमर्थमियमागतेति निर्णेष्यामीत्यर्थः। निरूप्य दृष्ट्वा । हृदयं मनः । कातरं भीरु । मालविकायां राजानुरागस्य संभावनया इति भावः । स्थाने योग्यम् । अस्तीति शेषः । मालविकाया लावण्यातिशययुक्तत्वादत्र राजानुरागस्य संभवादिति भावः ॥

२ रागरेखाविन्यासः रज्यतेऽनेन रागः। करणे घञ् । रञ्जनसाधनं द्रव्यमालक्तकरसरूपं तस्य रेखाया रेषाया विन्यासो रचना । ते तुभ्यं रोचते । अपीति प्रश्ने । " रुच्यर्थानां प्रीयमाणः " इति चतुर्थी ॥

३ आत्मनः स्वस्य । चरणं पादः । " पदङ्घ्रिश्चरणोऽस्त्रियाम् " इत्यमरः । शिल्पस्य साधनं निष्पादनमेव कला तत्र । अभिनीतासि नैपुण्यं प्रापितासि शिक्षितासीत्यर्थः ॥

बकुलावलिका—एत्थ खु भट्टिणो सिस्सम्हि ॥ ( अत्र खलु भर्तुः शिष्यास्मि ) ॥ १

विदूषकः—तुवरेहि दाणिं गुरुदक्खिणाए ॥ ( त्वरयेदानीं गुरुदक्षिणायै ) ॥ २

मालविका—दिट्ठिआ ण गव्विदासि ॥ ( दिष्ट्या न गर्वितासि ) ॥ ३

बकुलावलिका—उवदेसाणुरूवे चलणे लंभिअ दाणिं गव्विदा भविस्सं । ( रागं विलोक्यात्मगतम् ) हंत ! सिद्धो मे दप्पो । (प्रकाशम् )सहि ! एक्कस्स दे चलणस्स अवसिदो राअणिक्खेपो । केवलं मुहमारुदो लंभइदव्वो । अह वा पवादं एदं ठाणम् ॥ ( उपदेशानुरूपे चरणे लब्ध्वेदानीं गर्विता भविष्यामि । हन्त ! सिद्धो मे दर्पः । सखि ! एकस्य ते चरणस्य अवसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः। अथ वा! प्रवातमेतत् स्थानम् ) ॥ ४

---

१ अत्र कलायाम् । भर्तू राज्ञः ॥

२ गुरुदक्षिणायै गुरवे देया दक्षिणा पुरस्कारद्रव्यं तस्यै तदर्थम् । त्वरय त्वरां कुरु। इदानीमपेक्षितां मालविकारूपां दक्षिणां दापयितुं ते शिष्यां बकुलावलिकां त्वरयेति राजानं प्रत्युक्तिः ॥

३ दिष्ट्येति हर्षे । यत् त्वं राज्ञः शिष्याऽपि सती न गर्विताऽसि तेन मे हर्ष इति भावः ॥

४ उपदेशस्य शिक्षणस्यानुरूपे योग्ये । गुरुणा यादृशस्य चरणस्य रञ्जनयोग्यत्वमुपदिष्टं तादृशे इत्यर्थः । चरणे पादौ तवेति शेषः। लब्ध्वा प्राप्य । इदानीं तव चरणरञ्जनकाले। गर्विता संजाताभिमाना । मे मम दर्पो गर्वः सिद्धो निष्पन्नः । मालविकाचरणे

राजा—सखे ! पश्य ॥

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयितुम् ।
प्रतिपन्नः प्रथमतरः सम्प्रति सेवावकाशो मे ॥ १३ ॥

विदूषकः—कुदो दे अणुसओ ? एदं भवदा चिरक्कमेण अणुभविदव्वम् ॥ ( कुतस्तेऽनुशयः ? एतावद्भवता चिरक्रमेणानुभवितव्यम् ) ॥ १

बकुलावलिका—सहि ! अरुणं सतपत्तं विअ सोहदि दे चरुणं । सव्वहा भट्टिणो अंकपरिवट्टिणी होहि ॥ ( इरावती निपुणिकामवेक्षते । ) ( सखि ! अरुणं शतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ) ॥ २

---

यावकरसनिषेके निपुणतातिशयाविर्भावादिति भावः । रागनिक्षेपः रागस्य रञ्जनसाधनस्यालक्तकरसस्य निक्षेपो निषेकः । अवसितः समाप्तः । मुखमारुतः आलक्तकशोषणाय मुखस्य संबन्धी मारुतो वायुः । लम्भयितव्यश्चरणं प्रति प्रापयितव्यः "डुलभष् प्राप्तौ" इत्यतः प्रयोजकणिजन्तात्तव्यः । प्रवातं प्रकृष्टो वातो यत्र तथाभूतं तेन मुखमारुतलम्भनं नावश्यकमित्यर्थः ॥

आर्द्रेति ॥ आर्द्रालक्तकम् आर्द्रः स्निग्ध आलक्तको यावकरसो यत्र तथाभूतम् । अस्याः मालविकायाः चरणं पादं कर्मभूतं शोषयितुं शुष्कतां नेतुम् । मे मम कर्तरि षष्ठी । प्रथमतरः अत्यन्तप्रथमः। अतिशयेन मुख्यो वा । सेवावकाशः सेवनावसरः। प्रतिपन्नः प्राप्तः। अस्याश्चरणालक्तको मयैव मुखमारुतेन शोषणीय इति भावः । एतेनानुरागातिशयो ध्वन्यते । आर्या जातिः ॥ १३ ॥

१ अनुशयः खेद इति यावत् । एतत् सेवनं अचिरक्रमेण अचिरादेवेत्यर्थः ॥

२ अरुणं शोणं शतपत्रं कमलमिव सुकुमारमित्यर्थः। भर्तुः राज्ञः

राजा—ममेयमाशीः ॥ १

मालविका—हला ! मा अविणीअं मन्तेहि ॥ ( हला ! मा अविनीतं मन्त्रय ) ॥ २

बकुलावलिका—मंतिदव्वं एव्व मंतिदम् मए ॥ (मन्त्रयितव्यमेव मन्त्रितं मया ) ॥ ३

मालविका—पिआ क्खु अहं तव ॥ (प्रिया खल्वहं तव)॥ ४

बकुलावलिका—ण केवलं मम ॥ ( न केवलं मम ) ॥

मालविका—कस्स वा अण्णस्स ? ॥ ( कस्य वाऽन्यस्य ? )॥

बकुलावलिका—गुणेसु अहिणिवेसिणो भट्टिणो वि ॥ ( गुणेष्वभिनिवेशिनो भर्तुरपि ) ॥ ५

---

अङ्कपरिवर्तिनी अङ्के समीपे परिवर्तिनी संचारिणी । अङ्के उत्सङ्गे परिवर्तितुं लुठितुं शीलं यस्यास्तादृशी वा । सुकुमारस्य तत्रैव वसतियोग्यत्वादिति भावः । भर्तृपदेन राज्ञो ग्रहणाद्राज्ञीयमासक्तेति ईर्ष्यामूलकं निपुणिकावेक्षणम् ॥

१ इयं " सर्वथा भर्तुः " इत्यादिबकुलावलिकयोक्ता आशीः आशंसा इच्छेत्यर्थः ॥

२ अविनीतम् उद्धतम् अयुक्तमित्यर्थः ॥

३ मन्त्रयितव्यमेव मन्त्रयितुं योग्यमेव । भर्तुस्त्वय्यनुरागदर्शनादिति भावः ॥

४ तेन मत्प्रियं त्वमवश्यं घटयिष्यसीति भावः ॥

५ गुणेषु विषये अभिनिवेशिनोऽनुरागातिशयवतः ॥

मालविका—अलीअं मंतेसि । एदं एव्व मयि णत्थि ॥ ( अलीकं मन्त्रयसि । एतदेव मयि नास्ति ) ॥ १

बकुलावलिका—सच्चं तुइ णत्थि । भट्टिणो किसेसु सुंदरपांडुरेसु दीसइ अंगेसु ॥ ( सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरेषु दृश्यतेऽङ्गेषु ) ॥ २

इरावती—पढमं गणिदं विअ हदासाए उत्तरम् ॥ ( प्रथम गणितमिव हताशाया उत्तरम् ) ॥ ३

बकुलावलिका—अणुराओ अणुराएण परिक्खिदव्वो त्ति सुअणवअणं पमाणं करेहि ॥ ( अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणीकुरु ) ॥ ४

---

१ अलीकम् असत्यं यथा तथा । "अलीकं त्वप्रियेऽनृते ।" एतत् भर्तुः प्रियत्वम् ॥

२ सुन्दरपाण्डुरेषु सुन्दरेषु पाण्डुरेषु विरहाद्धवलेषु च कृशेषु विरहादित्येव । अङ्गेषु अवयवेषु । "अङ्गं प्रतीकोऽवयवः" इत्यमरः । त्वय्यनुरक्तस्त्वामनधिगत्य च भर्ता विरहिणामवस्थामनुभवतीति शक्यमेतावतैवानुमातुं तस्य त्वयि प्रेमेति भावः ॥

३ हताशाया हता दुष्टा आशाऽभिलाषः स्वासंमतमालविकासंबन्धरूपो यस्यास्तथाभूताया बकुलावलिकायाः प्रथमम् उत्तरदानात्प्राक् गणितं तर्कितमिव । यथा मया पूर्वं तर्कितं तथैवेयमुक्तवतीति भावः ॥

४ अनुरागः प्रीतिः । परीक्षितव्यः समालोचनीयः । अनुमातव्य इति यावत् ॥

मालविका—किं अत्तणो च्छंदेण मंतेसि ? ॥ ( किमात्मनश्छन्देन मन्त्रयसि ? ) ॥ १

बकुलावलिका—णहि णहि । भट्टिणो क्खु एदाइं पणअमिदुलाइं अक्खराइं वत्तंतरिदाइं ॥ ( नहि नहि । भर्तुः खल्वेतानि प्रणयमृदुलान्यक्षराणि वक्त्रान्तरितानि ) ॥ २

मालविका—हला ! देवीं चिंतिअ ण मे हिअअं विस्ससदि ॥ ( हला ! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति) ॥ ३

बकुलावलिका—मुद्धे ! भमरसंबाधो अत्थि त्ति वसंदावदारसंभूदो किं ण चूतप्पसवो ओदंसणिज्जो ॥ ( मुग्धे ! भ्रमरसंबाधोऽस्तीति वसन्तावतारसंभूतः किं न चूतप्रसवोऽवतंसनीयः ) ॥ ४

---

१ किं कथम् । आत्मनः निजस्य । छन्देन अभिप्रायेण । "छन्दो वशेऽप्यभिप्राये" इति मेदिनी ॥

२ प्रणयमृदुलानि प्रणयेन स्नेहेन मृदुलान्यकठोराणि । वक्त्रान्तरितानि मुखमध्यवर्तीनि ॥

३ देवीं धारिणीं चिन्तयित्वा ध्यात्वा । विश्वसिति प्रणयदार्ढ्ये विश्वासं करोति । राज्ञो देव्यनुकूलत्वादिति भावः ॥

४ मुग्धे मूढे । भ्रमरसंबाधः भ्रमराणां पीडाऽस्ति इति हेतोः । वसन्तावतारसम्भूतः वसन्तस्य ऋतुविशेषस्य अवतारे प्रादुर्भावे संभूत उत्पन्नः । चूतप्रसवः चूतस्य आम्रस्य प्रसवः पुष्पं किं नावतंसनीयः न कर्णपूरीकर्तव्यः अपि तु कर्तव्य एव । अभीष्टाभिनिवेशी प्रतिबन्धकं न गणयतीति भावः । " प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फले च कुसुमेऽपि च ॥ " इति । यथा चूतमञ्जरीमवतंसयितुकामो भ्रमरबाधां न गणयति तथा त्वमपि राजानमभिलषन्ती धारिणीं मा गणयेति भावः ॥

मालविका—तुमं दाव दुज्जादे गच्छंतस्स सहायिणी होइह ॥ ( त्वं तावद्दुर्जाते गच्छतः सहायिनी भव ) ॥ १

बकुलावलिका—विमद्दसुरही बउलावलिआ क्खु अहम् ॥ ( विमर्दसुरभी बकुलावलिका खल्वहम् ) ॥ २

राजा—साधु बकुलावलिके ! साधु ॥ ३

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनो दूत्यधीनाः ॥ १४ ॥

---

१ दुर्जाते व्यसने दुःखहेतुक इत्यर्थः । गच्छतः सहायिनी साहाय्यकारिणी प्रवर्तिकेति यावत् । भव । धारिणीसंबन्धाद्दुःखहेतौ राजसमागमे प्रवर्तमानाया मम साहाय्यं कृत्वा व्यसनं प्रापयिष्यसीति सोपालम्भोक्तिः । " दुर्जातं व्यसने क्लीबे " इति मेदिनी ॥

२ विमर्दसुरभिः विगतो मर्दः पुरुषसंबन्धो यस्यास्तथाभूताऽत एव सुरभिर्मनोज्ञा । बकुलावलिकेत्यात्मनामसंकीर्तनात् " नाहं त्वां दुष्पथे प्रवर्त्य व्यसने पातयिष्यामि " इति ध्वन्यते ॥

३ साध्विति प्रशंसायाम् ॥

**भावेति** ॥ भावज्ञानानन्तरं भावस्य मालविकाभिप्रायस्य प्राथमिकस्य मदनविकारस्य वा ज्ञानानन्तरं प्रस्तुतेन आरब्धेन । " निर्विकारात्मके चित्ते भावः प्रथमविक्रिया।" इत्युक्तेः। तथा प्रत्याख्याने स्वोक्तेर्मालविकया निराकृतौ कृतायां सत्यां " प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः। " इत्यमरः । मालविकया बकुलावलिकावचने तिरस्कृते सतीत्यर्थः । दत्तयुक्तोत्तरेण दत्तं युक्तं योग्यम् उत्तरं येन तथाभूतेन । वाक्येन करणभूतेन । इयं मालविका । स्वे स्वकीये

इरावती—हंजे ! पेक्ख कारिदं एव्व बउलावलिआए एदस्सिं पदं मालविआए ॥ ( हञ्जे ! प्रेक्षस्व कारितमेव बकुलावलिकयैतस्मिन् पदं मालविकायाः ) ॥ १

निपुणिका—भट्टिणि ! अहिआरस्स उइदो उवदेसो ॥ ( भट्टिनि ! अधिकारस्योचित उपदेशः ) ॥ २

इरावती—ठाणे क्खु संकिदं मे हिअअं । गहीदत्था अणंतरं चिंतइस्सम् ॥ ( स्थाने खलु शङ्कितं मे हृदयम् । गृहीतार्थाऽनन्तरं चिन्तयिष्यामि ) ॥ ३

---

बकुलावलिकयानुष्ठेये । निदेशे आज्ञायां स्थापिता । अतः कामिनः कामुकस्य प्राणा दूत्यधीनाः दूत्या अधीना इति यत् तत्स्थाने योग्यम् । दूती यथा स्वं नियोगं स्वरूपयति तथा स फलतीति कामिप्राणानां दूत्यधीनत्वम् । निसृष्टार्थेयं दूती । तदुक्तं साहित्यदर्पणे । " उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् । सुश्लिष्टं कुरुते कार्यं निसृष्टार्थस्तु स स्मृतः॥ " इति । शालिनी वृत्तम् । " मात्तौ गौ चेच्छालिनी वेदलोकैः " इति लक्षणात् ॥ १४ ॥

१ हञ्जे चेटि । प्रेक्षस्व पश्य । एतस्मिन् राजसमागमेच्छाकर्मणि । पदं कारितं प्रवर्तितेत्यर्थः ॥

२ अधिकारस्य योग्यतायाः उचितः सदृशः उपदेशः शिक्षणम् । बकुलावलिकाया दासीत्वेन नीचत्वात्तद्योग्यतानुरूपं नीचमेव तयोपदिष्टमिति भावः ॥

३ मे मम हृदयं मनः । यत् शङ्कितं सञ्जातशङ्कम् आसीत् तत् स्थाने युक्तम् । गृहीतार्था गृहीतः प्रत्यक्षीकृतोऽर्थो राज्ञो मालविकासमागमरूपो यया तथाभूता सती अनन्तरं चिन्तयिष्यामि तत्र यत्कर्तव्यं तदिति शेषः ॥

**बकुलावलिका**—एसो दुदीओ वि दे णिव्वत्तपरिकम्मा-चलणो। जाव णं सणूउरं करेमि। ( नाट्येन नूपुरयुगलमामुच्य ) हला! उट्ठेहि। असोअविआसइत्तअं देवीए णिओअं अणुचिट्ठ ॥ ( उभे उत्तिष्ठतः। ) ( एष द्वितीयोऽपि ते निर्वृत्त-परिकर्माचरणः। यावदेनं सनूपुरं करोमि। हला! उत्तिष्ठ। अशोकविकासयितृकं देव्या नियोगमनुतिष्ठ ) ॥ १

**इरावती**—सुदो देवीए णिआओ। होदु दाणिम् ॥ ( श्रुतो देव्या नियोगः। भवत्विदानीम् ) ॥ २

**बकुलावलिका**—एसो उवारूढराओ उअभोअक्खमो पुरदो दे वट्टइ ॥ ( एष उपारूढराग उपभोगक्षमः पुरतस्ते वर्तते ) ॥ ३

---

१ निर्वृत्तपरिकर्मा निर्वृत्तं समाप्तं परिकर्म यावकरसानिषेकरूपः संस्कारो यस्य तथाभूतः। अस्तीति शेषः। सनूपुरं नूपुरेण सहितम्। हला सखि उत्तिष्ठ। अशोकविकासयितृकम् अशोकस्य विकासयितृकं विकासकारिणं विकासः कुसुमानां फुल्लता। नियोगमाज्ञाम् अशोकदोहदपूरणरूपाम् अनुतिष्ठ कुरु ॥

२ भवत्विदानीम् इदानीं साम्प्रतं भवतु नियोगानुष्ठानमित्यर्थात्॥

३ एष इति। अतः परं मालविका विषादं नाटयतीति वाक्यपर्यन्तं पताकास्थानकम्। तल्लक्षणं वक्ष्यते। उपारूढरागः उपारूढ उत्पन्नो रागो रक्तिमा यत्र। पक्षे उपारूढः प्रादुर्भूतो रागस्त्वद्विषयिणी प्रीतिर्यत्र तथाभूतः। उपभोगे सेवने क्षमो योग्यः। पक्षे उपभोगे मालविकोपभोगे क्षमः शक्तः। ते तव पुरतोऽग्रतः। अस्या-

---

१ ‘ पैंजण ’ इति भाषायाम्।

**मालविका**—( सहर्षम् ) किं भट्टा ? ॥ ( किं भर्ता ? ) ॥

**बकुलावलिका**—( सस्मितम् ) ण दाव भट्टा । एसो असोअसाहावलंबी पल्लवगुच्छओ । ओदंसेहि णम् ॥ ( मालविका विषादं नाटयति । ) ( न तावद्भर्ता । एषोऽशोकशाखावलम्बी पल्लवगुच्छकः । अवतंसयैनम् ) ॥ १

**विदूषकः**—सुदं भवदा ? ॥ ( श्रुतं भवता ? ) ॥

**राजा**—सखे ! पर्याप्तमेतावता कामिनाम् ॥ २

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ १५ ॥

---

र्थद्वयेन राजपरत्वमपीति मालविकया राजपरत्वाभिप्रायेण पृच्छयते किं भर्ता इति ॥

१ अशोकशाखावलम्बी अशोकस्य शाखामवलम्बत आश्रयति तथाभूतः । शाखासंलग्न इत्यर्थः । पल्लवगुच्छकः किसलयानां स्तबकः । अवतंसय कर्णपूरीकुरु । विषादं खेदं नाटयति अभिनयति । आशाभङ्गाद्विषादः । एतावता चतुर्थं पताकास्थानकं प्रयुक्तं भवति । तल्लक्षणं दर्पणे यथा । " द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः । प्रधानार्थान्तरापेक्षी पताकास्थानकं परम् ॥ " इति ॥

२ एतावता एतादृशशब्दश्रवणमात्रेण कामिनाम् पर्याप्तं संपूर्णमिति वाचस्पतिः । अलमित्यन्ये । अतएव तृतीया । एतावतापि कामिनः कृतार्था इत्यर्थः ॥

अनातुरेति ॥ अनातुरोत्कण्ठितयोः अनातुरो मदनव्यथाशून्य उत्कण्ठितः पर्युत्सुकश्च तयोः विषमानुरागयोः प्रसिध्यता निष्पद्यमानेनापि समागमेन मां प्रति मत्पक्ष इति काटयवेमः। रतिः शृङ्गारः

---

१ ' कामिलोकांस इतकें बस्स आहे ' इति महाराष्ट्रभाषायाम् ।

( मालविका रचितपल्लवावतंसा पादमशोकाय प्रहिणोति । ) १

**राजा—वयस्य ! ॥**

**आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।**
**उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ १६ ॥**

---

न भवतीति शेषः । तथाविधाया रतेः शृङ्गाराभासत्वात् । तदुक्तम् । " अनौचित्यप्रवृत्तत्व आभासो रसभावयोः। " अनौचित्यस्थलानि च " बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् । प्रतिनायकनिष्ठत्वे तद्वधमपात्रतिर्यगादिगते ॥ शृङ्गारेऽनौचित्यम् " इति तेनात्रापि रतेरनुभयनिष्ठत्वाच्छृङ्गाराभासः । यद्वा माम्प्रति न रतिः नानन्द इति यावत् । विषमानुरागयोः संघटमानोऽपि समागमो न मे प्रमोदायेति भावः । समानुरागयोः परस्परस्मिन्नुत्कण्ठततया समप्रेम्णोः परस्परप्राप्तिनिराशयोः परस्परस्यान्योन्यस्य प्राप्तौ निराशयोः आशाशून्ययोरपि कामिनोः शरीरनाशो मरणमपि वरं मनागिष्टम् । तथा चोत्कण्ठितयोरावयोरसमागमोऽपि वरमिति भावः । वंशस्थविलं वृत्तम् ।"वदन्ति वंशस्थविलं जतौजरौ" इति लक्षणात् १५

१ रचितपल्लवावतंसा रचितः कृतः पल्लवरूपोऽवतंसः कर्णपूरो यया तथाभूता । अशोकाय अशोकं ताडयितुम् । " क्रियार्थोपपदस्य च " इति चतुर्थी । प्रहिणोति विसृजति ॥

**आदायेति** ॥ इयं मालविका कर्त्री। अस्मात् अशोकात् कर्णकिसलयं कर्णपूरार्थं पल्लवम् आदाय गृहीत्वा । अत्र कर्णशब्दः कर्णपूरस्य लक्षकः। अत्र अशोके चरणं पादम् अर्पयति न्यस्यति । उभयोः कर्णपूरचरणार्पणयोः सदृशविनिमयात् समानपरिवृत्तेः आत्मानं मामित्यर्थः वञ्चितं मन्ये। उभयोरपि रसोत्पादकत्वाभावान्निरर्थकं मन्ये इति वाचस्पतिः। परे तु उभयोर्नायिकानायकयोः सदृशविनिमयात् चरणार्पणसमानेतरप्रदानरूपात् परिवर्तनात् आत्मानं मां नृपं वञ्चितं विप्रलब्धं मन्ये । अहं तु मत्कर्तृक एतादृशे विनिमये निराशः संवृत्त इति भाव इत्याहुः । आर्या ॥ १६ ॥

बकुलावलिका—हला ! णत्थि ते दोसो । णिग्गुणो अअं असोओ जई कुसुमोग्गममंथरो भवे जो दे चलणसक्कारं लंभिदो॥ ( हला ! नास्ति ते दोषः । निर्गुणोऽयमशोको यदि कुसुमोद्गममन्थरो भवेद्यस्ते चरणसत्कारं लम्भितः )॥ १

राजा—

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन संभावितः ।
अशोक यदि सद्य एव मुकुलैर्न संपत्स्यसे
मुधा वहसि दोहदं ललितकामिसाधारणम् ॥१७॥

---

१ योऽशोकः ते तव । चरणसत्कारं चरणेन कृतं संमानं लम्भितः प्रापितः । "डुलभष् प्राप्तौ" इत्यतो णिजन्तात् " लभेश्च " इति कृतनुमः क्तः । सः यदि कुसुमोद्गममन्थरः कुसुमोद्गमे पुष्पोत्पत्तौ मन्थरश्चिरायमाणः भवेत् तदायम् अशोक एव निर्गुणो मूढः। नागुणशीलस्य गुणिनि परितोष इति भावः ॥

अनेनेति ॥ हे अशोक । तनुमध्यया तनु कृशं मध्यम् अवलग्नं यस्यास्तया मालविकया कर्त्र्या । मुखरनूपुराराविणा मुखरस्य शब्दायमानस्य नूपुरस्य आरावः शब्दोऽस्त्यत्र तथाभूतेन। नवाम्बुरुहकोमलेन नवं नवीनमम्बुरुहं कमलमिव कोमलेन । नवपदमत्यन्तमार्दवव्यञ्जकम् । अनेन कान्तमात्रयोग्येनेत्यर्थः। चरणेन पदेन करणभूतेन सम्भावितः सम्मानितः कृतसत्कार इत्यर्थः। त्वम् इति शेषः । यदि सद्यः तत्कालमेव मुकुलैः कलिकाभिः न संपत्स्यसे न युक्तो भवसि तदा ललितकामिसाधारणं ललितानां कामशास्त्रप्रवीणतया सुन्दराणां कामिनां कामुकानां साधारणम् उचितम् दोहदं वाञ्छां सुन्दरीचरणार्पणपात्रीभावरूपां मुधा वृथा वहसि धारयसि । तव अभीष्टदातृत्वाभावेन कामिसादृश्याभावात्कामिमात्र-

सखे ! वचनावकाशपूर्वकं प्रवेष्टुमिच्छामि ॥ १

विदूषकः—एहि णं परिहासइस्सम् ॥ (उभौ प्रवेशं कुरुतः।) (एह्येनां परिहासयिष्यामि ) ॥ २

निपुणिका—भट्टिणि ! भट्टिणि ! भट्टा एत्थ पविसदि ॥ ( भट्टिनि ! भट्टिनि ! भर्ताऽत्र प्रविशति ) ॥ ३

इरावती—एदं मम पढमं चिंतिदं हिअएण ॥ ( एतन्मम प्रथमं चिन्तितं हृदयेन ) ॥ ४

---

योग्यमिदं दोहदं न ते युक्तमिति भावः। अत्र द्वितीयतृतीयचरणयोर्यतिभङ्गो नाशङ्कनीयः। प्रातिपदिकप्रत्यययोर्मध्यपातित्वे तस्य दोषावहकत्वाभावात्। तृतीयचरणे तु एवशब्दमध्यवर्ती यतिः यद्यपि दोषावहस्तथापि श्वेतमाण्डव्यमते यतेरेवाभावान्न दोष इति ध्येयम्। हलायुधेन पदमध्येऽपि क्वचिद्यतेरनुमतत्वाद्वा । " यतिर्जिह्वेष्टविश्रामस्थानं कविभिरुच्यते । " इति छन्दोमञ्जर्याम् । कविकल्पलतायां च " यतिभङ्गो नाम धातुभागभेदाद्यथा भवेत् ।" इति । पिङ्गलसूत्रवृत्तौ हलायुधस्तु " क्वचित्तु पदमध्येऽपि समुद्रादौ यतिर्भवेत् । यदि पूर्वापरौ भागौ न स्यातामेकवर्णकौ ॥" इति । "श्वेतमण्डव्यमुख्यास्तु नेच्छन्ति मुनयो यतिम् । " इति च्छन्दोमञ्जर्यां पुरुषोत्तमः । पृथ्वी वृत्तम् । " जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः " इति लक्षणात् ॥ १७ ॥

१ वचनावकाशपूर्वकं भाषणावसरपूर्वकम् । मालत्या सह वक्तुमवसरं दृष्ट्वेत्यर्थः ॥

२ एनां मालविकां परिहासयिष्यामि उपहासयिष्यामि । त्वया कर्त्रेति शेषः ॥

३ भट्टिनी अनभिषिक्ता राजस्त्री इरावती । भर्ता राजा ॥

४ एतत् राज्ञस्तत्र प्रवेशनम् । प्रथमं प्रवेशात्प्रागेव । चिन्तितं संभावितम् ॥

विदूषकः—(उपेत्य) भोदि! जुत्तं णाम अत्तभोदि पिअवअस्से असोओ वामपाएण ताडयिदुम् ? ॥ (भवति ! युक्तं नाम अत्रभवति प्रियवयस्येऽशोको वामपादेन ताडयितुम् ?) ॥ १

उभे—(ससम्भ्रमम्) अम्भो भट्टा। जेदु जेदु भट्टा ॥ (अहो भर्ता जयतु जयतु भर्ता) ॥ २

विदूषकः—बउलावलिए ! गहीदत्थाए तुए अत्तभोदी इरिसं अविणअं करंती कीस ण णिवारिदा ? ॥ (मालविका भयं रूपयति ।) (बकुलावलिके! गृहीतार्थया त्वयाऽत्रभवतीदृशमविनयं कुर्वन्ती कस्मान्न निवारिता ?) ॥ ३

निपुणिका—भट्टिणि ! पेक्ख। किं पउत्तं अज्जगोदमेण ॥ (भट्टिनि! प्रेक्षस्व । किं प्रवृत्तमार्यगौतमेन ) ॥ ४

---

१ भवति चेटि मालविके । "वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः ।" इत्युक्तेः । अत्रभवति पूज्ये प्रियवयस्ये मम प्रिये सुहृदि राज्ञि स्थित इति शेषः । तत्समक्षमित्यर्थः । अशोकः वामपादेन अविनयमात्रयोग्येन सव्यचरणेन ताडयितुं प्रहर्तुं युक्तं नामेति प्रश्नः राज्ञः समक्षं नायमविनयो युक्त इति भावः । अथ च प्रियवयस्ये सत्यशोकस्ताडयितुमिति योज्यम् । तथा च मम प्रियवयस्यो राजैवानया ताडनीयो नाशोक इति भावः ॥

२ ससंभ्रमं सादरं सवेगं वा यथा तथा ॥

३ गृहीतार्थया स्वीकृतराजसंदेशया चतुरया चेत्यर्थः । अत्रभवती मालविका । न निवारिता न निषिद्धा। रूपयति प्रकाशयति ॥

४ प्रवृत्तम् आरब्धम् । राज्ञो मालविकया संयोजनस्य प्रस्तावनेयमित्यर्थः । प्रेक्षस्व पश्य ॥

इरावती—कहं खु बह्मबंधू अण्णहा जीविस्सदि ॥ ( कथं खलु ब्रह्मबन्धुरन्यथा जीविष्यति ) ॥ १

बकुलावलिका—अज्ज ! एसा देवीए णिओअं अणुचिट्ठदि । एदस्सिं अदिक्कमे परवदी इअं पसीदिदु भट्टा ॥ ( इति आत्मना सहैनां प्रणिपातयति । ) ( आर्य ! एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयं प्रसीदतु भर्ता ) ॥ २

राजा—यद्येवमनपराधासि । उत्तिष्ठ भद्रे ! ॥ ( हस्तेन गृहीत्वोत्थापयति ) ।

विदूषकः—जुज्जइ देवी एत्थ माणइदव्वा ॥ ( युज्यते देव्यत्र मानयितव्या ) ॥ ३

राजा—( विहस्य ) ॥ ४

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे ।
चरणस्य न ते बाधा संप्रति वामोरु वामस्य ॥ १८ ॥

---

१ अन्यथा एतादृशारम्भाभावे । ब्रह्मबन्धुर्निन्द्यब्राह्मणः । " ब्रम्हबन्धुराधिक्षेपे " इत्यमरः । राजाभीष्टचिन्तनमेवास्योपजीविकेति भावः ॥

२ अतिक्रमेऽविनयाचरणे विषये परवती पराधीना । " परतन्त्रः पराधीनः परवान् " इत्यमरः । " उगितश्च " इति ङीप् । देवीनियोगस्यावश्यानुष्ठेयत्वान्नात्रास्या अपराधो ग्रहीतुं युक्त इति भावः । प्रसीदतु तुष्यतु । एनां मालविकाम् । प्रणिपातयति प्रणमयति ॥

३ अत्र दोहदानुष्ठाने दोहदानुष्ठानस्य राज्ञ्यधीनत्वादिति भावः॥

४ विहस्य स्मित्वा ॥

किसलयेति ॥ हे विलासिनि विलासवति । " अत इनिठनौ "

( मालविका लज्जां नाटयति । )

इरावती—अहो णवणीदकप्पहिअओ अज्जउत्तो ॥ (अहो नवनीतकल्पहृदय आर्यपुत्रः ) ॥ १

मालविका—बउलावलिए ! एहि । अणुचिट्ठिदं अत्तणो णिओअं देवीए णिवेदेह्म ॥ ( बकुलावलिके ! एहि । अनुष्ठितमात्मनो नियोगं देव्यै निवेदयामः ) ॥ २

बकुलावलिका—विण्णवेहि भट्टारं विसज्जेहि त्ति ॥ ( विज्ञापय भर्तारं विसृजेति ) ॥ ३

---

इति मत्वर्थीय इन् । "ऋन्नेभ्यः" इति ङीप् । विलासलक्षणं साहित्यदर्पणे । " यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना ॥ " इति । मालविके कठिने कठोरे पादपस्य वृक्षस्य स्कन्धे मूलमारभ्य शाखावाधिभागः स्कन्धः तत्र औपश्लेषिकाधिकरणे सप्तमी तेन स्कन्धैकदेश इत्यर्थः । निहितस्य न्यस्तस्य किसलयमृदोः पल्लवकोमलस्य ते तव चरणस्य सम्प्रति इदानीं बाधा पीडा न भवतीति शेषः । अत्र काका प्रश्नो बोध्यः । आर्या जातिः ॥ १८ ॥

१ नवनीतकल्पहृदयः नवनीतकल्पं नवनीतादीषन्न्यूनं नवनीतसदृशमित्यर्थः। हृदयं मनो यस्य तथाभूतः। " ईषदसमाप्तौ कल्पब्देश्यदेशीयाः " इति कल्पप् । नवनीतं यथाग्निसंयोगात्प्रद्रवति तथा परपीडयास्य हृदयमित्युपालम्भः ॥

२ नियोगं दोहदपूरणक्रियाम् । अनुष्ठितं कृतम् । निवेदयामः कथयामः । अस्मदोद्वयोश्चेति बहुवचनम् ॥

३ विज्ञापय प्रार्थय । विसृज मुञ्च इति विज्ञापनानुवादसमाप्तौ ॥

राजा—भद्रे ! यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम् ॥ १

बकुलावलिका—अवहिदा सुणाहि । आणवेदु भट्टा ॥ ( अवहिता शृणु । आज्ञापयतु भर्ता ) ॥ २

राजा—

धृतिपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति ।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ १९ ॥

---

१ उत्पन्नावसरं प्राप्तकालम् । अर्थित्वं याचकताम् । प्रार्थनामिति यावत् ॥

२ अवहिता एकाग्रचित्ता सती शृणु इति मालविकामुक्त्वा राजानं प्रत्याह । आज्ञापयत्विति ॥

धृतीति ॥ हे सुन्दरि । यथाऽशोकः पुष्पं न बध्नाति तादृशं तथा अयं तव पुरोवर्ती अग्निमित्ररूपोऽपि जनः । चिरात्प्रभृति बहुकालमारभ्य धृतिपुष्पं धैर्यरूपं पुष्पं न बध्नाति न धारयति । त्वदवाप्त्यभावेन मनसोऽस्वास्थ्यादिति भावः । अतः अनन्यरुचेः अन्या त्वस्पर्शभिन्ना न भवति तथाभूता रुचिरभिलाषो यस्य तथाभूतस्य तव स्पर्शमात्राभिलाषुकस्येत्यर्थः । अस्य अग्निमित्रस्य ममेत्यर्थः । दोहदम् इच्छां स्पर्शामृतेन स्पर्शरूपेणामृतेन करणभूतेन पूरय पूर्णां कुरु । " अथ दोहदम् । इच्छा काङ्क्षा " इत्यमरः । यः पुष्पं न बध्नाति तस्य दोहदपूरणं हि भवत्या व्रतं तेन यथाऽशोकः पुष्पं न धारयति तथाऽहमपि धृतिरूपं पुष्पं न बध्नामीति ममापि दोहदपूरणं भवत्या अवश्यं कर्तव्यमिति भावः । आर्या जातिः ॥ १९ ॥

इरावती—( सहसोपसृत्य ) पूरेहि पूरेहि । असोओ कुसुमं ण दंसेदि । अअं उण पुप्फदि एव्व ॥ ( सर्वे इरावतीं दृष्ट्वा संभ्राताः । ) ( पूरय पूरय । अशोकः कुसुमं न दर्शयती । अयं पुनः पुष्प्यत्येव ) ॥ १

राजा—( अपवार्य ) वयस्य ! का प्रतिपत्तिरत्र ? ॥ २

विदूषकः—किं अण्णं जंघाबलं एव्व ॥ ( किमन्यत् जङ्घाबलमेव ) ॥ ३

इरावती—बउलावलिए ! तुए साहु उवक्कंतम् । दाणिं सफलब्भत्थणं करेहि अज्जउत्तम् ॥ ( बकुलावलिके ! त्वया साधूपक्रान्तम् । इदानीं सफलाभ्यर्थनं कुर्वार्यपुत्रम् ) ॥ ४

उभे—पसीददु भट्टिणी । काओ अम्हो भत्तुणो पणअपरिग्गहस्स ॥ ( इति निष्क्रान्ते । ) ( प्रसीदतु भाट्टिनी । के आवां भर्तुः प्रणयपरिग्रहस्य ) ॥ ५

---

१ सहसा अकस्मात् । उपसृत्य समीपं गत्वा । अयम् अग्निमित्रः पुनः तु पुष्प्यत्येव विकसत्येव । " पुष्प विकसने " इत्यतो दैवादिकाल्लट् । संभ्रान्ताः भीताः । " संभ्रमः साध्वसेऽपि स्यात् " इति मेदिनी ॥

२ प्रतिपत्तिः उपायः ॥

३ जङ्घाबलं गुल्फमारभ्य जानुपर्यन्तश्चरणदेशो जङ्घा तस्याः बलं सामर्थ्यं प्रतिपत्तिरित्यनेन संबन्धः । इदानीं पलायितव्यमिति भावः ॥

४ साधु सम्यक् उपक्रान्तमारब्धम् । आर्यपुत्रं राजानमित्यर्थः। सफलाभ्यर्थनं सफला मालविकालिङ्गनरूपेण फलेन सहिता अभ्यर्थना प्रार्थना यस्य तथाभूतं कुरु । मालविकया सङ्गमयेत्यर्थः ॥

५ भर्तुः राज्ञः । प्रणयपरिग्रहस्य प्रीतिस्वीकारस्य सम्बधिन्यौ

इरावती—अविस्ससणीआ पुरिसा। अत्तणो वंचणवअण पमाणीकरिअ आखित्ताए वाहजणगीदग्गहीदचित्ताए विअ हरिणीए एदं ण विण्णादं मए॥ ( अविश्वसनीयाः पुरुषाः। आत्मनो वञ्चनवचनं प्रमाणीकृत्याक्षिप्तया व्याधजनगीतगृहीतचित्तयेव हरिण्या एतन्न विज्ञातं मया )॥ १

विदूषकः—( जनान्तिकम् ) भो पडिपज्जेहि किं वि उत्तरम्। कम्मग्गहीदेण वि कुंभीलएण संधिच्छेदे सिक्खिओ म्हि त्ति वत्तव्वं होदि॥ ( भो प्रतिपद्यस्व किमप्युत्तरम्। कर्मगृहीतेनापि कुम्भीलकेन सन्धिच्छेदे शिक्षितोऽस्मीति वक्तव्यं भवति )॥ २

---

आवां के। असंबन्धिन्यावावामित्यर्थः। राज्ञः प्रणयपरिग्रहे नास्माकमधिकार इति भावः॥

१ पुरुषा अविश्वसनीया विश्वासानर्हा इति। आत्मनः नायकस्याग्निमित्रस्य वञ्चनवचनं वञ्चनस्य विप्रलम्भस्य यद्वचनं भाषणं चाटूक्तिः। तत् प्रमाणीकृत्य प्रमाणत्वेन स्वीकृत्येत्यर्थः। आक्षिप्तया आवर्जितया "त्वमेव मत्प्रिया त्वदेकावलम्बनोऽहम्" इत्यादिमृषोक्तिभिर्वशीकृतयेत्यर्थः। अत एव व्याधजनगीतिगृहीतचित्तया व्याधजनानां मृगयुलोकानां गीत्या गानेन गृहीतं वशीकृतं चित्तं मनो यस्यास्तथाभूतया हरिण्या मृग्येव मया एतत् "पुरुषा अविश्वसनीयाः" इति न विज्ञातं न ज्ञातम्। हरिणान् व्यापादयितुकामा व्याधा जालं प्रसार्य ततोऽनतिदूर एव मधुरं गायन्ति। तेन गीतप्रिया हरिणास्तदाकर्णयितुं पुरःसरन्तोऽविदितमेव जालं प्रविष्टा व्याधैर्निगृह्य व्यापाद्यन्ते। एवमहमपि वितथाभिर्मधुरोक्तिभिर्वशीभूता इदानीं दुःखमनुभवामीति भावः॥

२ प्रतिपद्यस्व योजयेति यावत्। ननु कर्मैव मेऽनया प्रत्यक्षीकृतं तत्किं मया वक्तव्यमित्याशङ्कां परिहरति। कर्मेति। कर्मगृहीतेनापि कर्मणि चौर्याय गृहभेदे गृहीतेन प्रत्यक्षीकृतेनापि कुम्भीलेन चौरेण

राजा—सुन्दरि ! न मे मालविकया कश्चिदर्थः । मया त्वं चिरयसीति यथाकथंचिदात्मा विनोदितः ॥ १

इरावती—अविस्ससणीओ सि । ण मए विण्णादं ईरिसं विणोदवुत्तंतं अज्जउत्तेण उवलद्धं त्ति अण्णहा दुक्खव्वावारिणी एव्वं ण करेमि ॥ ( अविश्वसनीयोऽसि । न मया विज्ञातमीदृशो विनोदवृत्तान्त आर्यपुत्रेणोपलब्ध इति अन्यथा दुःखव्यापारिणी नैवं करोमि ) ॥ २

विदूषकः—मा दाव अत्तभोदो दक्खिण्णस्स उवरोहं करेहि । समविदिट्ठेण देवीए परिचारिइत्थिआजणेण संकहा वि जइ वारीअदि एत्थ तुमं एव्व पमाणम् ॥ ( मा तावदत्रभवतो दाक्षिण्यस्योपरोधं कुरु । समीपदृष्टेन देव्याः परिचारिस्त्रीजनेन संकथापि यदि वार्यते अत्र त्वमेव प्रमाणम् ) ॥ ३

---

कर्त्री। "चौरः शङ्कितवर्णकः। स्यात्कुम्भीलश्च" इति त्रिकाण्डशेषः। सन्धिच्छेदे सन्धये सुरङ्गार्थं च्छेदे भित्त्यादीनां भेदे शिक्षितः कृताभ्यासोऽस्मि इति वक्तव्यं भवति । नाहं चौर्यकारी किंतु सुरङ्गाकरणस्यायं मयाऽभ्यासः क्रियते इति यथा चौरः स्वक्रियामन्यथापयति तथा त्वमपि कुर्या इति भावः । "सन्धिः सुरुङ्गा तद्भेदा" इति त्रिकाण्डशेषः ॥

१ कश्चिदर्थः किमपि प्रयोजनम् । चिरयसि विलम्बं करोषि इति हेतोः । आत्मा मनः विनोदितः विनोदं प्रापितः । "आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि ।" इति मेदिनी ॥

२ अन्यथा विनोदवृत्तान्तज्ञाने । दुःखव्यापारिणी दुःखः प्रिया विघटकत्वाद्दुःखकरो व्यापारः कर्म अत्रागमनरूपं यस्यास्तथाभूता । एवम् अत्रागमनेन मालविकाविघ्नसदृशामित्यर्थः । आक्षेपोऽयम् ॥

३ अत्रभवतो राज्ञः दाक्षिण्यस्य येन केनापि परिचितेन संभा-

इरावती—णं संकहा णाम होदु किं त्ति अत्ताणं आआसइस्सम् ॥ ( इति रुष्टा प्रस्थिता । ) ( ननु संकथा नाम भवतु किमित्यात्मानमायासयिष्यामि ) ॥

राजा—( अनुसरन् ) प्रसीदतु भवती । ( इरावती रसनासन्दानितचरणा व्रजत्येव ) ॥ १

राजा—सुन्दरि ! न शोभते प्रणयिजने निरपेक्षता ॥ २

इरावती—सठ ! अविस्ससणीओ सि ॥ ( शठ ! अविश्वसनीयोऽसि ) ॥ ३

---

षणरूपस्य सारल्यस्य उपरोधं निरोधं भङ्गमित्यर्थः । मा कुरु । तावदिति वाक्यालङ्कारे । समीपदृष्टेन स्वसमीपे विलोकितेन देव्याः पट्टराज्ञ्या धारिण्याः परिचारिस्त्रीजनेन परिचारिणा सेवकेन स्त्रीजनेन सह संकथाऽपि संभाषणमपि केवलं संलापोऽपीत्यपिशब्दार्थः । वार्येत निषिध्येत त्वयेति शेषः । तदा अत्र संकथाप्रतिषेधविषये त्वमेव प्रमाणम् । प्रमात्री ज्ञानवत्तया नियामिकेत्यर्थः । "क्लीबैकत्वे प्रमातरि" इति प्रमाणशब्दार्थेषु मेदिनी । योऽयं मालविकया संलापस्तद्दाक्षिण्यमात्रं न तु कश्चिदन्योऽत्राभिप्राय इति नार्हसि कोपं कर्तुमिति भावः ॥

१ रसनासन्दानितचरणा रसनया काञ्च्या सन्दानितौ बद्धौ चरणौ यस्यास्तथाभूता सत्यपि । क्रोधव्यतिकरे मध्यात्परिभ्रष्टया काञ्च्या स्वयमेव बद्धचरणापि व्रजति गच्छति । "काञ्ची सप्तकी रशना तथा" इत्यमरः । "रशना दन्त्यमध्यापि" इति महेश्वरः । "बद्धे सन्दानितं मूतम्" इत्यमरः ॥

२ प्रणयिजने प्रणयिन्यनुरागवति जने मय्यग्निमित्रविषये निरपेक्षता अपेक्षाशून्यत्वं न शोभते तवेति शेषः ॥

३ शठ धूर्त । शठलक्षणं साहित्यदर्पणे । "शठोऽयमेकत्र बद्धभावो यः । दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति॥" इति॥

राजा—

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ।
चरणपतितया न चण्डि तां
विसृजसि मेखलयाऽपि याचिता ॥ २० ॥

इरावती—इअं वि हदासा तुमं एव्व अणुसरदि॥ (इति रशनामादाय राजानं ताडयितुमिच्छति ।) ( इयमपि हताशा त्वामेवानुसरति ) ॥ १

राजा—वयस्य ! एषेरावती ॥

---

शठ इति ॥ हे प्रिये मयि मद्विषयिणी तावदिति तु इत्यस्यार्थे । शठो धूर्त इतिरूपा परिचयवती भूयःप्रयोगाज्जातपरिचया अवधीरणा तिरस्कारवाक् अस्तु । परं हे चण्डि अत्यन्तकोपने । "चण्डस्त्वत्यन्तकोपन" इत्यमरः । चरणपतितया चरणयोः स्थले स्खलितया कृतप्रणामया च मेखलया काञ्च्या कञ्च्यापि निश्चेतनयापि मद्दुःखदर्शनात्सकरुणयेत्यपेः स्वारस्यम् । याचिता प्रसादार्थं प्रार्थिता त्वं ताम् अवधीरणां न विसृजसि न त्यजसि । सखीप्रार्थनया कोपत्यागस्योचितत्वेऽपि रशनयापि प्रार्थिता यत्त्वं कोपं न जहासि तदेतदयुक्तमिति भावः । "स्त्रीकट्यां मेखला काञ्ची" इत्यमरः । अत्र मेखलाया निश्चेतनत्वेन प्रणामाभ्यर्थनाऽसंबन्धेऽपि संबन्धाभिधानादतिशयोक्तिरलङ्कारः । अत्र केचित् परिचयवति मयि ' इत्यपि योजयन्ति तेन सभङ्गश्लेषः शाब्दोऽलङ्कारः । अपरवक्त्रं वृत्तम् । "अयुजि ननरला गुरुः समे तदपरवक्त्रमिदं नजौ जरौ।" इति लक्षणात् ॥ २० ॥

१ हताशा दुष्टा इयं रशना ॥

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ २१ ॥

**इरावती**—किं मं एव्व भूओ वि अवरद्धं करेसि ॥ ( किं मामेव भूयोऽप्यपराद्धां करोषि ) ॥ १

**राजा**—( सरशनं हस्तमवलम्बयति । )

अपराधिनि मयि दण्डं संहरसि समुद्यतं कुटिलकेशि ।
वर्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च॥२२॥

---

**बाष्पेति** ॥ बाष्पासारा बाष्पाण्यश्रूण्येव आसारो धारासम्पातो यस्यास्तथाभूता एषा चण्डी कोपना इरावती कर्त्री । श्रोणीबिम्बात् नितम्बमण्डलात् उपेक्षाच्युतेन उपेक्षया आत्मनोऽनवधानादनादरेण हेतुना च्युतेन । स्खलितेन हेमकाञ्चीगुणेन सुवर्णमय्या रशनायास्तन्तुना चण्डं परुषमिति यावत् । मां मेघराजी मेघानां लेखा कर्त्री विद्युद्दाम्ना विद्युद्रूपेण दाम्ना रज्जुना करणभूतेन विन्ध्यं पर्वतविशेषमिव हन्तुं ताडयितुमुद्यता प्रवृत्ता । " चण्डी कात्यायिनी देव्यां हिंस्रकोपनयोषितोः। " इति मेदिनी । बिम्बानुबिम्बभावेनोपमा । शालिनी वृत्तम् ॥ २१ ॥

१ भूयोऽपि पुनरपि । अपराद्धां कृतापराधां करोषि । मय्येव अपराधमारोपयसीत्यर्थः ॥

**अपराधिनीति** ॥ हे कुटिलकेशि वक्रकेशि इरावति । अपराधिनि सापराधे मयि उद्यतं प्रहरणेच्छया उन्नमितं दण्डं रशनारूपं संहरसि समापयसि । किंच विलसितं विलासं मद्दर्शनात्स्वनयनविक्षेपादिषु विशेषं वर्धयसि पुष्णासि । " यानस्थानासनादीनां मुखनेत्रादिकर्मणाम् । विशेषस्तु विलासः स्यादिष्टसंदर्शनादिना ॥" इति । विलासलक्षणं दर्पणे । अत्र वर्तमानाय दासजनाय सेवकस-

नूनमिदमनुज्ञातम् ॥ ( इति पादयोः पतति । )

इरावती—ण खु इमे मालविआचलणा जा दे हरिसदोहलं पूरइस्संदि ॥ ( न खल्विमौ मालविकाचरणौ यौ ते हर्षदोहदं पूरयतः ) ॥ १

( इति निष्क्रान्ता सह चेटचा । )

विदूषकः—उठ्ठहि अकिदप्पसादो सि ॥ ( उत्तिष्ठ अकृतप्रसादोऽसि ) ॥ २

राजा—( उत्थायेरावतीमपश्यन् ) तत्कथं गतैव प्रिया ?॥ ३

विदूषकः—वअस्स ! दिठ्ठिआ इमस्स अविणअस्स अप्पसण्णा गदा एसा । ता वअं सिग्घं अवक्कमाम । जाव अंगारओ राशिं विअ अणुवंकं पडिगमणं ण करेदि ॥ ( वयस्य ! दिष्टयाऽनेनाविनयेनाप्रसन्ना गतैषा । तद्वयं शीघ्रमपक्रमामः । यावदङ्गारको राशिमिवानुवक्रं प्रतिगमनं न करोति ) ॥ ४

---

हशाय मह्यं कुप्यसि क्रुध्यसि च । "क्रुधद्रुह" इति चतुर्थी । एतच्च वस्तुतः कोपमयमपि किलकिञ्चितत्वेन परिणमय्याह नूनमिति। इदं कोपादिकमेव अनुज्ञातं सङ्गमायानुज्ञातं भवत्या इति शेषः । एतस्य किल किंचितत्वादिति भावः । "स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनाम् । सांकर्यं किल किंचितमभीष्टतमसङ्गमादिजाद्धर्षात् ॥" इति किलकिंचितलक्षणं प्राह विश्वनाथः॥२२॥

१ हर्षदोहदं हर्षं हर्षहेतुं दोहदम् इच्छाम् । एतावता रोषेण ताडनात्परुषवचनाच्चेरावत्या अधीरात्वं स्फुटीभवति । तदुक्तम् । "प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा दहेद्रुषा । धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ॥" इति । "तर्जयेत्ताडयेदन्या (अधीरा)"इति च ॥

२ अकृतप्रसादः अकृतानुग्रहः तयेति शेषः ॥

३ तत् तर्हि कथं किं गतैव प्रिया ॥

४ दिष्टयेति हर्षे । तस्या गमनेन मे हर्ष इति भावः । अप्रसन्ना

राजा—अहो मदनस्य वैषम्यम् ॥ १

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं हि प्रणयवती सा शक्यमुपेक्षितुं कुपिता ॥ २३ ॥

( इति निष्क्रान्तः सह वयस्येन । )

## इति तृतीयोऽङ्कः ।

---

असन्तुष्टा । शीघ्रं सत्वरं यथा तथा अपक्रमामः गच्छामः । यावत् अङ्गारको भौमः पापग्रह इति यावत् इव अनुवक्रं वक्रस्य वक्रभावस्य पश्चात् । पश्चादर्थेऽव्ययीभावः। राशिं मेषादिष्वन्यतमं प्रति प्रतिगमनं संक्रमणं प्रतिनिवृत्तिं च न करोति । यथा कंचित्कालं वक्रगत्या राश्यन्तरं संक्रान्तः पापग्रहो वक्रीभावावसाने पुनर्भुक्तपूर्वं राशिमुपेत्य पीडयति तथेयमप्यप्रसादापक्रान्ता यावदत्रैव नागच्छति तावदपक्रमाम इति भावः ॥

१ मदनस्य वैषम्यं विषमता । प्रतीपत्वमिति यावत् ॥

मन्ये इति ॥ प्रियाहृतमनाः प्रियया मालविकयाऽहृतं मनो यस्य तथाभूतोऽहं तस्या इरावत्याः कर्तरि षष्ठी । इरावतीकर्तृकं प्रणिपातलङ्घनं मत्कृतप्रणयातिक्रमं सेवामनुकूलाचरणं मन्ये । सेवायाः फलमाह । हि यतः प्रणयवती प्रेमयुक्ता सा इरावती कुपिता क्रुद्धापि एवम् अनेन सेवनप्रकारेण उपेक्षितुम् उपेक्षां कर्तुं शक्यं शक्या । शक्यमिति निपात इति काटयवेमः । प्रणिपातलङ्घनं निमित्तीकृत्य तस्यामुपेक्षा कर्तुं शक्येतेत्यर्थः । मालविकायामासक्तत्वाच्च राज्ञ इरावत्युपेक्षणमावश्यकं तच्च तया प्रणामं लङ्घयित्वा स्वयमेव सम्पादितमिति ममेदमनुकूलमेवेति भावः ॥ २३ ॥

इति श्रीमदप्पाशर्मणा विरचितायां मालविकाऽग्निमित्रव्याख्यायां बालबोधिन्याख्यायां तृतीयोऽङ्कः ।

# अथ चतुर्थोऽङ्कः ।

( ततः प्रविशति पर्युत्सुको राजा प्रतिहारी च । ) १

**राजा**—( आत्मगतम् )

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
संप्राप्तायां नयनविषयं रूढरागप्रवालः ।
हस्तस्पर्शैः कुसुमित इव व्यक्तरोमोद्गमत्वात्
कुर्यात्कान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥ १ ॥

( प्रकाशम् ) सखे गौतम ! ॥

---

१ पर्युत्सुक उत्कण्ठितः । प्रतिहारी द्वाररक्षिका स्त्री ॥

तामिति ॥ श्रुतिपथगतां श्रवणमार्गवर्तिनीं श्रूयमाणाम् । तां मालविकामाश्रित्य अवलम्ब्य आशया तत्प्राप्त्यभिलाषेण बद्धमूलः रूढमूलः । उत्पन्न इति यावत् । तस्यां मालविकायामिति विभक्तिविपरिणामेन संबन्धः। नयनविषयं नेत्रगोचरं प्राप्तायां सत्यां दृष्टायां सत्यामित्यर्थः । रूढरागप्रवालः रूढानि उद्भिन्नानि रागरूपाणि प्रीतिरूपाणि प्रवालानि किसलयानि यत्र तथाभूतः । " प्रवालोऽस्त्री किसलयः " इति मेदिनी। मालविकादर्शनेन विस्तीर्ण इत्यर्थः। तस्या इति विभक्तिविपरिणामेन संबन्धः । तस्याः मालविकायाः हस्तस्पर्शैः करणभूतैः व्यक्तरोमोद्गमत्वात् । रोम्णां कचानामुद्गम उत्पत्तिस्थानं पुलकाः रोमोद्गमाः व्यक्ता स्पष्टीभूताः रोमोद्गमाः पुलका यत्र तथाभूतत्वात् पुलकितत्वादित्यर्थः । कुसुमितः सञ्जातकुसुम इव वर्तमानः । तारकादित्वादितच् । मनसिजतरुः मदनरूपो वृक्षः मामग्निमित्रं प्रति फलस्य मालविकाप्राप्तिरूपस्य कान्तं सुन्दरं रसज्ञम् आस्वादवेत्तारं कुर्यात् करोतु । आशिषि संभावनायां वा लिङ् । अत्र मूलरोहणप्रवालोद्भेदादीनां लोकप्रसिद्धेनैव क्रमेणाभि-

प्रतिहारी—जेदु जेदु भट्टा। असण्णिहिदो गोदमो ॥ (जयतु जयतु भर्ता। असन्निहितो गौतमः )॥ १

राजा—( आत्मगतम् ) आं ! मालविकावृत्तान्तज्ञानाय मया प्रेषितः ॥ २

विदूषकः—( प्रविश्य ) जेदु जेदु भवम् ॥ ( जयतु जयतु भवान् ) ॥

राजा—जयसेने ! जानीहि तावत्क देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ॥ ३

प्रतिहारी—जं देवो आणवेदि ॥ ( इति निष्क्रान्ता। ) ( यद्देव आज्ञापयति ) ॥ ४

राजा—गौतम ! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः? ॥ ५

विदूषकः—जो विडालगिहीदाए परहुदिआए ॥ ( यो बिडालगृहीतायाः परभृतिकायाः ) ॥ ६

---

धानाद्रत्नावल्यलङ्कारः। " क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः। " इति लक्षणात्। मन्दाक्रान्ता वृत्तम् ॥ १ ॥

१ जयतु उत्कृष्यताम्। असन्निहितः असमीपवर्ती ॥

२ आं स्मरणे। वृत्तान्तो वार्ता ॥

३ जयसेनेति प्रतिहार्या नाम। तावत् यावदावामत्रस्थौ तावत्कालमित्यर्थः। देवी धारिणी सरुजचरणत्वात् रोगयुक्तपादत्वात् हेतोः। विनोद्यते कथादिश्रवणादिभिः अपेतदुःखा क्रियत इत्यर्थः। परिजनैरिति शेषः ॥

४ देवो राजा " राजा स्वामीति देवेति भृत्यैः " इति नाट्योक्तिषु विश्वनाथः ॥

५ ते तव सख्या मालविकायाः को वृत्तान्तः का वार्ता ॥

६ बिडालगृहीतायाः बिडालेन मार्जारेण गृहीताया आक्रा-

राजा-( सविषादम् ) कथमिव ? ॥

विदूषकः-सा खु तवस्सिणी तए पिंगलच्छीए सारभंडभूघरए गुहाए विअ णिक्खित्ता ॥ (सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डभूगृहे गुहायामिव निक्षिप्ता ) ॥ १

राजा-ननु मत्सम्पर्कमुपलभ्य ? ॥ २

विदूषकः-अह इम् ॥ ( अथ किम् ) ॥

राजा-क एवं विमुखोऽस्माकम् । येन चण्डीकृता देवी॥ ३

विदूषकः-सुणादु भवं । परिव्वाजिआए मे कहिदम्। हिओ किल तत्तहोदी इरावदी रुजक्कंतचलणं देवीं सुहं पुच्छिदुं आअदा ॥ ( श्रृणोतु भवान् । परिव्राजिकया मे कथितम् । ह्यः किल तत्रभवतीरावती रुजाक्रान्तचरणां देवीं सुखं प्रष्टुमागता ) ॥ ४

न्तायाः । " ओतुर्बिडालो मार्जारः " इत्यमरः । परभृतिकायाः कोकिलायाः यः वृत्तान्तः स एव मालविकाया इत्यर्थः । दुःखमयो वृत्तान्त इत्यर्थः । परभृतशब्दात्स्वार्थे कप्रत्ययेऽजादित्वाट्टापि च " प्रत्ययस्थात्कात् " इत्यत इत्वम् । " वनप्रियः परभृतः कोकिलः पिक इत्यपि । " इत्यमरः ॥

१ तपस्विन्यनुकम्पार्हा मालविका । पिङ्गलाक्ष्येति गालिः । धारिण्या । सारभाण्डभूगृहे सारभाण्डानाम् उत्कृष्टभाण्डानां भूगृहे निक्षिप्ता स्थापिता । यत्र साराणि भाण्डानि निधीयन्ते तत्र भूगृहे मालविका स्थापितेत्यर्थः ॥

२ मत्सम्पर्कं मम सम्बन्धम् उपलभ्य ज्ञात्वा ॥

३ विमुखः पराङ्मुखो विरुद्ध इत्यर्थः । चण्डीकृता कोपिता । देवी धारिणी ॥

४ परिव्राजिकया संन्यासिन्या कौशिक्या कर्त्र्या । मे मह्यं

१ ' तळघर ' इति भाषायाम् ।

राजा—ततस्ततः ॥

विदूषकः—तदो सा देवीए पुच्छिदा । किं णु ओलोइदो वल्लहजणो त्ति । ताए उत्तं । मंदो वो उवआरो जं परिजणे संकंतं वल्लहत्तणं ण जाणीअदि ॥ (ततः सा देव्या पृष्टा किं न्ववलोकितो वल्लभजन इति । तयोक्तम् । मन्दो व उपचारो यत्परिजने संक्रान्तं वल्लभत्वं न ज्ञायते) ॥ १

राजा—अहो निर्भेदादृतेऽपि मालविकायामयमुपन्यासः शङ्कयति ॥ २

---

कर्मत्वेनाविवक्षायां चतुर्थी । ह्यः गतेऽहनि । इरावती कर्त्री । रुजाक्रान्तचरणां रुजया रोगेणाक्रान्तोऽभिभूतश्चरणो यस्यास्तां देवीं धारिणीं प्रति सुखमनामयं प्रष्टुमिति दुहादित्वादकथितं चेति गौणे कर्मणि द्वितीया ॥

१ किन्नु इति प्रश्ने । वल्लभजनः प्रियजनो राजेत्यर्थः । आलोकितो दृष्टः । तया इरावत्या । मन्दः असङ्गतो रिक्त इत्यर्थः । उपचारः आचारवाणी । परिजने सेवके । संक्रान्तं सङ्गतं मालविकां प्राप्तमित्यर्थः । वल्लभत्वं प्रियत्वं न ज्ञायते । तेनान्यत्रासक्तो वल्लभो द्रष्टुमशक्य इति भावः ॥

२ निर्भेदात् स्पष्टीकरणात् " अन्यारादितरर्ते " इति पञ्चमी । ऋते विना । अयम् उक्तपूर्वः उपन्यासो वागारम्भः । " उपन्यासस्तु वाङ्मुखम् " इत्यमरः । मालविकायां विषये शङ्कयति शङ्कां करोति । उत्पादयतीत्यर्थः । देव्याः परिजने मालविकाया एव लावण्यातिशयेन सैव राज्ञो वल्लभा भवेदिति शङ्का उत्पद्यत इति भावः ॥

विदूषकः—तदो ताए अणुबंधिज्जमाणाए भवदो अविणअं अन्तरेण परिगदत्था किदा देवी ॥ ( ततस्तयाऽनुबन्ध्यमानया भवतोऽविनयमन्तरेण परिगतार्था कृता देवी ) ॥ १

राजा—अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय॥ २

विदूषकः—किं अवरम् । मालविआ बउलावलिआ अ णिगलपदीओ पाआलवासं अदिट्ठसुज्जपाआ णागकण्णआ विअ अणुहवंति ॥ ( किमपरम् । मालविका बकुलावलिका च निगडपद्यौ पातालवासमदृष्टसूर्यपादे नागकन्यके इवानुभवतः)॥ ३

राजा—कष्टं कष्टम् ॥ ४

---

१ ततः तदनन्तरम् अनुबन्ध्यमानया साग्रहं पृच्छ्यमानया तयेरावत्या भवतः तव अविनयमन्तरेण मालविकोपसर्पणरूपमविनयविषये परिगतार्था विदितवृत्तान्ता कृता देवी । " अन्तरान्तरेण " इति द्वितीया ॥

२ तत्रभवत्या इरावत्याः दीर्घरोषता दीर्घश्चिरकालवर्ती कोपः क्रोधो यस्यास्तद्भावः ॥

३ किमपरं किमन्यत् । मालविका बकुलावलिका चेत्युभे कन्ये निगडपद्यौ निगडः बन्धः पदयोर्ययोस्तथाभूते सत्यौ । "स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् " इति ङीष् । अदृष्टसूर्यपादे न दृष्टाः सूर्यपादाः सूर्यकिरणा याभ्यां तथाभूते नागकन्यके सर्पकन्यके इव । पातालवासं पाताले भूसम्पुटिते लोकविशेषे वासं स्थितिं पातालसदृशे भूगृहे वासं च ॥

४ कष्टं दुःखकरमुपस्थितमिति शेषः ॥

---

१ ' बिडी ' इति भाषायाम् ।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते ॥ २ ॥

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात् ॥ १

विदूषकः—कहं बहिस्सदि । जं सारभांडगिहव्वावारिदा माहविआ देवीए संदिट्ठा । " मह अंगुलीअमुद्दिअं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ अ " त्ति ॥ ( कथं भविष्यति । यत्सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा । " ममाङ्गुलीमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका च " इति ) ॥ २

---

मधुरेति ॥ मधुरस्वरा मधुरः स्वरो यस्यास्तथाभूता परभृता कोकिला । अजादित्वाट्टाप् । भ्रमरी च भृङ्गी च । " जातेरस्त्रीविषयात् " इति ङीष् । इत्युभे विबुद्धचूतसङ्गिन्यौ विबुद्धे विकसिते चूत आम्रे सङ्गिन्यावनुरक्ते सत्यौ । प्रबलपुरोवातया प्रबलः वेगातिशयवान् पुरोवातः अग्रगामी वायुर्यस्यास्तया अकालवृष्ट्या कर्त्र्या कोटरं नीडं गमिते निवेशिते । गम्‌धातोर्णिजन्तात् क्तः । अत्र अप्रस्तुतेन भ्रमरीपरभृतयोर्नीडप्रवेशवृत्तान्तेन प्रस्तुतमालविकाबकुलावलिकयोर्निरोधस्य गम्यमानत्वादप्रस्तुतप्रशंसाऽलंकारः । तदुक्तम् । " अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यात् " इति । आर्या जातिः ॥ २ ॥

१ उपक्रमस्य उपायारम्भस्य गतिः प्रवेशः प्रवृत्तिरिति यावत् ॥

२ सारभाण्डगृहे उत्कृष्टभाण्डानामागारे । व्यापारिता नियुक्ता । माधविकेति दास्या नाम । देव्या धारिण्या संदिष्टा आज्ञप्ता । ममेत्यादिराज्ञाया अनुवादः । अङ्गुलीयमुद्रिकाम् अङ्गुलीभूषणरूपं चिह्नम् अदृष्ट्वा । हताशा दुरभिलाषवती । राजानं कामयमानेत्यर्थः । इति संदिष्टेति संबन्धः ॥

**राजा**—( निःश्वस्य सपरामर्शम् ) सखे ! किमत्र कर्तव्यम् ? १

**विदूषकः**—( विचिन्त्य ) अत्थि एत्थ उवाओ ॥ (अस्त्यत्रोपायः ) ॥

**राजा**—क इव ॥ २

**विदूषकः**—( सदृष्टिक्षेपम ) को वि अदिट्ठो सुणिस्सदि कण्णे दे कहेमि । ( उपश्लिष्य ) एव्वं विअ (इत्यावेदयति)॥ (कोऽप्यदृष्टः श्रोष्यति कर्णे ते कथयामि । एवमिव ) ॥ ३

**राजा**—( सहर्षम् ) सुष्ठु । प्रयुज्यतां सिद्धये ॥ ४

---

१ सपरामर्शं परामर्शेन चिन्तया सहितं यथा तथा । अत्र मालविकामोचनविषये ॥

२ क इव कीदृशः ॥

३ सदृष्टिक्षेपम् इतस्ततो दृष्टिविक्षेपेण सहितं यथा तथा । कोऽपि शृणोति वा रहस्यमस्माकमित्यालोचनार्थं दृष्टिक्षेपः । अदृष्टः गूढमुपस्थितः शृणोति श्रोष्यति । वर्तमानसामीप्ये लट् । उपश्लिष्य समीपं गत्वा । कर्णे कथनार्थमुपश्लेषः । एवमिवेति ईदृश उपाय इत्यर्थः । मम सर्पदंशवेदनावलोकेन व्याकुलाया देव्याः सकाशान्नागमुद्राविधानमिषेणाङ्गुलीयकमादाय मालविकां मोचयिष्यामीति कर्णे कथितम् । इदं चानुपदमेव स्पष्टीभविष्यति ॥

४ सुष्ठु प्रशंसायाम् । प्रशस्या युक्तिरित्यर्थः । सिद्धये मालविकामोचनरूपस्य कार्यस्य निष्पादनाय प्रयुज्यतां योज्यताम् । उपाय इति शेषः ॥

प्रतिहारी–( प्रविश्य ) देव! पवादसअणीए देवी निसण्णा रत्तचंदनधारिणा परिअणहत्थगदेण चलणेण भअवदीए कहाहिं विणोदीअमाणा चिट्ठदि ॥ ( देव! प्रवातशयनीये देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या कथाभिर्विनोद्यमाना तिष्ठति ) ॥ १

राजा–तस्मादस्मत्प्रयाणयोग्योऽयमवसरः ॥ २

विदूषकः–भो गच्छदु भवम् । अहं वि देवीं पेक्खिदुं अरित्तपाणी हुविस्सं ॥ ( भो गच्छतु भवान् । अहमपि देवीं प्रेक्षितुमरिक्तपाणिर्भविष्यामि ) ॥ ३

राजा–जयसेनायास्तावदस्मद्रहस्यं विदितं कुरु ॥ ४

---

१ प्रवातशयने प्रकृष्टो वातो वायुर्यत्र तत्स्थानं प्रवातं तत्र वर्तमाने शयनीये शय्यायाम् । " शय्यायां शयनीयवत् " इत्यमरः । निषण्णा उपविष्टा । निपूर्वात्सीदतेर्निष्ठायां " रदाभ्याम् " इति निष्ठानत्वे " सदिरप्रतेः " इति षत्वे च " अट्कुप्वाङ् " इति णत्वं तद्योगे चान्यस्य । रक्तचन्दनधारिणा तापापनोदाय निषिक्तं रक्तचन्दनं धारयति तथाभूतेन परिजनहस्तगतेन सेवकहस्तनिहितेन चरणेनोपलक्षिता । भगवत्या कौशिक्या कर्त्र्या कथाभिर्गोष्ठीभिः करणभूताभिः विनोद्यमाना ॥

२ अस्मत्प्रयाणयोग्यः अस्माकं प्रयाणे गमने योग्यः । अवसरः समयः ॥

३ अरिक्तपाणिः रिक्तः फलादिशून्यः पाणिर्यस्य तथा न भवति तथाभूतः । किमपि फलं करे गृहीत्वाऽऽगच्छामीत्यर्थः । " रिक्तपाणिर्न चेक्षेत राजानं देवतां गुरुम् । " इत्युक्तेः ॥

४ अस्मद्रहस्यं रहसि एकान्ते भवं वृत्तं रहस्यं गोपनीयं वृत्तम् ।

विदूषकः—तह । ( कर्णे ) एव्वं विअ होदि ॥ ( इति निष्क्रान्तः ) ॥ ( तथा । एवमिव भवति ) ॥ १

राजा—जयसेने ! प्रवातशयनमार्गमादेशय ॥ २

प्रतिहारी—इदो इदो देवो ॥ ( इत इतो देवः ) ॥

( ततः प्रविशति शयनस्था देवी परिव्राजिका विभवतश्च परिवारः । )

देवी—भअवदि ! रमणीआ कहा । तदो तदो ॥ ( भगवति ! रमणीया कथा । ततस्ततः ) ॥

परिव्राजिका—( सदृष्टिक्षेपम् ) अतः परं पुनः कथयिष्यामि अत्रभवान्विदिशेश्वरः संप्राप्तः ॥ ३

देवी—अम्मो भट्टा ॥ ( इत्युत्थातुमिच्छति ।)॥( अहो भर्ता )

राजा—अलमलमुपचारयन्त्रणया ॥ ४

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।
चरणं रुजापरीतं कलभाषिणि मां च पीडयितुम् ॥३॥

" रहश्चोपांशु चालिङ्गे रहस्यं तद्भवे त्रिषु । " इत्यमरः । अस्मन्मन्त्रं जयसेनां कथयेत्यर्थः । विदितं ज्ञातम् ॥

१ एवमिव ईदृशमस्मद्रहस्यं भवति अस्ति ॥

२ प्रवातशयनमार्गं प्रवातशयनस्य देव्यधिष्ठितायाः शय्यायाः मार्गम् आदेशय कथय ॥

३ सदृष्टिक्षेपम् इतस्ततो दृष्टिं विक्षिप्येत्यर्थः । अतः कथितात् कथांशात् परम् अग्रे । पुनः राज्ञः प्रतिगमनानन्तरम् । अत्र हेतुः। अत्रभवानिति । अत्रभवान् पूज्यः विदिशेश्वरः अग्निमित्रः ॥

४ उपचारयन्त्रणया उपचाररूपया सेवनरूपया यन्त्रणया क्लेशेनेत्यर्थः । अलंयोगे तृतीया ॥

अनुचितेति ॥ हे कलभाषिणि कलं सुन्दरं भाषणं यस्यास्त-

धारिणी—जेदु जेदु अज्जउत्तो ॥ ( जयतु जयत्वार्यपुत्रः)॥

परिव्राजिका—विजयतां देवः ॥

राजा—( परिव्राजिकां प्रणम्योपविश्य ) देवि ! अपि सह्या वेदना ? ॥ १

धारिणी—अत्थि मे विसेसो ॥ ( अस्ति मे विशेषः ) ॥ २

( ततः प्रविशति यज्ञोपवीतसंवीताङ्गुष्ठः संभ्रान्तो विदूषकः । ) ३

---

थाभूते धारिणि । अनुचितनूपुरविरहम् अनुचितः नूपुरस्य तुलाकोटेः[१] विरहो यस्य तथाभूतम् । तपनीयपीठिकालम्बि तपनीयस्य सुवर्णस्य पीठिकां लघुपीठम् अल्पार्थे कन् आलम्बते आश्रयति तथाभूतम् । सुवर्णमय्यां पीठिकायां निहितमित्यर्थः। रुजापरीतं रुजया रोगेण परीतं व्याप्तं चरणम् आत्मनः पदं मामग्निमित्रं च पीडयितुं नार्हसि न योग्या भवसि । तवोत्थानेन चरणस्य पीडा तामवलोकयतश्च ममापीति नोत्तिष्ठेति भावः । अत्र प्रस्तुतयोः चरणाग्निमित्रयोरेकपीडनक्रियासम्बन्धात्तुल्ययोगिता । अग्निमित्रपीडायां च चरणं रुजापरीतमिति वाक्यार्थस्य हेतुत्वात्काव्यलिङ्गमित्यनयोरङ्गाङ्गिभावेन सङ्करः । " पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसंबन्धः स्यात्तदा तुल्ययोगिता ॥" इति दर्पणे । आर्या जातिः ॥ ३ ॥

१ अपीति प्रश्ने । वेदना चरणरोगस्य दुःखं सह्या सहनयोग्या अस्तीति शेषः । " वेदना ज्ञानदुःखयोः " इति मेदिनी ॥

२ विशेषः आधिक्यम् ॥

३ यज्ञोपवीतसंवीताङ्गुष्ठः यज्ञोपवीतेन यज्ञसूत्रेण[२] संवीतो विषवेगप्रतिरोधाय वेष्टितोऽङ्गुष्ठो येन तथाभूतः । " वेष्टितं स्याद्वलयितं संवीतम् " इत्यमरः । संभ्रान्तः सत्वरः ॥

---

१ ' पैजण ' इति भाषायाम् । २ ' जानवे ' इति भाषायाम् ।

विदूषकः—परित्ताअदु परित्ताअदु भवम् । सप्पेण ह्मि दट्ठो ॥ ( सर्वे विषण्णाः । ) ( परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः ) ॥ १

राजा—कष्टं कष्टम् । क्व भवान् परिभ्रान्तः ? ॥ २

विदूषकः—देवीं देक्खिस्सं त्ति आआरपुप्फकारणादो पमदवणं गदो ह्मि ॥ ( देवीं द्रक्ष्यामित्याचारपुष्पकारणात्प्रमदवनं गतोऽस्मि ) ॥ ३

धारिणी—हद्धी हद्धी । अहं एव्व जीविदसंसअणिमित्तं जादा बह्मणस्स ॥ ( हा धिक् हा धिक् ! अहमेव जीवितसंशयनिमित्तं जाता ब्राह्मणस्य ) ॥ ४

---

१ परित्रायतां रक्षतु अस्माद्दुःखादिति शेषः । दष्टः कृतदंशः । दन्तैर्भेदनं दंशः । " दंश दशने " इत्यतो निष्ठायां क्तिन्त्यनलोपे " व्रश्चभ्रस्ज " इति शान्तत्वात्षत्वे ष्टुत्वे च रूपं दष्ट इति । सर्पेण कर्त्रा । विषण्णाः खिन्नाः ॥

२ परिभ्रान्तः पर्यटितः ॥

३ देवीं धारिणीम् । इति हेतोः । आचारपुष्पकारणात् आचारार्थम् अरिक्तपाणिना देवी न द्रष्टव्येति य आचारस्तदर्थं यत्पुष्पं तस्य कारणात् हेतोः । प्रमदवनं राज्ञोऽन्तःपुरोचितमुद्यानम् ॥

४ ब्राह्मणस्येति दयनीयता ध्वन्यते । जीवितसंशयनिमित्तं जीवितस्य जीवनस्य संशये जीवेन्न वेति रूपः संदेहो यस्मात्तत्र दंश इत्यर्थः । निमित्तं कारणम् । नित्यक्लीबत्वाद्विशेषणता ॥

**विदूषकः**—तहिं असोअत्थपुप्फकारणादो पसारिदो दक्खिणहत्थो । तदो कोडरविणिग्गदेण सप्परूपिणा कालेण दंसिदो म्हि । णं ऐदाणि दुवे दंसणपदाणि । ( इति दर्शयति )॥ ( तत्राशोकस्थपुष्पकारणात्प्रसारितो दक्षिणहस्तः । ततः कोटरविनिर्गतेन सर्परूपिणा कालेन दष्टोऽस्मि । नन्वेते द्वे दंशनपदे) ॥ १

**परिव्राजिका**—छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥ ४ ॥

**राजा**—संप्रति विषवैद्यानां कर्म । जयसेने ! ध्रुवसिद्धिः क्षिप्रमानीयताम् ॥ २

---

१तत्र प्रमदवने अशोकस्थपुष्पकारणात् अशोकवृक्षे वर्तमानस्य पुष्पस्य कारणात् हस्तः प्रसारितः लम्बितः पुष्पग्रहणाय व्यापारित इत्यर्थः । ततः प्रसारणानन्तरम् । कोटरात् नीडात् । निर्गतेन निःसृतेन । कालेन यमेन मृत्युना वा । अनेन मरणनिश्चयः सूच्यते । दंशनपदे दंशस्थाने दंशरूपं व्रणद्वयमित्यर्थः । " कालो मृत्यौ महाकाले समये यमकृष्णयोः । " इति मेदिनी ॥

छेद इति ॥ दंशस्य दंशस्थानस्य च्छेदः । दाहः वह्न्यादिना दहनम् । क्षतेर्व्रणात् रक्तस्य मोक्षणं स्रावणम् । एतानि दंशच्छेदरक्तमोक्षणदाहरूपाणि कर्माणि दष्टमात्राणां सर्वेषां जातदंशानाम् आयुष्याः आयुषे हिताः आयुर्वर्धका इत्यर्थः । " तस्मै हितम् " इति यत् । प्रतिपत्तय उपायाः सन्तीति शेषः । तदुक्तं वैद्यचन्द्रोदये । " आदौ तु स्रावयेद्रक्तं छित्त्वा शस्त्रेण दंशतः । बहिर्वेगीकृते रक्ते विषं तस्माद्विनश्यति ॥ " इति । वाग्भट्टे च । " दंशं मण्डालिनां मुक्त्वा पित्तलत्वादथापरम् । प्रतप्तहेमलोहाद्यैर्देहेदाशूल्मुकेन वा ॥ करोति भस्मसात्सद्यो वह्निः किं नाम न क्षणात् । " इति । पथ्यावक्त्रं वृत्तम् ॥ ४ ॥

२ विषवैद्यानां जाङ्गुलिकानाम् । " विषवैद्यो जाङ्गुलिकः " इत्य-

प्रतिहारी—जं देवो आणवेदि ॥ ( इति निष्क्रान्ता । ) ( यद्देव आज्ञापयति ) ॥

विदूषकः—अहो पावेण मिच्चुणा गहीदो म्हि ॥ ( अहो पापेन मृत्युना गृहीतोऽस्मि ) ॥ १

राजा—मा कातरो भूः । अविषोऽपि कदाचिद्दंशो भवेत् ॥ २

विदूषकः—कहं ण भाइस्सम् । सिमसिमाअंति मे अंगाइं ॥ ( इति विषवेगं रूपयति । ) ( कथं न भेष्यामि । सिमसिमायन्ति मेऽङ्गानि ) ॥ ३

---

मरः । विषस्य प्रतिकर्ता विषवैद्यः । कर्म क्रिया अपेक्षितेति शेषः । ध्रुवसिद्धिर्वैद्यस्य नाम । जयसेना प्रतिहारीनाम । क्षिप्रं शीघ्रम् ॥

१ पापेन क्रूरेण । गृहीत आक्रान्तः । विषवेगातिशयान्म्रिय इत्यर्थः । "नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वञ्चकः ।" इत्यमरः ॥

२ कातरः भीरुः । " अधीरे कातरत्रस्तभीरुभीरुकभीलुकाः । " इत्यमरः । मा भूः न भव । "माङि लुङ्" इति लुङि "न माङ्योगे" इत्यटो निषेधः । अत्र हेतुः । अविष इति । अविषो विषशून्यः ॥

३ भेष्यामि भियो लट् । सिमसिमायन्ति[1] सिमासिमेति कम्पनावस्थानुकरणम् । कम्पन्ते इत्यर्थः । सिमासिमशब्दात् " अव्यक्तानुकरणाद्द्व्यजवरार्धात् " इति डाचि " लोहितादिडाज्भ्यः " इति क्यषि " वा क्यषः " इति आत्मनेपदविकल्पात्परस्मैपदम् । विषवेगं रूपयति प्रकाशयति । ते चोक्ता वसन्तराजीये । " वैवर्ण्यं वेपथुर्दाहः फेनः स्कन्धस्य भञ्जनम् । दुःखं जाड्यं मृतिश्चेति विषवेगाः स्युरष्टधा ॥ " इति ॥

---

१ ' शिवशिवणें ' इति भाषायाम् ।

देवी—हा दंसिदं असुहं विआरेण । अवलंबथ बम्हणं ॥ ( हा दर्शितमशुभं विकारेण । अवलम्बध्वं ब्राह्मणम् ) ॥ १

( परिव्राजिका ससम्भ्रममवलम्बते । )

विदूषकः—( राजानं विलोक्य ) भो भवदो बह्लादो वि पिअवअस्सो म्हि । तं विचारिअ अपुत्ताए मे जणणीए जोगक्खेमं वहेहि ॥ ( भो भवतो बाल्यादपि प्रियवयस्योऽस्मि । तद्विचार्यापुत्राया मे जनन्या योगक्षेमं वह ) ॥ २

राजा—मा भैषीर्गौतम ! स्थिरो भव । अचिरात्त्वां वैद्यश्चिकित्सिष्यति ॥ ३

जयसेना—( प्रविश्य ) देव ! आणाविदो धुवसिद्धी विण्णावेदि । इह एव्व आणीअदु सो गोदमो त्ति ॥ ( देव ! आज्ञापितो ध्रुवसिद्धिर्विज्ञापयति । इहैवानीयतां स गोतम इति ) ॥

राजा—तेन हि प्रतिगृहीतमेनं तत्रभवतः सकाशं प्रापय ॥ ४

---

१ हा दुःखे । विकारेण दंशरूपेण कर्त्रा । अशुभं मरणमित्यर्थः। दर्शितं प्रकटीकृतम् । अवलम्बध्वं धारयत ॥

२ बाल्यात् बालतामारभ्य । ल्यब्लोपे पञ्चमी । प्रियवयस्यः प्रियं मित्रम् । तन्मैत्र्यं विचार्य चिन्तयित्वा तदनुरोधेनेत्यर्थः । मे जनन्याः मातुः अपुत्रायाः एकाकिनि पुत्रे मयि परलोकं गते पुत्रशून्यायाः । योगक्षेमं योगोऽप्राप्तस्य लाभः तेन सहितं क्षेमं प्राप्तस्य पालनं वह कुर्वित्यर्थः ॥

३ मा भैषीः न बिभेहि । भियो माङि लुङ् तद्योगेऽणिनषेधश्च । स्थिरः व्याधिभयेनाचञ्चलो धीर इत्यर्थः । चिकित्सिष्यति व्याधिमपनेष्यति । कितेर्व्याधिप्रतीकारे " गुप्तिज्किद्भ्यः " इति सन् ॥

४ तेन हि तर्हि । प्रतिगृहीतमवलम्बितं तत्रभवतो ध्रुवसिद्धेः सकाशं समीपं प्रापय नय ॥

जयसेना—तहा ॥ ( तथा ) ॥

विदूषकः—( देवीं विलोक्य ) भोदि ! जीवेअं वा ण वा । जं मए अत्तभवंतं सेवमाणेण ते अवरद्धं तं मरिसेहि ॥ ( भवति ! जीवेयं वा न वा । यन्मयाऽत्रभवन्तं सेवमानेन तेऽपराद्धं तन्मर्षय ) ॥ १

देवी— दीहाऊ होहि ॥ ( निष्क्रान्तो विदूषकः प्रतिहारी च । ) ( दीर्घायुर्भव ) ॥ २

राजा—प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धिमपि यथार्थनामानं सिद्धिमन्तं न मन्यते ॥ ३

---

१ भवति राज्ञि । जीवेयं "जीव प्राणधारणे" इत्यतः संभावनायां लिङ् । वा संदेहे । मम जीवनस्येदानीं संशय इत्यर्थः । अत्रभवन्तं राजानं सेवमानेन मया विदूषकेण कर्त्रा । यत् ते अपराद्धं यस्तवापराधः कृतस्तमित्यर्थः । मर्षय क्षमस्व ॥

२ दीर्घायुः दीर्घं चिरवर्ति आयुर्जीवनकालो यस्य तथाभूतः । भव एधि । आशिषि लोट् ॥

३ प्रकृतिभीरुः प्रकृत्या स्वभावेनैव भीरुर्भयशीलः । "भियः क्रुक्लुकनौ" इति क्रुक् । स्वभावत एव भयशीलः किं पुनः समुपस्थिते भयकारण इत्यर्थः । तपस्वी अनुकम्पार्हः दीन इत्यर्थः । यथार्थनामानं यथार्थमर्थयोग्यं नाम यस्य तथाभूतं ध्रुवसिद्धिमपि ध्रुवसिद्धिनामानं वैद्यमपि सिद्धिमन्तं सिद्धिः विषव्याधिप्रतिकारस्य निष्पादनम् अस्त्यस्य तथाभूतं न मन्यते न संभावयति । ध्रुवसिद्धेर्निश्चितसिद्ध्यर्थकत्वाद्विषवेगप्रशान्तौ सन्देहानवकाशेऽपि निसर्गभीरुत्वादयं न विश्वसिति ॥

जयसेना— ( प्रविश्य ) जेदु जेदु भट्टा। धुवसिद्धी विण्णावेदि उदकुंभविहाणेण सप्पमुद्दिआ कप्पइदव्वा ता अण्णेसीअदु त्ति ॥ ( जयतु जयतु भर्ता। ध्रुवसिद्धिर्विज्ञापयति उदकुम्भविधिना सर्पमुद्रिका कल्पयितव्या तदन्विष्यताम् ) ॥ १

१ उदकुम्भविधिना कर्मविशेषेण सह सर्पमुद्रा अस्त्यस्यां सा सर्पमुद्रिका नागमुद्राविधिर्नाम शान्तिविशेषः कल्पयितव्या कर्तव्या। " तदस्यास्त्यस्मिन्निति मतुप् " इति मत्वर्थे " अत इनि ठनौ " इति ठन्। तद्धेतोः अन्विष्यतां मृग्यतां नागमुद्रेति शेषः। उदकुम्भविधिश्चोक्तो भैरवीतन्त्रे यथा। " भैरव्युवाच ॥ देवदेव जगन्नाथ जगतां हितकारक। केनोपायेन भगवन्मर्त्यैः सर्पविषं जयेत् ॥ ईश्वर उवाच ॥ शृणु देवि प्रवक्ष्यामि यन्नोक्तं कस्यचित्पुरा। उदकुम्भविधानेन विषं राजिमतां जयेत् ॥ देव्युवाच ॥ उदकुम्भविधानं तु श्रोतुमिच्छामि साम्प्रतम्। कृतेन येन मनुज आहेयं तु विषं जयेत् ॥ ईश्वर उवाच ॥ घटमेकं समादाय मृण्मयं चाव्रणं शुभम्। कन्याकर्तितसूत्रेण वेष्टनं तद्गले चरेत् ॥ कोशातक्यग्निकः पाठा सूर्यवल्ल्यमृताऽभयाः। शेलुः शिरीषः किणिही हरिद्रे क्षौद्रसाह्वया ॥ पुनर्नवा त्रिकटुकं बृहत्यौ सारिवे बला। कल्कमेषां कुमार्याश्च रसेन परिकल्पयेत् ॥ घटान्तर्लेपयेत्तेन बहिर्भागं तु धूपयेत्। तद्वन्मधूकमधुकपद्मकेसरचन्दनैः ॥ मौनेन जलमाहृत्य नद्यास्ताम्रघटेन वै। तं घटं पूरयेन्मन्त्रमिममुच्चार्य यत्नतः ॥ नमः पुरुषसिंहाय नमो नारायणाय च। यथासौ नाभिजानाति रणे कृष्णपराजयम् ॥ एतेन सत्यवाक्येन सलिलं चामृतायताम्। हस्तेन तं घटं स्पृष्ट्वा उत्तराभिमुखः स्थितः ॥ एतेन मन्त्रराजेन जलं तदभिमन्त्रयेत्। नमो वैडूर्यमाते हुलु हुलु रक्ष मां सर्पविषेभ्यः। गौरि गान्धारि मातङ्गि चाण्डालि स्वाहा। अनूर्वनुजाय विनतानन्दनाय काश्यपाय पक्षिराजाय नारायणवाहनायामृतवाहनाय। नमो

गरुडायेदममृतरूपं कुरु कुरु दर्वीकराद्यखिलपन्नगानां विषं संहर । नमो नारायणायेति ॥ पिप्पल्यो श्यामकं मांसी खपूरः कुन्दुरुस्तथा । पञ्चवल्कवरा यष्टी नागपुष्पैलवालुकम् ॥ जीवकर्षभकोशीरं सिता पद्मकमुत्पलम् । कुमार्या स्नातया कुम्भे क्षिपेत्संचूर्ण्य भैरवि॥ सुरसामार्कवकुशाशिरीषाम्बुदनिम्बकैः । बद्धकूर्चेन तत्तोयं सेचयेच्छतवारकम् ॥ सर्पदष्टप्रदेशं तु मन्त्रमेनं पठन्पुनः । अनुपूर्वेजमित्यादि यावद्रोमाञ्चहर्षणम् ॥ विषमुक्तो भवेज्जन्तुस्तक्षकेणापि दंशितः । अपमृत्युविनाशार्थं सिञ्चेच्छिरसि मानवः ॥ सर्वबाधाप्रशमनं विषरोगनिवारणम् । उदकुम्भविधानं ते मया देवि प्रकीर्त्तितम् ॥ " इति ॥

नागमुद्राविधिस्तु रसरत्नावल्याम् ॥ "नागार्जुन महाबाहो वद मे गुह्यमुत्तमम् । उरगाणां महाघोरविषबाधापकर्षणम ॥ नागार्जुन उवाच ॥ शृणु विप्र प्रवक्ष्यामि लोकानां हितकाम्यया । नागमुद्राविधानं तु रहस्यं परमं स्फुटम् ॥ सपादपलमानेन सुवर्णेन सुशोभनम् । नागं विधाय मतिमानभ्युत्तारणपूर्वकम् ॥ नागं करेण संस्पृश्य मन्त्रानेतांस्त्रिरुच्चरेत् ॥ श्रीनागस्य प्राणा इह प्राणाः । श्रीनागस्य जीव इह स्थितः । श्रीनागस्य सर्वेन्द्रियाणीह स्थितानि । श्रीनागस्य वाङ्मनःप्राणा इहायान्तु स्वाहा।इति प्रतिष्ठापितप्राणं श्रीनागं नमस्कुर्यात् ॥ एवं प्राणप्रतिष्ठां वै कृत्वा नागं निधापयेत् । उदकुम्भमुखे रम्ये पात्रे ताम्रमये शुभे ॥ सर्षपैः पूरिते रक्तसूत्रवेष्टितकन्धरे । स्थापयेद्दक्षहस्तेन संस्पृश्य मनुमुच्चरन् ॥ अथ मन्त्रः ॥ ॐ सर्पकुलाधिपतये नागायामृतमूर्तये हुलु हुलु सर्पविषं शमय शमय नमस्ते स्वाहा ॥ इति मन्त्रेणाभिमन्त्र्य चाष्टोत्तरशतं सुधीः । नागमुद्रां ततः कृत्वा पूजयेत्संस्तुवीत च ॥ नागराज नमस्तुभ्यं गरदोषनिबर्हण । भूतेशाभरणश्रेष्ठ विषं संहर ते नमः ॥ तत उद्धास्य तं नागं तोयेनानेन सेचयेत् । विषं निर्विषतां याति सर्पदष्टस्य तत्क्षणात् ॥ इति गुह्यं मया विप्र तव स्नेहात्प्रकाशितम् । विषदोषहरं नृणां किमन्यत्कथयामि ते ॥ " इति ॥

धारिणी—एदं सप्पमुद्दिअं अंगुलीअअम् पच्छा मह हत्थे देहि णम् ॥ ( एतत्सर्पमुद्रितमङ्गुलीयकं पश्चान्मम हस्ते देह्येतत् ) ॥ १

राजा—जयसेने ! कर्मसिद्धावाशु प्रतिपत्तिमानय ॥ २

जयसेना—जं देवो आणवेदि ॥ ( इति निष्क्रान्ता ) ( यद्देव आज्ञापयति ) ॥

परिव्राजिका—यथा हृदयमाचष्टे तथा निर्विषो गौतमः॥३

राजा—भूयादेवम् ॥ ४

---

१ सर्पमुद्रितं सर्पेण चिह्नितम् । सर्पप्रतिमायुक्तमित्यर्थः। अङ्गुलीयकम् अङ्गुलीभूषणम् । पश्चान्नागमुद्राविधानसमाप्तौ । मम ममैव नान्यस्येत्यर्थः । परहस्तं प्रापितेऽस्मिन्कदाचिन्मालविका मोच्येतेति शङ्कयेदम् ॥

२ कर्मणः नागमुद्राविधानस्य सिद्धौ जातायां सत्याम् । विदूषकेण कर्णे कथितस्य मालविकामोचनरूपस्य चेति ध्वनिः । प्रतिपत्तिं योग्यस्थानप्राप्तिं देवीहस्तमित्यर्थः । आनय । " प्रतिपत्तिः प्रवृत्तौ च प्रागल्भ्ये गौरवेऽपि च । संप्राप्तौ च प्रबोधे च पदप्राप्तौ च योषिति ॥ " इति मेदिनी ॥

३ यथा यस्मात् हृदयं मनः आचष्टे कथयति प्रसन्नतया सूचयतीत्यर्थः । तथा तस्मान्निर्विषः निर्गतं विषं विषबाधा यस्मात्तथाभूतः । " सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः । " इत्युक्तेरिति भावः ॥

४ भूयात् । आशिषि लिङ् ॥

---

१ ' आंगठी ' इति भाषायाम् ।

जयसेना—( प्रविश्य ) जेदु जेदु भट्टा । णिव्वुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो ॥ ( जयतु जयतु भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः ) ॥ १

धारिणी—दिट्ठिआ वअणीआदो मुत्तम्हि ॥ ( दिष्ट्या वचनीयान्मुक्तास्मि ) ॥ २

प्रतिहारी—एसो उण वाहतओ अमच्चो विण्णवेदि । राअकज्जं बहुमंतिदव्वं दंसणेण अणुग्गहं इच्छम्हि त्ति ॥ ( एष पुनर्वाहतकोऽमात्यो विज्ञापयति । राजकार्यं बहुमन्त्रितव्यं दर्शनेनानुग्रहमिच्छामीति) ॥ ३

धारिणी—गच्छदु अज्जउत्तो कज्जसिद्धीए ॥ ( गच्छत्वार्यपुत्रः कार्यसिद्ध्यै ) ॥

राजा—देवि ! आतपाक्रान्तोऽयमुद्देशः शीतक्रिया चास्या रुजः प्रशस्ता तदन्यत्र नीयतां शयनीयम् ) ॥ ४

---

१ निवृत्तविषवेगः निवृत्तः प्रशान्तः विषस्य वेगो यस्य तथाभूतो गौतमो विदूषकः। मुहूर्तेन घटिकाद्वयेन प्रकृतिस्थः प्रकृतौ गुणसाम्ये तिष्ठति तथाभूतः । संवृत्तो जातः । निर्विकारो जात इत्यर्थः । विकारे हि गुणानां वैषम्यं निर्विकारत्वे च साम्यम् । " प्रकृतिर्गुणसाम्ये स्यात् " इति मेदिनी ॥

२ वचनीयात् दोषात् । " जातं च दैवाद्वचनीयबीजम् " इत्युत्तरचरिते ॥

३ मन्त्रितव्यं गूढं विचारणीयम् । दर्शनानुग्रहं तव दर्शनरूपमनुग्रहमित्यर्थः । अनुग्रहे दर्शनं करणम् ॥

४ आतपाक्रान्तः आतपेन प्रकाशेन आक्रान्तो व्याप्तः। उद्देशः

देवी—पालिदाओ अज्जउत्तवअणं अणुचिट्ठध ॥ ( परिजनस्तथा प्रक्रान्तः । ) ( पालिताः आर्यपुत्रवचनमनुतिष्ठत ) ॥ १

( निष्क्रान्ता देवी परिव्राजिका परिजनश्च । )

राजा—जयसेने ! गूढेन पथा प्रमदवनं प्रापय ॥ २

जयसेना—एदु एदु देवो ॥ ( एतु एतु देवः ) ॥

राजा—जयसेने ! ननु समाप्तकाम्यो गौतमः ? ॥ ३

जयसेना— अह इम् ॥ ( अथ किम् ) ॥

राजा—इष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
संदिग्धमेव सिद्धयै कातरमाशङ्कते चेतः ॥ ९ ॥

---

प्रदेशः । शीतक्रिया शीतगुणवती क्रिया प्रवातसेवनादिरूपा प्रशस्ता उचिता । अन्यत्र शीतलप्रदेशे शयनीयं शय्या ॥

१ पालिताः दास्यः संबोधने प्रथमा । अनुतिष्ठत कुरुत । राज्ञा यथोक्तं तथा कुरुतेत्यर्थः ॥

२ गूढेन अप्रकटेन । पथा मार्गेण । प्रापय मामिति शेषः ॥

३ नन्विति प्रश्ने । समाप्तकाम्यः समाप्तं काम्यमिच्छाविषयं कर्म मालविकामोचनरूपं यस्य तथाभूतः । समाप्तकरणीय इति सूचितम् ॥

इष्टेति ॥ इष्टाधिगमनिमित्तम् इष्टस्य मालविकारूपस्याधिगमे प्राप्तौ निमित्तं कारणीभूतम् । एकान्तसाध्यं नितान्तं साधयितुं शक्यमपि प्रयोगमुपायं सिद्धयै कार्यनिष्पादनाय संदिग्धं कार्यं स्यान्न वाऽनेनेति संशयविषयमेव मत्वा चेतो मनः कर्तृ कातरमधीरं सत् । शङ्कते बिभेति । " तीव्रैकान्तनितान्तानि " इत्यमरः । " अधीरे कातरत्रस्त " इति च । आर्या जातिः ॥ ९ ॥

विदूषकः—( प्रविश्य ) जेदु जेदु भवम् । सिद्धाणि दे मंगलकम्माणि ॥ ( जयतु जयतु भवान् । सिद्धानि ते मङ्गलकर्माणि ) ॥ १

जयसेना—जं देवो आणवेदि ॥ ( इति निष्क्रान्ता । ) ( यद्देव आज्ञापयति ) ॥

राजा—जयसेने ! त्वमपि स्वं नियोगमशून्यं कुरु ॥ २

राजा—गौतम ! क्षुद्रा माधविका न खलु किंचिद्विचारितमनया ? ॥ ३

विदूषकः—देवीए अंगुलीअमुद्दिअं देक्खिअ कहं विआरेदि ॥ ( देव्या अङ्गुलीयमुद्रिकां दृष्ट्वा कथं विचारयति ) ॥ ४

---

१ ते तव मङ्गलकार्याणि मङ्गलानि शुभानि कार्याणि कर्माणि मालविकामोचनोपायरूपाणि सिद्धानि सफलानि । विचिन्तितैरुपायैर्मया मालविका मोचितेत्यर्थः ॥

२ जयसेना प्रतिहार्याः नाम । स्वं स्वकीयमात्मनानुष्ठेयं नियोगमाज्ञाम् । अशून्यं कुरु अनुतिष्ठेत्यर्थः । नियोगस्य शून्यत्वं नाम तद्विषयकार्यस्याननुष्ठानम् । तद्भिन्नत्वं चानुष्ठानम् अशून्यत्वमतोऽयमर्थः ॥

३ क्षुद्रा अधमा । क्षुद्रमपि कार्यमधिकं विचारयन्तीत्यर्थः।"क्षुद्रः स्यादधमः" इति मेदिनी । खलु जिज्ञासायाम् । "खलु स्याद्वाक्यभूषायां जिज्ञासायाम् " इति मेदिनी । माधविका एतन्नामा सारभाण्डगृहे देव्या नियुक्ता दासी । अनया माधविकया कर्त्र्या विचारितं चिन्तितम् । कुतस्त्वमागतः ? कस्या इयं मुद्रा ? किमर्थं वा मोच्यते मालविकेत्यादि आशङ्कितं न वेति प्रश्नः ॥

४ देव्या इति विचारणायोग्यत्वं सूच्यते ॥

राजा—न खलु मुद्रामधिकृत्य ब्रवीमि । तयोर्द्वयोः किंनिमित्तो मोक्षः ? किं वा देव्या परिजनमतिक्रम्य भवान् संदिष्टः ? इत्येव तया प्रष्टव्यम् ॥ १

विदूषकः—णं पुच्छिदो ह्मि । मंदस्स वि पुणो मे तह पच्चुप्पणं उत्तरं आसि ॥ (ननु पृष्टोऽस्मि । मन्दस्यापि पुनर्मे तदा प्रत्युत्पन्नमुत्तरमासीत् ) ॥ २

राजा—कथ्यताम् ॥

विदूषकः—भणितं मए । देव्वचिंतएहिं विण्णाविदो राआ "सोवसग्गं वो णक्खत्तं ता अवश्यं सव्वबंधमोक्खो करीअदु" त्ति ॥ ( भणितं मया । दैवचिन्तकैर्विज्ञापितो राजा "सोपसर्गं वो नक्षत्रं तत्सर्वबन्धमोक्षः क्रियताम्" इति ) ॥ ३

---

१ मुद्रामङ्गुलीयकचिह्नम् अधिकृत्य उद्दिश्य । तयोर्द्वयोर्मालविकाबकुलावलिकयोः किंनिमित्तः कस्मात्कारणादित्यर्थः । मोक्षो बन्धनत्यागः । " मोक्षस्तु मुक्तिपाटलिमोचने " इति मेदिनी । किं वा कथं वा परिजनं सेवकम् अतिक्रम्य उलङ्घ्य त्यक्त्वेति यावत् । संदिष्ट आज्ञप्तः । प्रष्टव्यं प्रष्टुं योग्यम् ॥

२ मन्दस्य मूर्खस्यापि मे विदूषकस्येत्यर्थः । कर्तरि षष्ठी । प्रत्युत्पन्नं तत्कालोचितम् ॥

३ दैवचिन्तकैरित्यारभ्य अहं संदिष्ट इत्यन्तो माधविकासकाश आत्मोक्तेरनुवादः । दैवचिन्तकैः दैवं भाग्यं चिन्तयन्ति दैवचिन्तकाः ज्योतिःशास्त्रवेत्तारः तैः विज्ञापितः प्रार्थितः। सोपसर्गम् उपसर्गेण पीडया सहितं पापग्रहादिभिराक्रान्तमित्यर्थः । वः राज्ञां गौरवे बहुवचनं तवेत्यर्थः । तत् तस्माद्धेतोः । तत्प्रतीकारायेत्यर्थः । सर्वबन्धनमोक्षः सर्वेषां बद्धानां बन्धान्मोक्षो मोचनम् । इति विज्ञापित इति संबन्धः ॥

राजा—( सहर्षम् ) ततस्ततः ॥

विदूषकः—तं सुणिअ देवीए इरावदीए चित्तं रक्खंतीए "राआ किल मोअअदि" त्ति अहं संदिट्ठो त्ति । तदो युज्जदि त्ति तए संवादिदो अत्थो ॥ ( तच्छ्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या " राजा किल मोचयति" इति अहं संदिष्ट इति । ततो युज्यत इति तया संपादितोऽर्थः ) ॥ १

राजा—( विदूषकं परिष्वज्य ) सखे ! प्रियोऽहं खलु तव॥ २

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ ८ ॥

---

१ ततः देवज्ञविज्ञापनं श्रुत्वा । इरावत्याश्चित्तं मनो रक्षन्त्या अक्लेशयन्त्या देव्या अहं संदिष्ट इति संबन्धः । राजा किल खलु मोचयति इतिशब्दः प्रकाशने इति प्रकाशयन्त्येत्यर्थः। अहं राज्ञः प्रियवयस्यः । संदिष्ट आज्ञप्तः । " इति हेतौ प्रकाशने " इति मेदिनी । चरम इति शब्दो माधविकाप्रकाश आत्मनोक्तस्यानुवादस्य परिसमाप्तौ एवं मया भणितमिति संबन्धः। ततः मद्वाक्यश्रवणानन्तरं संपादितो निष्पादितः अर्थः कार्यं मालविकामोचनरूपम् ॥

२ परिष्वज्य आलिङ्ग्य ॥

न हीति ॥ सुहृदां मित्राणाम्।"सुहृद्दुर्हृदौ मित्रामित्रयोः"इति निपातनात्साधुः।बुद्धिगुणेन बुद्धिनिष्ठेन गुणेन करणेनैव अर्थस्य इष्टकार्यस्य दर्शनं निष्पत्तिरिति यावत् ।न भवति । यतो हेतोः सूक्ष्मः हठादनुद्भावनीयः । कार्यसिद्धिपथः कार्यसिद्धेर्मार्गः । " ऋक्पूरब्धूः पथामानक्षे " इत्यप्रत्ययः समासान्तः । यद्वाऽदन्त एवात्र पथशब्दो ग्राह्यः। तथा च त्रिकाण्डशेषः।"वाटः पथश्च मार्गश्च " इति । स्नेहेनापि केवलस्नेहेनापि करणभूतेन उपलभ्यते

विदूषकः—तुवरदु भवम् । समुद्दघरए सहीसाहिदं मालविअं ठाविअ भवंतं पच्चुग्गदो ह्मि ॥ ( त्वरतां भवान् । समुद्रगृहके सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि ) ॥ १

राजा—अहमेनां संभावयामि । गच्छाग्रतः ॥ २

विदूषकः—एदु एदु भवम् । ( परिक्रम्य ) एदं समुद्दगेहअम् ॥ ( एतु एतु भवान् । एतत्समुद्रगृहम् ) ॥

राजा—( साशङ्कम् ) वयस्य ! एषा कुसुमावचयव्यग्रहस्ता सख्यास्त इरावत्याः परिचारिका चन्द्रिका सन्निकृष्टमागच्छति । इतस्तावदावां भित्तिगूढौ भवाव ३

विदूषकः—अहो कुंभीलएहिं कामुएहिं अ परिहरणीआ चन्दिआ ॥ (अहो कुम्भीलकैः कामुकैश्च परिहरणीया चन्द्रिका)॥ ४

---

साक्षात्क्रियते । नात्र ज्ञानमेवोपयोगि किं तूपायः स्नेहेनापि उद्भाव्यत इति भावः ॥ ६ ॥

१ समुद्रगृहके समुद्रगृहे स्वार्थे कः । समुद्रगृहं जलयन्त्रगृहम् । "समुद्रगृहमित्युक्तं जलयन्त्रनिकेतनम् ।" इति हारावली।प्रत्युद्गतोऽस्मि उपागतोऽस्मि ॥

२ एनां मालविकां संभावयामि उपगत्य संमानयामीत्यर्थः ॥

३ कुसुमावचयव्यग्रहस्ता कुसुमानां पुष्पाणाम् अवचये हस्तेन ग्रहणे व्यग्रो विशेषेणासक्तो हस्तो यस्यास्तथाभूता । " व्यग्रो व्यासक्त आकुल " इत्यमरः । परिचारिका दासी । चन्द्रिका एतन्नामा । सन्निकृष्टं समीपम् । तावत्सत्वरम् । भित्तिगूढौ भित्या करणभूतया गूढौ च्छादितौ अन्तारितावित्यर्थः ॥

४ कुम्भीलकैश्चौरैः । कामुकैः कामिभिश्च । परिहरणीया वर्जनीया । चन्द्रिका दासी ज्योत्स्ना । " चन्द्रिका कौमुदी ज्योत्स्ना " इत्यमरः ॥

( उभौ यथासमर्थितं कुरुतः । ) १

राजा–गौतम ! कथं नु ते सखी मां प्रतिपालयति । एह्येनां गवाक्षमाश्रित्य विलोकयावः ॥ २

विदूषकः–तहा॥(उभौ विलोकयन्तौ तिष्ठतः ।) (तथा)॥

( ततः प्रविशति मालविका बकुलावलिका च ।)

बकुलावलिका–सहि ! पणम भट्टारम् ॥ ( सखि ! प्रणम भर्तारम् ) ॥ ३

मालविका–णमो दे ॥ (नमस्ते ) ॥

राजा–शङ्के मे प्रतिकृतिं निर्दिशति ॥ ४

मालविका–( सहर्षं द्वारमवलोक्य )हला ! मं विप्पलंभेसि॥ ( हला मां विप्रलम्भयसि ) ॥ ५

राजा–हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि ॥ ६

---

१ यथासमर्थितं यथोक्तं कुरुतः । भित्त्यन्तरितौ भवत इत्यर्थः॥

२ ते तव सखी मालविका मां प्रतिपालयति प्रतीक्षते । कथं केन प्रकारेण । नु वितर्के । गवाक्षं वातायनम् ॥

३ भट्टारं पूज्यं राजानम् । " भट्टारो भगवान्पूज्यः " इति त्रिकाण्डशेषः । भर्तारमिति वा ॥

४ मे मम प्रतिकृतिं प्रतिमाम् । निर्दिशति दर्शयतीत्यर्थः । शङ्के तर्कयामि । " शङ्का त्रासे वितर्के च " इति मेदिनी ॥

५ विप्रलम्भयसि वञ्चयसि ॥

६ हर्षविषादाभ्याम् आनन्दखेदाभ्यां करणाभ्याम् । प्रीतोऽस्मि। " प्रह्लन्नः प्रमुदितः प्रीतः " इत्यमरः ॥

---

१ 'साणे' इति भाषायाम् ।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ॥ ७ ॥

बकुलावलिका—णं एसो चित्तगदो भट्टा ॥ (नन्वेष चित्रगतो भर्ता) ॥ १

उभे—(प्रणिपत्य) जेदु भट्टा ॥ (जयतु भर्ता) ॥

मालविका—हला ! तदा संभमदिट्ठे भट्टिणो रूवे जह ण वितिण्ह ह्मि तह्म अज्ज वि मए भाविदो अवितिण्हदंसणो भट्टा ॥ (हला ! तदा सम्भ्रमदृष्टे भर्तू रूपे यथा न वितृष्णाऽस्मि तथाऽद्यापि मया भावितोऽवितृष्णदर्शनो भर्ता) ॥ २

---

सूर्योदय इति॥पुण्डरीकस्य सूर्यविकाशिनः सितकमलस्य अवस्था दशा।सूर्योदये या भवति । या च सूर्यास्तमये सूर्यस्य अस्तमये अस्ते सति भवति।ते उभे समवस्थे सुन्दरावस्थाद्वयं सुवदनायाः सुमुख्याःवदनेन मुखेन कर्तृणा ऊढे धृते । वहेः क्तः। यजादित्वात्संप्रसारणं च।यथा सूर्यविकाशि कमलं सूर्योदये विकाशते सूर्यास्ते च निमीलति तथा मत्सामीप्यश्रवणेन सपदि तस्या मुखं विकसितं मदभावज्ञाने च म्लानमिति भावः।अत्र पुण्डरीकगताया अवस्थायाः पुण्डरीकमात्रनिष्ठत्वेनान्यकर्तृकवहनासंभवेऽपि तत्कथनं मालविकामुखस्य विकासितत्वम्लानत्वयोः प्रतिबिम्बमित्यसंभवद्वस्तुसंबन्ध एकवाक्यगतो निदर्शनालङ्कारः । आर्या जातिः । तल्लक्षणं च प्रथमाङ्के तृतीयपद्ये द्रष्टव्यम् ॥ ७ ॥

१ चित्रगतश्चित्रे विद्यमानः । आलिखित इत्यर्थः ॥

२ हला सखि । सम्भ्रमदृष्टे सम्भ्रमेण इरावतीप्राप्त्या भीतत्वात्त्वरया दृष्टे भर्तू राज्ञो रूप आकारे विषये यथा न वितृष्णाास्मि नाभिलाषशून्यास्मि । त्वरया विलोकनेन समग्रदृष्टत्वाभावात् । तथा

विदूषकः—सुदं भवदा ? तत्तहोदी चित्ते जहा दिट्ठो तहा दिट्ठो भवं त्ति मंतेदि। मुहा दाणिं मंजूसा विअ रअणभंडअं जोव्वणगव्वं वहेसि ॥ (श्रुतं भवता ? तत्रभवती चित्रे यथा दृष्टस्तथा दृष्टो भवानिति मन्त्रयति । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि ) ॥ १

राजा—सखे ! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । पश्य ॥ २

---

अद्यापि इदानीमपि भर्ता चित्रगता राजमूर्तिरित्यर्थः । अवितृष्णदर्शनः वितृष्णं निरभिलाषं न भवतीत्यवितृष्णं दर्शनं यस्य तादृशः । तृष्णा च मालविकायाः । भावितश्चिन्तितः । पूर्वं यथा राजरूपदर्शनस्य समग्रत्वाभावान्न तृप्तास्मि तथैवेदानीं निर्विघ्नत्वात्समग्रविलोकनयोग्यत्वेऽपि प्रत्यक्षत्वाभावान्न मे तृप्तिरित्यर्थः ॥

१ मञ्जूषा पेटकः। " पिटकः पेटकः पेटा मञ्जूषा " इत्यमरः । रत्नभाण्डं रत्नस्थापनपात्रमिव यौवनगर्वं तारुण्याभिमानं मुधा वृथा वहसि । यथा मञ्जूषया धृतमपि रत्नभाण्डं न तस्या उपकारि तथैव तवेदं यौवनं यौवनयोग्यप्रियापरिष्वङ्गादेरकरणादिति भावः । तदेवाह । चित्रे यथा दृष्ट इति । अनुभावस्यानुद्भेदात् निश्चेतन इवेत्यर्थः ॥

२ कुतूहलवान् कुतूहलं रम्यवस्तुविलोकनलोलताऽस्त्यस्य तथाभूतोऽपि प्रियं द्रष्टुकामोऽपीत्यर्थः । " रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् । " इति दर्पणे । निसर्गशालीनः निसर्गेण स्वभावेनैव शालीनोऽधृष्टः सलज्ज इत्यर्थः । " स्यादधृष्टे तु शालीनः " इत्यमरः । मां द्रष्टुं कौतुकवत्यप्यसौ मत्सामीप्ये लज्जावनम्रमुखी द्रष्टुं न पारयिष्यतीति भावः । स्वोक्तं समर्थयति । पश्येति ॥

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम् ।
न च प्रियेष्वायतलोचनानां
समग्रवृत्तीनि विलोचनानि ॥ ८ ॥

मालविका—हला! का एसा पासपरिउत्तमुहेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाईअदि? ॥ (हला! कैषा पार्श्वपरिवृत्तमुखेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते?) ॥ १

बकुलावलिका—णं इअं पासगदा इरावदी ॥ (नन्वियं पार्श्वगतेरावती) ॥

---

कार्त्स्न्येनेति ॥ आयतलोचनाः पूर्वसमागमानां पूर्वः प्रथमः समागमः सङ्गमो येषां तेषां प्रियाणामित्यर्थः । तत्समागमकाले दृश्यमानं रूपं कर्मभूतं कार्त्स्न्येन साकल्येन निर्वर्णयितुं द्रष्टुम् । " निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम् ।" इत्यमरः । इच्छन्ति । तु किंतु आयतलोचनानां विशालनेत्राणां स्त्रीणां विलोचनानि नयनानि कर्तृभूतानि । प्रियेषु दयितेषु समग्रवृत्तीनि समग्रा संपूर्णा वृत्तिर्वर्तनं येषां तथाभूतानि न भवन्ति । साकल्येन प्रियस्वरूपं द्रष्टुमिच्छन्त्योऽपि नवोढा लज्जाबाहुल्यात्तथा कर्तुं न प्रभवन्तीत्यर्थः । अत्र प्रियविलोकनाभावरूपेण कार्येण लज्जारूपनिमित्तस्य गम्यमानत्वादप्रस्तुतप्रशंसालङ्कारः । " कार्यान्निमित्तं कार्यं च हेतोरथ समात्समम् । अप्रस्तुतात्प्रस्तुतं चेद्गम्यते पञ्चधा ततः ॥ अप्रस्तुतप्रशंसा स्यात् " इत्युक्तेः । उपजाति वृत्तम् ॥ ८ ॥

१ पार्श्वपरिवृत्तमुखेन पार्श्वे समीपे परिवृत्तं मुखं येन तथाभूतेन । भर्त्रा राज्ञा । स्निग्धया स्नेहयुक्तया दृष्ट्या नयनेन करणेन । निध्यायते विलोक्यते । " निर्वर्णनं तु निध्यानं दर्शन० " इत्यमरः ॥

**मालविका**—सहि ! अदक्खिणो विअ भट्टा मे पडिभादि। जो सव्वं देवीजणं उज्झीअ एक्काए मुहे बद्धलक्खो ॥ ( सखि ! अदक्षिण इव भर्ता मे प्रतिभाति । यः सर्वं देवीजनमुज्झित्वा एकस्या मुखे बद्धलक्ष्यः ) ॥ १

**बकुलावलिका**—( आत्मगतम् ) चित्तगदं भट्टारअं परमत्थदो संकप्पिअ असूअदि । होदु । कीडिस्सं दाव एदाए । ( प्रकाशम् )हला ! भट्टिणो वल्लभा एसा ॥ ( चित्रगतं भट्टारकं परमार्थतः सङ्कल्प्य असूयति । भवतु । विक्रीडिष्यामि तावदेतया । हला ! भर्तुर्वल्लभैषा ) ॥ २

**मालविका**—तदो दाणिं किं अत्ताणं आआसइस्सम् ॥ ( इति सासूयं परावर्तते । ) ( तदिदानीं किमित्यात्मानमायासयिष्यामि) ॥ ३

---

१ अदक्षिणः दक्षिणः सर्वासु स्त्रीषु समो न भवति तथाभूतः। " एषु त्वनेकमहिलासमरागो दक्षिणः कथितः।" इत्युक्तेः । देवीजनं राज्ञीसमूहम् । उज्झित्वा त्यक्त्वा । बद्धलक्ष्यो व्यापृतदृष्टिरित्यर्थः ॥

२ भट्टारकं राजानम् । " राजा भट्टारकः" इत्यमरः। परमार्थतस्तत्वतः प्रत्यक्षत्वेनेत्यर्थः । संकल्प्य मत्वा असूयति दोषदृष्ट्या पश्यति । क्रीडिष्यामि नर्म करोमीत्यर्थः । वल्लभा प्रिया ॥

३ तत् यदि सैव प्रिया तर्हीत्यर्थः । आयासयिष्यामि । राज्ञः प्राप्त्यर्थं श्रमयामि । निष्फलत्वान्नायासयामीत्यर्थः । सासूयम् असूयया परप्रेमासहनेन सहितं यथा तथा । परावर्तते विमुखीभवति । " असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता । दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् ॥ " इति दर्पणे ॥

राजा—सखे ! पश्य ॥

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्तयन्त्या ।
कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ॥ ९ ॥

विदूषकः—अणुणअसज्जो दाणिं होहि ॥ ( अनुनयसज्ज इदानीं भव ) ॥ १

मालविका—अज्जगोतमो एत्थ एव सेवदि णम् ॥ (इति पुनः स्थानान्तराभिमुखी भवितुमिच्छति । ) ( आर्यगौतमोऽत्रैव सेवत एनाम् ) ॥ २

---

भ्रूभङ्गेति ॥ भ्रूभङ्गभिन्नतिलकं भ्रुवोर्भङ्गेन कुटिलीकरणेन भिन्नो वक्रीभूतस्तिलको ललाटिका यत्र तादृशम् । स्फुरिताधरोष्ठं स्फुरितोऽधरोऽधस्तन ओष्ठो यत्र तथाभूतम् । " ओत्वोष्ठयोः समासे वा" इति वा पररूपम् । आननं मुखं कर्मभूतं सासूयमसूयया सहितं यथा तथा । इतः चित्रात् परिवर्तयन्त्या अनया मालविकया कर्त्र्या । विनेतुः शिक्षकस्य गणदासस्य कर्तरि षष्ठी । शिक्षयाऽस्याः संबन्धः । कान्तापराधकुपितेषु कान्तस्य प्रियस्य योऽपराधः परस्त्रीसंगमादिरूपः तेन हेतुना कुपितेषु स्त्रीणां क्रोधेषु विषये । भावे क्तः । ललिताभिनयस्य ललितस्य सुन्दरस्य अभिनयस्यावस्थानुकारस्य कर्मणि षष्ठी शिक्षा शिक्षणं दर्शितवेत्युत्प्रेक्षा । अभिनये हि भ्रूभङ्गादयो भवन्ति । वसन्ततिलकम् । " उक्तं वसन्ततिलकं तभजा जगौ गः " इत्युक्तेः ॥ ९ ॥

१ अनुनयसज्जः अनुनयाय मालविकायाः सान्त्वनाय सज्जः सन्नद्धः ॥

२ स्थानान्तराभिमुखी स्थानान्तरस्य भिन्नस्थानस्याभिमुखी संमुखी । चित्रपराङ्मुखीत्यर्थः ॥

बकुलावलिका—( मालविकां रुद्ध्वा ) ण खु कुपिता दाणिं तुमम् ॥ ( न खलु कुपितेदानीं त्वम् ? ) ॥ १

मालविका—जइ चिरं कुविदं एव्व मं मण्णेसि एसो पच्चाणीअदि कोवो ॥ ( यदि चिरं कुपितामेव मां मन्यसे एष प्रत्यानीयते कोपः ) ॥ २

राजा—( उपेत्य )

कुप्यसि कुवलयनयने चित्रार्पितचेष्टया किमेतन्मे ।
ननु तव साक्षादयमहमनन्यसाधारणो दासः ॥ १० ॥

बकुलावलिका—जेदु जेदु भट्टा ॥ (जयतु जयतु भर्ता )॥

मालविका—( आत्मगतम् ) कहं चित्तगदो भट्टा मए असूइदो ॥ ( प्रकाशं सव्रीडवदनमञ्जलिं बध्नाति । राजा मदनकातर्यं रूपयति । ) ( कथं । चित्रगतो भर्ता मयाऽसूयितः ) ॥ ३

---

१ प्रश्नोऽयम् । अवश्यं कुपितासीत्यर्थः ॥

२ प्रत्यानीयते अपगतोऽपि पुनः परावर्त्यत इत्यर्थः ॥

कुप्यसीति ॥ हे कुवलयनयने कमलनेत्रे मालविके । त्वं मे मम चित्रार्पितचेष्टया चित्र आलेख्येऽर्पितया निवेशितया चेष्टया व्यापारेण करणेन कुप्यसि क्रुध्यसि एतत् किम् । अयुक्तमिदमित्यर्थः । कुत इत्याह । नन्विति । ननु यतः अनन्यसाधारणः अन्यासां साधारणः सामान्यो न भवति तथाभूतः अनन्यसुलभः त्वदेकनिष्ठ इत्यर्थः । दासः सेवकः अयमहं तव साक्षात्प्रत्यक्षोऽस्मि ॥ १० ॥

३ चित्रगतश्चित्ररूप इत्यर्थः । असूयितः कोपविषयीकृतः । " असूञ् उपतापे " इत्यतः कण्ड्वादेः क्तः । सव्रीडवदनं व्रीडया लज्जया सहितं वदनं मुखं यस्मिन् कर्मणि तद्यथा तथा ।

विदूषकः—किं भवं उदासीणो विअ दीसइ? ॥ ( किं भवानुदासीन इव दृश्यते ? ) ॥ १

राजा—अविश्वसनीयत्वात्ते सख्याः ॥ २

विदूषकः—अत्तभोदीए कहं तव अविस्सासो ? ॥ ( अत्रभवत्यां कथं तवाविश्वासः ? ) ॥ ३

राजा—श्रूयताम् ॥

पथि नयनयोः स्थित्वा स्थित्वा तिरोभवति क्षणात्
सरति सहसा बाह्वोर्मध्यं गताऽपि सखी तव ।
मनसिजरुजा क्लिष्टस्यैवं समागममायया
कथमिव सखे विस्रब्धं स्यादिमां प्रति मे मनः॥ १३

---

लज्जावनतमुखीत्यर्थः । बध्नाति रचयति करोतीत्यर्थः । मदनकातर्यं मदनेन तद्व्यथयेत्यर्थः कातर्य्यं धैर्यशून्यत्वम् । रूपयति प्रकाशयति ॥

१ उदासीनः खिन्न इव ॥

२ ते तव सख्या मालविकायाः अविश्वसनीयत्वाद्विश्वासानर्हत्वात् ॥

३ अत्रभवत्यां मालविकायां विषये तव अविश्वासः कथमिति प्रश्नः ॥

पथीति ॥ हे गौतम । तव सखी मालविका कर्त्री । नयनयोर्नेत्रयोः पथि मार्गे ममेति शेषः । स्थित्वा स्थित्वा । वीप्सायां द्वित्वम् । भूयो भूयो नयनगोचरीभूयेत्यर्थः । क्षणादत्यल्पकालादेव तिरोभवति अदृश्या भवति । किंच बाह्वोर्भुजयोर्मध्यम् उर इत्यर्थः । गतापि आलिङ्गनाय निवेशितापि । सहसा अकस्मात्सरति अपगच्छति । एवं समागममायया मायासदृशेन क्षणिकेन समागमेन

बकुलावलिका—सहि ! बहुसो किल भट्टा विप्पलद्धो । ता तुए अत्ता विस्ससणीओ करीअदु ॥ ( सखि ! बहुशः किल भर्ता विप्रलब्धः । तत्त्वयात्मा विश्वसनीयः क्रियताम् )॥ १

मालविका—सहि ! मह उण मंदभग्गाए सिविणसमाअमो वि भट्टिणो दुल्लह आसि ॥ ( सखि ! मम पुनर्मन्दभाग्यायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ) ॥ २

बकुलावलिका—भट्टा करेदु से उत्तरम् ॥ (भर्ता करोत्वस्या उत्तरम् )॥

राजा—उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ॥ १२॥

---

विश्वासाभावे हेतुभूतेन । मनसिजरुजा मदनव्याधिना क्लिष्टस्य दुःखितस्य मे मम मनः इमां प्रति कथमिव विस्रब्धं विश्वस्तं सञ्जातविश्वासमित्यर्थः । अपि तु न कथमपीत्यर्थः । अनेनास्या मुग्धात्वं ध्वन्यते । प्रतारिकायाः प्रतारणावश्यंभावेन तत्राविश्वासस्यैवोचितत्वान्नास्यां मे विश्वास इति भावः । इयं च नायिका रतौ वामा मुग्धा । तदुक्तं " प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ " इति। हरिणीवृत्तम्। तल्लक्षणं तु "नसमरसलागः षड्वेदैर्हयैर्हरिणी मता । " इति ॥ ११॥

१ बहुशः बहुवारम् । विप्रलब्धः प्रतारितः । विश्वसनीयः भर्तुर्मनोरथपूरणेन विश्वासयोग्यः ॥

२ भर्तुः राज्ञ इति समागमान्वयि । स्वप्नसमागमः स्वप्ने अवस्थाविशेषेऽपि समागमः सङ्गमः ॥

उत्तरेणेति ॥ अत्र मालविकोक्तौ उत्तरेण प्रतिवचनेन किम् । किमपि फलमित्यर्थः । किं तर्ह्यत्र कर्तव्यमित्याह । मया अग्नि-

बकुलावलिका—अणुगहीदम्हि ॥ ( अनुगृहीतास्मि ) ॥

विदूषकः—( परिक्रम्य ससम्भ्रमम् ) बउलावलिए ! असोअपल्लवाइं अहिलंघइदुं इच्छदि हरिणो । एहि णिवारेम णम् ॥ ( बकुलावलिके ! अशोकपल्लवान्यभिलङ्घितुमिच्छति हरिणः । एहि निवारयामैनम् ) ॥ १

बकुलावलिका—तहा ॥ ( इति प्रस्थिता ) ( तथा ) ॥

राजा—वयस्य ! एवमेवास्मिन् रक्षणक्षणेऽवहितेन तथा त्वया भवितव्यम् ॥ २

---

मित्रेण कर्त्रा रहः निर्जनस्थाने सेविता मालविकायाः सेवक एव न तु सेव्यो मालविकासकाशात्सेवाग्राहको य आत्मा मम देहः स एव पञ्चबाणाग्निसाक्षिकं पञ्चबाणो मदन एवाग्निः स एव साक्षी द्रष्टा यत्र कर्मणि तद्यथा तथा तव सख्ये मालविकायै दत्तः अर्पितः । लोकेऽप्यग्निसाक्षिकमेव भार्यां परिणयन्ति । मालविकां परिणयामीत्यर्थः । अत्र मदने वह्नित्वारोपस्य प्रकृते मालविकायै देहसमर्पणरूपे कार्ये उपयुक्तत्वात्परिणामालङ्कारः । तदुक्तं साहित्यरत्नाकरे । " आरोप्य मूर्त्या विषयः परिणामं भजेद्यदि । प्रकृतार्थोपयोगाय परिणामः " इति ॥ १२ ॥

१ अशोकपल्लवानि अशोकस्य पल्लवानि किसलयानि अभिलङ्घितुं भक्षणार्थमभिगन्तुम् । राजा मालविकया संगन्तुमिच्छतीति नात्रास्माभिः स्थातव्यमिति ध्वनिः । अयं च दण्डिनो मते पर्यायोक्तयलङ्कारः ॥

२ एवमेव यथाशोकपल्लवानि रक्ष्यन्ते तथैवेत्यर्थः । रक्षणक्षणे इरावत्यादिभ्यो मम रक्षणस्यावसरे । अवहितेन अप्रमत्तेन । एतदावयोः सङ्गतं त्वया सविशेषं रक्षणीयमिति भावः ॥

विदूषकः—एवं वि गोदमो संदिसीअदि ॥ (एवमपि गौतमः संदिश्यते) ॥ १

बकुलावलिका—(परिक्रम्य) अज्ज गोदम ! अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि ॥ (आर्य गौतम ! अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव) ॥ २

विदूषकः—जुज्जइ॥ (निष्क्रान्ता बकुलावलिका।) (युज्यते)॥ ३

विदूषकः—इमं दाव फलिहखंभं अस्सिदो होमि । (इति तथा कृत्वा) अहो सुहप्परिसदा सिलाविसेसस्स ॥ (इति निद्रायते।) (इमं तावत्स्फटिकस्तम्भमाश्रितो भवामि। अहो सुखस्पर्शता शिलाविशेषस्य) ॥ ४

(मालविकाससाध्वसं तिष्ठति ।)

राजा—

विसृज सुन्दरि सङ्गमसाध्वसं तव चिरात्प्रभृति प्रणयोन्मुखे।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि १३॥

---

१ संदिश्यत आज्ञप्यते । रक्षणस्यावश्यमनुष्ठेयत्वान्नात्र सन्देशापेक्षेत्यर्थः ॥

२ अप्रकाशे परैरदृश्ये स्थले । द्वाररक्षकः समुद्रगृहस्य द्वारपालः ॥

३ युज्यते योग्यं भवति त्वदुक्तमिति शेषः ॥

४ तावदवधारणे । इमं पुरोवर्तिनमेवेत्यर्थः । सुखस्पर्शता सुखः सुखवान् सुखकर इत्यर्थः स्पर्शो यस्य तस्य भावः सुखस्पर्शता । अहो इति विस्मये । "सुखादयो वृत्तिविषये तद्वति वर्तन्ते" इत्युक्तेः । निद्रायते निद्रामनुभवति । लोहितादित्वात्क्यङ् । "लोहितादिडाज्भ्यः" इति मते तु भृशादित्वाद्रूपं बोध्यम् ॥

विसृजेति ॥ हे सुंदरि मालविके । सङ्गमसाध्वसं सङ्गमस्य

मालविका—देवीए भएण अत्तणो वि पिअं कादुं ण पारेमी॥ ( देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामि )॥ १

राजा—अयि! न भेतव्यम् ॥

मालविका—( सोपालम्भम् ) जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसमत्थो भट्टा ॥ ( यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता )॥ २

---

समागमस्य संबन्धि साध्वसं भयं विसृज त्यज। किं च चिरात्प्रभृति बहुकालादारभ्य तव। कर्तरि षष्ठी प्रणयान्वयिनी। प्रणयोन्मुखे प्रणयेऽनुरागे विषये उन्मुखे उत्सुके। अत एव सहकारतामाम्रवृक्षत्वं गते मयि त्वम् अतिमुक्तलतायाः पुण्ड्रकलतायाश्चरितमाचरणं परिगृहाण स्वीकुरु। यथाऽतिमुक्तलता सहकारं दृढं परिवृणोत्येवं त्वं मामालिङ्गेत्यर्थः। अत्र मामालिङ्गेत्युक्तेरविदग्धमात्रोचितत्वात्तस्या एव रीत्यन्तरेणाभिधानात्पर्यायोक्तमलङ्कारः। अतिमुक्तलताचरितस्य तन्मात्रनिष्ठत्वेनान्यकर्तृकताऽसंभवेऽपि तदभिधानेन तत्सादृश्याक्षेप इति निदर्शना। एवं सहकारतां गत इत्यत्रार्पात्येतेषां सङ्करः। “ पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते। ” इति पर्यायोक्तलक्षणम्। द्रुतविलम्बितं वृत्तम्। “ द्रुतविलम्बितमाह नभौ भरौ। ” इति लक्षणात् इह तवेत्यत्र न इत्यपि पाठः॥ १३॥

१ देवीभयात् देव्याः धारिण्याः सकाशाद्यद्भयं भीतिः तस्माद्धेतोः आत्मनः स्वस्यापि। प्रियं कर्तुं न पारयामि न शक्नोमीति यावत्। “ पार कर्मसमाप्तौ ” इत्यतश्चौरादिकाल्लट्॥

२ सोपालम्भम् उपालम्भेन परिहासेनेति यावत् सहितं यथा तथा वदतीति शेषः। यः भर्ता न बिभेति न भययुक्तो भवति स मया भट्टिनीदर्शने तृतीयाङ्कावसाने प्रतिपादिते भट्टिन्याः इरावत्याः

---

१ ‘ मोगरा ’ इति भाषायाम्।

राजा—दाक्षिण्यं नाम बिम्बोष्ठि नायकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः॥ १४॥

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । ( इति संश्लेषमुपजनति । ) ॥ १

( मालविका नाट्येन परिहरति । ) २

राजा—( आत्मगतम् ) रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । तथाहि इयम् ॥ ३

---

दर्शने सति । दृष्टसामर्थ्यः दृष्टं सामर्थ्यं शक्तिर्यस्य तथाभूतः । इरावत्यामुपस्थितायां राज्ञोऽपि संभ्रान्तत्वादयमुपालम्भः । त्वमपि भीतः किमुताहमित्यर्थापत्तिध्वनिः ॥

दाक्षिण्यमिति ॥ हे बिम्बोष्ठि बिम्बं पक्वतुण्डीफलमिव रक्त ओष्ठो यस्यास्तथाभूते मालविके दाक्षिण्यं सर्वनायिकासु समानत्वं नाम प्राकाश्ये । दाक्षिण्यप्रकाशनमित्यर्थः।"तुल्यो नेकत्र दक्षिणः" इति रत्नाकरे । भावे ष्यञ् । नायकानां कुलव्रतं कुलाचारवदवश्यं पालनीयमित्यर्थः । तत्तथापि । हे दीर्घाक्षि विशालनेत्रे मालविके । "बहुव्रीहौ सक्थ्यक्ष्णोः" इति समासान्ते षचि" षिद्गौरादिभ्यः" इति ङीष् । मम ये प्राणास्ते कर्तारः त्वदाशानिबन्धनाः तव आशाप्राप्त्याभिलाष एव निबन्धनमाधारो येषां तथाभूताः सन्तीति शेषः। दाक्षिण्याद्यद्यपि तामन्वनयं तथापि त्वमेवास्मात्प्रियेति भावः । पथ्यावक्त्रं वृत्तम् ॥ १४ ॥

१ संश्लेषमाश्लेषम् उपजनयति उत्पादयति करोतीत्यर्थः ॥

२ नाट्येनाभिनयेन परिहरति वर्जयति आश्लेषप्रतिषेधमभिनयतीत्यर्थः ॥

३ नवाङ्गनानां नवीनस्त्रीणां नवोढानामित्यर्थः । मदनविषयावतारः मदनस्य विषये गोचरे अवतारोऽवतरणं प्रवेश इत्यर्थः । मदनबाधानुभव इति भावः । तथा हि रमणीयतां प्रतिपादयति ॥

हस्तं कम्पयते रुणद्धि रशनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ १५ ॥

( ततः प्रविशतीरावती निपुणिका च । )

**इरावती**—हंजे णिउणिए! सच्चं तुमं परिगदत्था चंदिआए। "समुद्दघरआलिंदसइदो अज्जगोदमो दिट्ठो" त्ति ? ॥ ( हञ्जे निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । "समुद्रगृहालिन्दशयित आर्यगौतमो दृष्टः" इति ? ) ॥ १

---

**हस्तमिति** ॥ इयं मालविका कर्त्री । हस्तं कम्पयते चालयति सङ्गमप्रतिषेधाय धूनयतीत्यर्थः । रशनाव्यापारलोलाङ्गुलीः । रशनायाः काञ्च्याः व्यापारे मोचनरूपे कर्मणि लोलाः साभिलाषाः व्यापारिता इति यावत् या अङ्गुल्यः करशाखास्ताः प्रतिरुणद्धि प्रतिबध्नाति । "लोलः स्याद्वाच्यलिङ्गकः । सतृष्ण" इत्यमरः । किंच हठात् बलात्कारेण आलिङ्ग्यमाना सती स्वौ स्वकीयौ हस्तौ कर्मभूतौ स्तनावरणतां स्तनयोः आवरणतामाच्छादनत्वं नयति । हस्ताभ्यां स्तनावावृणोतीत्यर्थः । मे मम पातुं चुम्बितुम् उन्नमयतः उन्नतं कुर्वतः सतः । आननमित्यर्थात्सम्बध्यते । उन्नमयन्तं मामनादृत्येत्यर्थः "षष्ठी चानादरे" इति षष्ठी । पक्ष्मलनेत्रं प्रशस्तानि पक्ष्माण्यक्षिलोमानि सन्त्यत्र तथाभूते नेत्रे यत्र तथाभूतम् । सिध्मादित्वात्प्रशंसायां मत्वर्थे लच् । भयाच्चञ्चलनेत्रमित्यर्थः । आननं मुखं साचीकरोति वक्रीकरोति परावर्तयतीति यावत् । एवं व्याजेन प्रतिषेधच्छलेनापि मे मम अभिलाषपूरणसुखम् अभिलाषस्य सङ्गमेच्छायाः पूरणेन यत्सुखं तन्निर्वर्तयत्येव निष्पादयत्येव । प्रीतिजनकत्वादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१५॥

१ चन्द्रिकयैतन्नामया दास्या । परिगतार्था परिगतो ज्ञापितोऽर्थो

निपुणिका—अण्णहा कहं भट्टिणीए विण्णावेमि ॥ ( अन्यथा कथं भट्टिन्यै विज्ञापयामि ) ॥ १

इरावती—तेण हि तहिं एव्व गच्छह्म संसआदो मुत्तं पिअवअस्सं पुच्छिदुं अ ॥ ( तेन हि तत्रैव गच्छामः संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च ) ॥ २

निपुणिका—सावसेसं विअ भट्टिणीए वअणम् ॥ ( सावशेषमिव भट्टिन्या वचनम् ) ॥ ३

इरावती—अण्णं च चित्तगदं अज्जउत्तं पसादइदुम् ॥ ( अन्यच्च चित्रगतमार्यपुत्रं प्रसादयितुम् ) ॥ ४

निपुणिका—अह दाणिं कहं णु भट्टा एव्वं अणुणीअदि ॥ ( अथेदानीं कथं नु भर्तैवमनुनीयते ) ॥ ५

---

वृत्तं यस्यै तथाभूता । अर्थमनुवदति । समुद्रेति । समुद्रगृहस्य जलयन्त्रगृहस्य अलिन्दे द्वारस्य बाहिःप्रकोष्ठे शयितः सुप्तः । इतीत्यनुवादसमाप्तौ ॥

१ अन्यथा अर्थस्य ज्ञापनाभावे ॥

२ संशयात्सर्पदंशेनोद्भूतान्मरणसंशयान्मुक्तं निर्गतम् । प्रियवयस्यं प्रियस्य राज्ञो वयस्यं प्रियमित्रं वा ॥

३ सावशेषम् । चकारप्रयोगादन्यदपि कर्तव्यमस्तीति गम्यत इति अवशेषेण सहितम् ॥

४ चित्रगतं चित्रवर्तिनमेव न तु प्रत्यक्षम् । आर्यपुत्रं राजानम् । प्रसादयितुम् अनुनेतुं गच्छाम इत्यनेन सम्बन्धः ॥

५ एवमनेन प्रकारेण कथं किमर्थम् । चित्रगत एव कथं प्रसाद्यत इत्यर्थः ॥

इरावती–मुग्धे ! जारिसो चित्तगदो तारिसो एव्व अण्णसंकंतहिअओ अज्जउत्तो । केवलं उवआरादिक्कमं पमज्जिदु अअं आरंभो ॥ ( उभे परिक्रामतः । ) ( मुग्धे ! यादृशश्चित्रगतस्तादृश एवान्यसंक्रान्तहृदय आर्यपुत्रः । केवलमुपचारातिक्रमं प्रमार्ष्टुमयमारम्भः ) ॥ १

चेटी–( प्रविश्य ) जेदु जेदु भट्टिणी॥भट्टिणि!देवी भणादि। "ण मे मच्छरस्स एसो कालो। तेण खु बहुमाणं वड्ढेदुं वअस्साए सह णिअलबंधणे किदा मालविआ॥जइ अणुमण्णेसि अजउत्तस्स पिअं कादुं तहा करेमि । जं तुह इच्छिअं तं मे भणाहि" त्ति ॥ ( जयतु जयतु भट्टिनी । भट्टिनि ! देवी भणति । "न मे मत्सरस्यैष कालः । तेन खलु बहुमानं वर्धयितुं वयस्यया सह निगडबन्धने कृता मालविका । यद्यनुमन्यसे आर्यपुत्रस्य प्रियं कर्तुं तथा करोमि । यत्तवेष्टं तन्मे भण " इति ) ॥ २

---

१ मुग्धे अनभिज्ञे । अन्यसंक्रान्तहृदयः अन्यस्यां मद्भिन्नायां संक्रान्तं सक्तं हृदयं यस्य तादृशः यथाऽस्य चित्रे मत्सामीप्यात्त्रभावोदयस्तथैव परसंक्रान्तहृदये तस्मिन्नपीति साम्याच्चित्रमेवानुनीयत इत्यर्थः । उपचारातिक्रमम् उपचारस्य मत्कर्तृकसेवनरूपस्य अतिक्रमम् उल्लङ्घनं भर्तुरुपेक्षारूपं प्रमार्ष्टुं क्षालयितुम् अपनेतुमित्यर्थः । आरम्भः उद्योगः । चित्रगतराजानुनयरूपः ॥

२ देवी धारिणी भणति वदति । नम इत्यारभ्येतीत्यन्तो धारिणीवचनस्यानुवादः । मत्सरस्य त्वया सह द्वेषस्य नैष कालो नायमवसरः । बहुमानं तवेति शेषः । वयस्यया सख्या बकुलावलिकया । अनुमन्यसे अनुमोदसे । तथा तवानुमोदनस्यानुरूपं राज्ञः प्रियम् ॥

**इरावती**—णाअरिए ! विण्णावेहि देवीं । " काओ वअं भट्टिणीं णिओजेदुम् । परिअणणिग्गहेण दंसिदो मइ अणुग्गहो । कस्स वा पसाएण अअं जणो वड्ढदि" त्ति ॥ ( नागरिके ! विज्ञापय देवीम् । "का वयं भट्टिनीं नियोजयितुम् । परिजननिग्रहेण दर्शितो मय्यनुग्रहः । कस्य वा प्रसादेनायं जनो वर्धते" इति ) ॥ १

**चेटी**—तहा ॥ ( इति निष्क्रान्ता ) ( तथा ) ॥

**निपुणिका**—( परिक्रम्यावलोक्य च ) ( एसो दुवारे समुद्दगेहअस्स विपणिगदो विअ वुसओ गोदमो आसीणो एव्व णिद्दाअदि ॥ ( एष द्वारे समुद्रगृहस्य विपणिगत इव वृषभो गौतम आसीन एव निद्रायते ) ॥ २

**इरावती**—अच्चाहिदम् । ण खु सावसेसो विसविआरो हवे ॥ ( अत्याहितम् । न खलु सावशेषो विषविकारो भवेत् ) ॥ ३

---

१ भट्टिनीं राजभार्यां त्वामित्यर्थः । " भट्टिनी द्विजभार्यायां नात्योक्तौ राजयोषिति । " इति मेदिनी । नियोजयितुम् अस्मत्कर्मणि व्यापारयितुं का वयम् ? न का अपि कनीयस्त्वादनधिकारिण्य इत्यर्थः । परिजनस्य मालविकालक्षणस्य निग्रहेण कारानिक्षेपरूपेण निरोधेन । मयि मद्विषयकः अनुग्रहः दर्शितः प्रकटीकृतस्त्वयेति शेषः । अयं जनो मत्स्वरूपः । प्रसादेनानुग्रहेण वर्धते । नान्यस्य कस्यापि किंतु तवैव प्रसादेनेत्यर्थः ॥

२ समुद्रगृहस्य जलयन्त्रगृहस्य द्वारे । गौतमः विदूषकः । विपणिगतः पण्यवीथिकावर्ती वृषभ इव । आसीन एव उपविशन्नेव न तु शयानः । निद्रायते निद्रामनुभवति । आसीन इत्यत्र लटः शानचि " इदास " इतीत् ॥

३ अत्याहितं महाभीतिः । खलु जिज्ञासायाम् । सावशेषः

निपुणिका—पसण्णमुहवण्णो दीसइ । अवि अ धुवसिद्धिणा चिइच्छिदो । ता से असंकणिज्जं पावम् ॥ ( प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्याशङ्कनीयं पापम् ) ॥ १

विदूषकः—( उत्स्वप्नायते ) भोदि मालविए ! ॥ ( भवति मालविके ! ) ॥ २

निपुणिका—सुदं भट्टिणीए ? कस्स एसो अत्तणिओअसंपादणे विस्ससणिज्जो हदासो । सव्वकालं इदो एव्व सोत्थिवाअणमोदएहिं कुच्छिं पूरिअ संपदं मालविअं सिविणावेदि ॥ ( श्रुतं भट्टिन्या ? कस्यैष आत्मनियोगसम्पादने विश्वसनीयो हताशः । सर्वकालमित एव स्वस्तिवाचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायते ) ॥ ३

---

अवशेषेण सहितः साकल्येनाप्रशान्त इत्यर्थः । विषविकारो विषबाधा । अवशिष्टा वास्य विषबाधेति जिज्ञास इति भावः ॥

१ निपुणिका शङ्कां परिहरति । प्रसन्नेति । प्रसन्नः अम्लानः मुखवर्णो वदनकान्तिर्यस्य तथाभूतः । विषबाधायां सत्यां वैवर्ण्यमवश्यं भावि तदभावाच्च नावशिष्टो विषविकार इति भावः । किं च ध्रुवसिद्धिना प्रसिद्धराजवैद्येन चिकित्सितः अपनीतव्याधिः । तेन नैव शङ्कावसर इति भावः । पापममङ्गलं मृत्युरिति यावत् । अशङ्कनीयं शङ्कितुमयोग्यम् ॥

२ निद्रितस्य मुखाद्यत्स्वप्नगतं वृत्तमविदितमेव निःसरति तदुत्स्वप्नायितमित्युच्यते ॥

३ अयं हताशो दुरभिलाषो विदूषकः आत्मनियोगसम्पादने आत्मनः स्वस्य नियोगस्य कार्यस्य सम्पादने निष्पादने विषये

---

१ ' आवडणें ' इति भाषायाम् ।

**विदूषकः**—इरावदीं अदिक्कमंदी होहि ॥ ( इरावतीमतिक्रामन्ती भव ) ॥ १

**निपुणिका**—एदं अच्चाहिदम् । इमं भुअंगभीअं बम्हबंधुं इमिणा भुअंगकुटिलेण दंडकट्ठेण खंभंतरिदा भाआइस्सम् ॥ (एतदत्याहितम् । इमं भुजङ्गभीतं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेन दण्डकाष्ठेन स्तम्भान्तरिता भाययिष्यामि ) ॥ २

**इरावती**—अरिहदि किदग्घो उवद्दवस्स ॥ ( अर्हति कृतघ्न उपद्रवस्य ) ॥ ३

( निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति । )

**विदूषकः**—( सहसा प्रबुध्य ) अविहा अविहा । भो वअस्स ! सप्पो मे उवरि पडिदो ॥ ( अपिहा अपिहा । भो वयस्य! सर्पो म उपरि पतितः ) ॥ ४

---

कस्य नियोक्तुः विश्वसनीयो विश्वासार्हः । इतः त्वत्त एवेत्यर्थः । स्वस्तिवाचनमोदकैः पुण्याहवाचने प्रदत्तैर्वायनरूपैः खाद्यैः । कुक्षिम् उदरम् । पूरयित्वा मोदकान्भुक्त्वेत्यर्थः । साम्प्रतमधुना ॥

१ अतिक्रामन्ती अतिशयाना इरावत्यपेक्षयाऽधिकप्रभुत्ववतीत्यर्थः ॥

२ अत्यहितम् अतिशयेनाहितकरम् । भुजङ्गभीतं सर्पाद्भीतम् । ब्रह्मबन्धुं दुर्ब्राह्मणम् । भुजङ्गकुटिलेन सर्पवद्वक्रेण । दण्डकाष्ठेन यष्टिदारुणा भाययामि भीतं करोमि । भियो णिच् । भीतेर्हेतुजन्यत्वाभावान्न षुक् । नाप्यात्मनेपदम् । स्तम्भान्तरिता स्तम्भेन अन्तरिता गूढा ॥

३ उपद्रवस्य पीडायाः । अर्हति योग्यो भवति । अत्र हेतुः कृतघ्नः कृतमुपकारं हन्ति तथाभूतः ॥

४ अपि हेति दुःखे ॥

**राजा**–( सहसोपसृत्य ) न भेतव्यं न भेतव्यम् ॥

**मालविका**–( अनुसृत्य ) भट्टा ! मा दाव सहसा णिक्कम सप्पो त्ति भणीअदि ॥ ( भर्तः ! मा तावत्सहसा निष्क्रम सर्प इति भण्यते ) ॥ १

**इरावती**–हद्धि हद्धि । भट्टा इदो एव्व धावदि ॥ ( हा धिक् हा धिक् । भर्तैत एव धावति )॥

**विदूषकः**–( सप्रहासम् ) कहं । दंडकट्ठं एदं । अहं उण जाणे । ज मए केदईकंटणहिं दंसं करिअ सप्पस्स उवरि अअसो किदं तं मे फलिदं त्ति ॥ ( कथम् । दण्डकाष्ठमेतत् । अहं पुनर्जाने । यन्मया केतकीकण्टकैर्दंशं कृत्वा सर्पस्योपर्ययशः कृतं तन्मे फलितम् ) ॥ २

( प्रविश्य पटाक्षेपेण )

---

१ तावत्सत्वरम् । सहसा अकस्मात् अविमृश्येति यावत् । निष्क्रम निर्गच्छ । अत्र हेतुः । सर्प इतीति । भण्यते उच्यते । विदूषको हि द्वारे रक्षणाय नियोजितः स च भवन्तमवधापयितुं पर्यायेणाप्येवं वक्ष्यति । तथा च अनभीष्टतामात्रसादृश्यात्सर्पशब्द इरावत्या अपि लक्षकः स्यादिति भावः ॥

२ कथमिति विस्मये । जाने ज्ञातवानित्यर्थः । वर्तमानसामीप्ये भूते लट् । सर्पस्योपरि अयशः ब्राह्मणदंशरूपा दुष्कीर्तिः कृता आरोपिता । सर्पो मे दष्ट इत्यभिहितमिति भावः । तत् मे कृत्यं मे मह्यं मदर्थमित्यर्थः । फलितं सञ्जातफलम् । इत जाने इत्यनेन संबन्धः । तस्येदं फलमुपनतमिति भावः ॥

**बकुलावलिका**—मा दाव भट्टा पविसदु । इह कुटिलगई सप्पो विअ दीसई॥(मा तावद्भर्ता प्रविशतु । इह कुटिलगतिः सर्प इव दृश्यते ) ॥ १

**इरावती**—( राजानं सहसोपसृत्य ) अवि णिविग्घमणोरहो दिवासंकेदो मिहुणस्स ॥ ( अपि निर्विघ्नमनोरथो दिवासंकेतो मिथुनस्य ) ॥ २

( सर्वे इरावतीं दृष्ट्वा सम्भ्रान्ताः । )

**राजा**—प्रिये ! अपूर्वोऽयमुपचारः ॥ ३

**इरावती**—बउलावलिए ! दिट्ठिआ दुचाहिआरविसआ संपुण्णा दे पइण्णा ॥ ( बकुलावलिके ! दिष्ट्या दूत्यभिसारविषया संपूर्णा ते प्रतिज्ञा ॥ ४

---

१ कुटिलगतिः वक्रगतिः । असरलप्रवृत्तिश्च । सर्पः । सूचकमिदं वाक्यम् इरावत्याः असरलप्रवृत्तित्वात् । इरावतीवात्र दृश्यत इति भावः ॥

२ मिथुनस्य स्त्रीपुंसयोर्मालविकानृपयोर्युवयोरित्यर्थः । दिवासंकेतः दिवस एवोपभोगस्य स्थलम् । निर्विघ्नमनोरथः निर्विघ्नः प्रतिबन्धशून्यः मनोरथः उपभोगरूपो यत्र तादृशः । अपीति प्रश्ने । अपि मालविकां सुखेनोपभुक्तवानसीत्यर्थः ॥

३ अयम् उपचारः संमानना पद्धतिः अपूर्वः पूर्वमननुभूतः । नवीन इत्यर्थः । दृष्टमात्रे हि प्रिये स्वागतं प्रष्टव्यं तच्चापहाय यदेवं त्वया पृष्टं सेयं नवीना शैलीत्यर्थः ॥

४ दूत्यभिसारविषया दूत्या अभिसारः विषय उद्देश्यं यत्र तथाभूता । मालविकार्थं राजानमभिसारयामि इति तव प्रतिज्ञा संपूर्णा सफलीभूतत्वात्समाप्तेति दिष्ट्या तेन मे हर्ष इति भावः । विपरीतलक्षणा । नायको नायिका वा नायिकां नायकं वोद्दिश्य

**बकुलावलिका**—पसीददु भट्टिणी । किं मए किदं त्ति देवो पुच्छिदव्वो । दद्दुरा वाहरंति त्ति किं देवो पुहवीए वरिसिदुं सुमरेदि ॥ ( प्रसीदतु भट्टिनी । किं मया कृतमिति देवः प्रष्टव्यः । दर्दुरा व्याहरन्तीति किं देवः पृथिव्यां वर्षितुं स्मरति ) ॥ १

**विदूषकः**—मा दाव । भोदीए दंसणमेत्तेण अत्तभवं पणिवादलंघणं विसुमरिदो तुमं उण अज्जवि पसादं ण गण्हसि ॥ ( मा तावत् । भवत्या दर्शनमात्रेणात्रभवान्प्रणिपातलङ्घनं विस्मृतः । त्वं पुनरद्यापि प्रसादं न गृह्णासि ) ॥ २

**इरावती**—कुविदा दाणिं अहं किं करिस्सम् ॥ ( कुपिताप्यहं किं करिष्यामि ) ॥ ३

**राजा**—एवमेतत् । अस्थाने कोप इत्यनुपपन्नं त्वयि ॥ ४

---

रत्तार्थिनो यत्संकेतस्थलं प्रयान्ति सोऽयम् अभितः प्रियजनसमीपतः सरणाद्गमनादभिसार इत्युच्यते ॥

१ दर्दुरा भेकाः व्याहरन्ति शब्दायन्त इति हेतोरेव किं पृथिव्यां वर्षितं वृष्टिं कर्तुं स्मरति । अपि तु नात्र दर्दुराणां कश्चित्संबन्धः किंतु महेन्द्रस्य स्वेच्छानुसारित्वात्स एव यथाभिलाषं वर्षतीति भावः । यथा मण्डूकशब्देन शक्रो न वर्षति । तथा मदनुबन्धेन नृपो मालविकां न परिग्रहिष्यतीति भावः । देव इन्द्रः । मण्डूकशब्देन वर्षणं लोकवादः ॥

२ इरावतीं प्रतीयमुक्तिः । मा तावत् मैवमित्यर्थः । अत्रभवान् राजा प्रणिपातलङ्घनं स्वकृतप्रणामस्य त्वत्कृतमतिक्रमम् । विस्मृतः । प्रसादं संतोषम् । न गृह्णासि नाङ्गीकरोषि । अयुक्तमिदमित्यर्थः ॥

३ न किंचिदपि करिष्यामि सामर्थ्याभावादितीरावत्या आशयः। कोपस्यायुक्तत्वेन शासनायोग्यत्वादिति राज्ञः ॥

४ एवमेतत् यत्त्वयोक्तं तत्सत्यमित्यर्थः । अस्थाने

कदा मुखं वरतनु कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ १५ ॥

इरावती—अत्थाणे त्ति सुट्ठ अवधारिदं अज्जउत्तेण । अण्णसंकंतेसु अम्हाणं भाअधेएसु जइ उण कुप्पेअं णं अहं हस्सा भवे ॥ ( अस्थान इति सुष्ठ्ववधारितमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयं नन्वहं हास्या भवेयम् )॥ १

---

कारणं विना कोप इत्येतत्त्वय्यनुपपन्नम् अयुक्तम् ॥

कदेति ॥ हे वरतनु वरा श्रेष्ठा तनुः शरीरं यस्याः तथाभूते इरावति । तव मुखं कर्तृ । कारणादृते कारणं विना । "अन्यारात्" इति पञ्चमी । कदा कस्मिन्काले क्षणमपि अल्पकालमपि । कोपपात्रतां कोपास्पदत्वम् आगतं प्राप्तम् । न कदापीत्यर्थः ।अत्र दृष्टान्तमाह। विभावरी रात्रिः कर्त्री । अपर्वणि पूर्णिमाप्रतिपदोः सन्धिः पर्व तद्भिन्ने काले । ग्रहकलुषेन्दुमण्डला ग्रहेण उपरागेण कलुषं मलिनम् इन्दुमण्डलं चन्द्रबिम्बं यस्यां तथाभूता । कथं भविष्यति न कथमपीत्यर्थः । यथा रात्रेर्मुखायमानस्य चन्द्रस्य अपर्वणि ग्रहणकालुष्यं न तथा तव मुखस्यापि कारणं विना कोपारक्तत्वं न भवतीत्यर्थः । दृष्टान्तालङ्कारः । "दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।" इत्युक्तेः । रुचिरा वृत्तम् । "जभौ सजौ गिति रुचिरा चतुर्ग्रहैः" इति लक्षणात् ॥ १५ ॥

१ सुष्ठु योग्यम् अवधारितं निश्चितम् । अस्थानतां प्रतिपादयति । भागधेयेषु दैवसदृशे त्वयीत्यर्थः । अन्यसंक्रान्तेषु नायिकान्तरासक्तेषु सत्सु । हास्या उपहासयोग्या "ऋहलोः" इति ण्यत् ॥

राजा--त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोप-स्थानं न पश्यामि । कुतः ॥ १

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धुम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ १६ ॥

इरावती-णिउणिए ! गच्छिअ देवीं विण्णवेहि । दिट्ठो भवदीए पक्खवादो णं अज्ज त्ति ॥ ( निपुणिके ! गत्वा देवीं विज्ञापय। दृष्टो भवत्याः पक्षपातो नन्वद्येति ) ॥ २

निपुणिका-तहा ॥ ( इति निष्क्रान्ता ) ( तथा ) ॥

विदूषकः-( अपवार्य ) अहो ! अणत्थो संपडिदो।बंधण-ब्भट्ठो गिहकवोदो बिडालिआए आलोए पडिदो ॥ ( अहो ! अनर्थः सम्पतितः । बन्धनभ्रष्टो गृहकपोतो बिडालिकाया आलोके पतितः ) ॥ ३

---

१ अथवा विपरीतत्वेन कल्पयसि संभावयसि । कारणाभावात्कोपोऽनुचित इति राज्ञ आशयो हास्यास्पदत्वात्कोपोऽनुचित इति राज्ञ्या विपर्यासित इत्यन्यथा कल्पनम् । कोपस्थानं क्रोधस्थलम् ॥

नार्हतीति ॥ कृतापराधः कृतः अपराधस्त्वत्समक्षं मया सह भाषणरूपो येन तथाभूतोऽपि परिजनः सेवकः कर्मभूतो बन्धुं निगडेन संयन्तुं नार्हति न युक्तो भवति । इति हेतोः मया राज्ञा कर्त्रा एते बकुलावलिकामालविके मोचिते बन्धादिति शेषः । च मां प्रणिपतितुं नमस्कर्तुम् उपगते प्राप्ते । अतोऽन्यथा कल्पनेनाल-मिति भावः । आर्याजातिः ॥ १६ ॥

२ भवत्याः त्वत्कर्तृकः पक्षपातः मत्पक्षानुवृत्तिः दृष्टः प्रत्यक्षीकृतः अद्य मालविकया राज्ञः संगमनदिवसे । तेन विपरीतलक्षणया । मम विरुद्धं भवत्याऽनुष्ठितमित्यर्थः ॥

३ अनर्थः सङ्कटं संपतितः प्राप्तः । कः स इत्याह । बन्धनभ्रष्टः

निपुणिका-( प्रविश्यापवार्य ) भट्टिणि ! जदिच्छादिट्ठाए माहविहाए आचक्खिदं । एव्वं खु एदं णिव्वुत्तं त्ति ॥ ( इति कर्णे कथयति । ) ( भट्टिनि ! यदृच्छादृष्टया माधविकयाऽऽख्यातम् । एवं खल्विदं निर्वृत्तमिति ) ॥ १

इरावती-उववण्णं । सच्चं अअं एत्थ बम्हबंधुणा किदो पओओ । ( विदूषकं विलोक्य ) इअं इमस्स कामतंतसचिवस्स णीदी ॥ ( उपपन्नम् । सत्यमयमत्र ब्रह्मबन्धुना कृतः प्रयोगः । इयमस्य कामतन्त्रसचिवस्य नीतिः ) ॥ २

---

बन्धनान्मुक्तः गृहकपोतः गृहे पालितः कपोतः पक्षिविशेषः । बिडालकाया मार्जार्याः आलोके दर्शने पतितः । दर्शनविषयीभूत इत्यर्थः । " आलोकौ दर्शनद्योतौ " इत्यमरः। यथा बन्धनान्मुक्तो गृहकपोतो मार्जार्या द्रष्टव्यस्तथा मालविकेरावत्या दृष्टेति भावः । अयमेवानर्थः ॥

१ यदृच्छया हेतुमन्तरा दृष्टया । माधविकया सारभाण्डगृहे नियोजितया धारिण्याः दास्या । आख्यातं कथितम् । एवम् अनेन प्रकारेण खलु निश्चयेन इदं मालविकामोचनं निर्वृत्तं निष्पन्नम् । विदूषकेण च्छद्मनेयं मोचितेति कर्णे कथितम् । इति आख्यातमिति संबन्धः ॥

२ उपपन्नं युक्तमिदमित्यर्थः। ब्रह्मबन्धुना दुर्ब्राह्मणेन विदूषकेण। अत्र मालविकामोचनप्रकरणे प्रयोगो युक्तिः कृतः । कामतन्त्रसचिवस्य कामो मदनस्तन्त्रं नियामको तस्य राज्ञः सचिवस्य सहायस्य । यद्वा कामतन्त्रे कामशास्त्रे सचिवसदृशस्य ॥

---

१ ' कवडा ' इति भाषाम् ।

विदूषकः—भोदि ! जदि णीदिगदं एक्कं वि अक्खरं पढेअं। णं मए अत्तभवं पेसिदो हवे ॥ ( भवति ! यदि नीतिगतमेकमप्यक्षरं पठेयम् । ननु मयात्रभवान्प्रेषितो भवेत् ) ॥ १

राजा—( आत्मगतम् ) कथं नु खल्वस्मात्सङ्कटादात्मानं मोचयिष्यामि ॥ २

( प्रविश्य )

जयसेना—देव ! कुमारी वसुलच्छी कंदुअं अणुधावंदी पिंगलवाणरेण वलीअं तासिदा अंकणिसण्णा देवीए पवादकिसलअं विअ वेपमाणा ण किं वि पकिदीं पडिपज्जइ ॥ ( देव ! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलवत्त्रासिता अङ्कनिषण्णा देव्याः प्रवातकिसलयमिव वेपमाना न किमपि प्रकृतिं प्रतिपद्यते ) ॥ ३

१ भवति राज्ञि । यदि नीतिगतं नीतिशास्त्रवर्ति । पठेयं वाचयेयम् । तदेत्यर्थात् । मया विदूषकेण अत्रभवान् राजा प्रेषितो मालविकासङ्गमनाय विसर्जितः अत्रेति शेषः । तदेव नास्तीति नात्र मया प्रेषितो राजेति भावः ॥

२ अस्मात् इरावतीरूपात् सङ्कटात्पीडाया इरावतीलक्षणायाः सकाशान्मोचयिष्यामि मुक्तं करिष्यामि ॥

३ कुमारी बालिका । वसुलक्ष्मीः राज्ञः पुत्री । कन्दुकं गेन्दुकम् अनुधावन्ती अनुसृत्य वेगेन गच्छन्ती "पाघ्राध्मा" इति सरतेर्धौरादेशः । पिङ्गल इति वानरनाम । वलवत् अतिशयितं त्रासिता भीतियुक्ता कृता । देव्या धारिण्याः अङ्के उत्सङ्गे निषण्णा उपविष्टा । प्रवातकिसलयमिव प्रकृष्टवाते स्थले वर्तमानं किसलयं पल्लव-

१ 'चेंडू' इति भाषायाम् ।

राजा—कष्टं कष्टम् । कातरो बालभावः ॥ १

इरावती—( सावेगम् ) तुवरदु अज्जउत्तो णं समासासिदुं । मा से संतासजणिदो विआरो वड्ढदु ॥ ( त्वरतामार्यपुत्र एनां समाश्वासयितुम् । माऽस्याः सन्त्रासजनितो विकारो वर्धताम् )॥ २

राजा—अयमहमेनां संज्ञापयामि ॥ ( इति सत्वरं निष्क्रामति । ) ॥ ३

विदूषकः—साहु रे पिंगलवाणर ! साहु । परित्तादो तुए सवक्खो ॥ ( साधु रे पिङ्गलवानर ! साधु । परित्रातस्त्वया सपक्षः ) ॥ ४

( निष्क्रान्तो राजा विदूषकश्च । इरावती निपुणिका प्रतिहारी च । )

---

मिव वेपमाना कम्पमाना । किमपि किञ्चिदपि प्रकृतिं मोहाभावं न प्रतिपद्यते न प्राप्नोति । मूर्च्छामिदानीमनुभवतीत्यर्थः ॥

१ कष्टं दुःखमिदमापतितमित्यर्थः । इदं च शालिनीवृत्तैकदेशमयं वृत्तगन्धि गद्यम् । बालभावः बालानां प्रकृतिः बाल्यं वा । कातरः अधीरः ॥

२ त्वरतां त्वरां करोतु संत्रासजनितो भयेनोत्पन्नो विकारो व्यथा मा वर्धतां नाधिको भवतु ॥

३ संज्ञापयामि प्राप्तसंज्ञां करोमि । संज्ञा चेतना । "ज्ञा नियोगे" इति चौरादिकाल्लट् मित्त्वाभावान्न ह्रस्वः । अनेकार्थत्वाच्चेतनायां वृत्तिः । " अर्तिह्री " इति पुक् ॥

४ सपक्षः मत्पक्षीयो राजेत्यर्थः । "समानस्य च्छन्दसि" इत्यत्र योगविभागात्सपक्ष इति काशिका । यद्वा चापलकारित्वात्त्वत्सदृश इत्यर्थः हासोक्तिः

मालविका—हला ! देवीं चिंतिअ वेवदि मे हिअअं । ण जाणे अदो वरं किं वा अणुहविदव्वं हुविस्सदि त्ति ॥ ( हला ! देवीं चिन्तयित्वा वेपते मे हृदयम् । न जानेऽतः परं किं वाऽनुभवितव्यं भविष्यतीति ) ॥ १

( नेपथ्ये )

अच्चरिअं अच्चरिअं। अपुण्णे एव्व पंचरत्ते दोहलस्स मुउलेहिं संणद्धो तवणीआसोओ । जाव देवीए णिवेदेमि ॥ (आश्चर्यमाश्चर्यम् । अपूर्ण एव पञ्चरात्रे दोहदस्य मुकुलैः संनद्धस्तपनीयाशोकः । यावद्देव्यै निवेदयामि )॥ २

( उभे श्रुत्वा प्रहृष्टे । ) ३

बकुलावलिका—आस्ससिदु सही । सच्चप्पइण्णा देवी ॥ ( आश्वसितु सखी । सत्यप्रतिज्ञा देवी ) ॥ ४

---

१ हला सखि । वेपते भयात्कम्पते । यदीदं वृत्तं देवी ज्ञास्यति तदा महीयाननर्थः संभविष्यतीति भयहेतुः । तदेवाह । न जान इति । अतः परमित उत्तरकाले । अनुभवितव्यम् अनुभवितुं योग्यं मयेति शेषः । इति न जान इति संबन्धः ॥

२ आश्चर्यम् आश्चर्यकारकं वृत्तमित्यर्थः। किं तदित्याह। अपूर्ण इति । दोहदस्य अशोके पादताडनरूपस्य मालविकाकृतस्य पञ्चरात्रे पञ्चानां रात्रीणां समूहे । " अहःसर्वैकदेशसंख्या " इति समासान्तेऽचि " संख्यापूर्वं रात्रं क्लीबम् " इति क्लीबत्वम् । अपूर्णे असमाप्ते सत्येव। तपनीयाशोकः पीताशोकः मुकुलैः कोरकैः सन्नद्धः सम्पन्नः संवृत इति यावत् ॥

३ प्रहृष्टे आनन्दिते स्त इत्यर्थः ॥

४ आश्वसितु धीरा भवतु । अत्र हेतुः । सत्यप्रतिज्ञेति । देव्या युक्तं यद्यशोकः पञ्चरात्राभ्यन्तरे मुकुलैः सम्पत्स्यते तदा त

मालविका—तेण हि पमदवणपालिआए पिट्ठदो होमि ॥ (तेन हि प्रमदवनपालिकायाः पृष्ठतो भवामि) ॥ १

बकुलावलिका—तहा ॥ (इति निष्क्रान्ते) (तथा) ॥

## इति चतुर्थोऽङ्कः

# अथ पञ्चमोऽङ्कः ।

(ततः प्रविशत्युद्यानपालिका ।)

उद्यानपालिका—उवक्खित्तो मए किदसक्कारविहिणो तवणीआसोअस्स वेदिआवंधो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । (परिक्रम्य) अहो दैवस्स अणुकंपणीआ मालविआ । तस्सिं तह चंडिआ देवी इमिणा असोअकुसुमवुत्तंतेण पसादसुमुही हुविस्सदि । कहिं णु खु देवी हवे । (विलोक्य) अम्भो! एसो देवीए परिअणंतरो किं वि जतुमुद्दालच्छिदं मंजूसं गेण्हीअ चउस्सालादो कुज्जो णिक्कामदि । पुच्छिसं दाव णम् ॥ (उपक्षिप्तो मया कृतसत्कारविधेस्तपनीयाशोकस्य वेदिकाबन्धः ।

---

उचितं पुरस्कारं दास्यामीति । तच्चेदानीं प्राप्तावसरं देव्यात्मनः सत्यप्रतिज्ञत्वान्न परिहरिष्यतीत्याश्वासे हेतुः ॥

३. [प्रमद]वनपालिकायाः राज्ञोऽन्तःपुरोद्यानस्य रक्षिकाया दास्याः पृष्ठतो भवामि पश्चाद्गच्छामीत्यर्थः ॥

इति श्रीमदप्पाशर्मणा विरचितायां मालविकाग्निमित्रव्याख्यायां बालबोधिन्याख्यायां चतुर्थोऽङ्कः ।

यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डिका देव्यनेनाशोककुसुमवृत्तान्तेन प्रसादसुमुखी भविष्यति । क्व नु खलु देवी भवेत् । अम्भो ! एष देव्याः परिजनान्तरः किमपि जतुमुद्रालाक्षितां मञ्जूषां गृहीत्वा चतुःशालात्कुब्जो निष्क्रामति । प्रक्ष्यामि तावदेनम् ) ॥ १

( ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः । )

उद्यानपालिका—सारस ! कहिं पत्थिदोसि? ॥ (सारस ! कुत्र प्रस्थितोऽसि ? ) ॥

---

१ कृतसत्कारविधेः कृतः सत्कारसंबन्धी विधिः रङ्गवल्यादिरूपो यस्य तथाभूतस्य । तपनीयाशोकस्य पीताशोकस्य । वेदिकाबन्धः वेदिकारचना उपक्षिप्तः कल्पितः कृत इत्यर्थः । यावत् सत्वरम् । अनुष्ठितः कृतो नियोग आदिष्टकार्यं येन तथाभूतमात्मानं मामित्यर्थः । देव्यै धारिण्यै निवेदयामि कथयामि । अनुष्ठितो मया ते नियोग इति देवीं कथयामीत्यर्थः । अहो प्रशंसायाम् । दैवस्य भाग्यस्य अनुकम्पनीया दयार्हा । दैवेनास्यां दया प्रदर्श्यत इत्यर्थः । अनुकम्पामेवाह । तस्यामिति । तस्यां मालविकायां तथा तेन प्रकारेण कारावन्धरूपेण चण्डिका अत्यन्तकोपना । अशोककुसुमवृत्तान्तेन अशोकः कुसुमित इति वार्तया । तस्यां प्रसादसुमुखी अनुग्रहोन्मुखी । नु खल्विति वितर्के । अम्भो इति हर्षे । परिजनान्तरः सेवकविशेषः । कुब्जः[२] कर्ता । किमपि कस्मायाप्यर्थायेति यावत् । जतुमुद्रालक्षितां जतुनो लाक्षायाः मुद्रया[३] लक्षितां चह्नितां मञ्जूषां पेटिकाम्[४] । चतुःशालात् सञ्जवनात् निष्क्रामति निर्गच्छति । तावत् एवार्थे । एनमेवेत्यर्थः ॥

---

१ 'कट्टा, पार' २ 'कुबडा' ३ 'मोहरबंदी' ४ 'चौसोपी' इति भाषायाम् ।

सारसः—महुअरिए ! विज्जाचरिआणं बम्हणाणं णिच्चदक्खिणं मासिईं पुरोहिदस्स हत्थं पावइस्सम् ॥ (मधुकरिके ! विद्याचरितानां ब्राह्मणानां नित्यदक्षिणां मासिकीं पुरोहितस्य हस्तं प्रापयिष्यामि ) ॥ १

मधुकरिका—अह किं णिमित्तम् ? ॥ ( अथ किं निमित्तम् ? ) ॥ २

सारसः—जद प्पहुदि सेणावदिजण्णतुरंगक्खणे णिउत्तो भट्टिदारओ वसुमित्तो तदप्पहुदि तस्स आउसणिमित्तं णिक्कसदसुवण्णपरिमाणं दक्खिणं देवी दक्खिणीएहिं परिग्गाहेदि ॥ ( यतः प्रभृति सेनापतियज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारको वसुमित्रस्ततः प्रभृति तस्यायुर्निमित्तं निष्कशतसुवर्णपरिमाणां दक्षिणां देवी दक्षिणीयैः परिग्राहयति ) ॥ ३

---

१ मधुकरिकेति उद्यानपालिकायाः नाम । विद्याचरितानां विद्यैव चरितं जीविका येषां तेषां ब्राह्मणानां ब्राह्मणार्थमित्यर्थः । अश्वघासादिवत् षष्ठी । नित्यदक्षिणां प्रतिदिनदेयां मासिकीं मासस्येमां मासपर्याप्तामित्यर्थः । " कालाट्ठञ् " इति ठञि " डिड्ढाण् " इत्यादिना ङीप् । पुरोहितस्य पुरोधाः । धर्मे राज्ञः सहायः । " ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे । " सहाया इत्यनुवृत्तिः । इति दर्पणे ॥

२ अथ प्रश्ने । किन्निमित्तं किमर्थम् ॥

३ सेनापतियज्ञतुरङ्गरक्षणे सेनापतेः पुष्पमित्रसंज्ञस्य यो यज्ञोऽश्वमेधः तत्संबन्धी यस्तुरङ्गोऽश्वस्तद्रक्षणे नियुक्तोऽधिकृतः भर्तृदारको राजकुमारः वसुमित्रसंज्ञः । तस्य वसुमित्रस्य आयुर्निमित्तं आयुः निमित्तं हेतुर्यत्र कर्मणि तद्यथा तथा । आयुर्वृद्ध्यर्थमित्यर्थः ।

मधुकरिका—अह कहिं देवी ? किं वा अणुचिट्ठदि ? ॥ ( अथ कुत्र देवी ? किं वाऽनुतिष्ठति ? ) ॥

सारसः—मंगलघरे आसणत्था भविअ विदब्भविसअ दो भादुणा वीरसेणेण पेसिदं लेहं लेहकरेहिं वाइअमाणं सुणादि ॥ ( मङ्गलगृह आसनस्था भूत्वा विदर्भविषयाद्भ्रात्रा वीरसेनेन प्रेषितं लेखं लेखकैर्वाच्यमानं शृणोति ) ॥ १

मधुकरिका—को उण उदब्भराअउत्तंतो सुणीअदि ? ॥ ( कः पुनर्विदर्भराजवृत्तान्तः श्रूयते ? ) ॥ २

सारसः—वसीकिदो किल वीरसेणप्पमुहेहिं भत्तुणो विजअ दंडेहिं विदब्भणाहो । मोइदो से दाआदो माहवसेणो । दूदो अ तेण महासाराणि रअणाणि वाहणाणि सिप्पदारिआ भूइट्ठ परिअणं उवाअणकिरिअ भट्टिणो सआसं पेसिदो त्ति ॥ (वशीकृतः किल वीरसेनप्रमुखैर्भर्तुर्विजयदण्डैर्विदर्भनाथः । मोचितोऽ-

---

निष्कशतसुवर्णपरिमाणां निष्काणां सुवर्णपरिमाणविशेषाणां यच्छतं तत्पर्याप्तं सुवर्णं हेम परिमाणं यस्यास्तथाभूताम् । दक्षिणीयैर्दक्षिणार्हैः ग्रहणे कर्तृभूतैः । " कडङ्गरदक्षिणाच्छ च " इति आर्हीयश्छः । परिग्राहयति स्वीकारयति । परिपूर्वाद्गृह्णातेर्णिच् ॥

१ मङ्गलगृहमिति गृहनाम । विदर्भविषयात् विदर्भदेशात् भ्रात्रा बन्धुना वीरसेनसंज्ञेन । लेखं पत्रिकाम् । लेखकैः लेखकैः वाच्यमानं पठ्यमानम् ॥

२ विदर्भराजवृत्तान्तः । विदर्भाणां देशविशेषाणां राजा विदर्भराजः । " राजाहः " इति टच् । तस्य वृत्तान्तो वार्ता ॥

---

१ ' कारकून ' इति भाषायाम् ।

स्य दायादो माधवसेनः । दूतश्च तेन महासाराणि रत्नानि वाहनानि शिल्पकारिका भूयिष्ठं परिजनमुपायनीकृत्य भर्तुः सकाशं प्रेषित इति) ॥ १

मधुकरिका–गच्छ अणुचिठ्ठ अत्तणो णिओअं । अहं वि देवीं पेक्खिस्सम् ॥ ( गच्छानुतिष्ठात्मनो नियोगम् । अहमपि देवीं प्रेक्षिष्ये ) ॥ २

( इति निष्क्रान्तौ । ) इति प्रवेशकः । ३

( ततः प्रविशति प्रतिहारी । )

प्रतिहारी–आणत्त म्हि असोअसक्कारवावुदाए देवीए । विण्णवेहि अज्जउत्तम् । इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छीं पच्चक्खीकादुं त्ति । ता जाव धम्मासणगदं देवं पडिपालेमि ( इति परिक्रामति ) ॥ ( आज्ञप्ताऽस्म्यशोक-

---

१ भर्तुः राज्ञः । विजयदण्डैः विजयन्ते परं विजयाः । "एरच्" इत्यच् । ते च ते दण्डाः सैन्यानि तैः विजयसेनाभिः । "सैन्ये काले मानभेद " इति दण्डार्थेषु मेदिनी । वशीकृतो विजितः । अस्य विदर्भराजस्य दायादो बान्धवो माधवसेननामा। मोचितः बन्धादिति शेषः । तेन माधवसेनेन । महासाराणि महान्ति साराणि श्रेष्ठानि च । " न्याय्ये क्लीबं त्रिषु वरे " इति सारशब्दार्थे मेदिनी । शिल्पकारिका भूयिष्ठं शिल्पकारिकाः केशप्रसाधनादिशिल्पकारिण्यो भूयिष्ठाः प्रचुरा यत्र तम् । उपायनीकृत्य उपढौकनत्वेन दत्वा । सकाशं समीपे दूतः प्रेषित इति संबन्धः ॥

२ अनुतिष्ठ कुरु । प्रेक्षिष्ये द्रक्ष्यामि ॥

३ प्रवेशकलक्षणं तृतीयाङ्के द्रष्टव्यम् ॥

---

१ ' नजराणा ' इति भाषायाम् ।

सत्कारव्यापृतया देव्या । विज्ञापयार्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि ॥ १

( नेपथ्ये वैतालिकौ । ) २

विजयतां विजयतां देवः ॥

प्रथमः—दिष्ट्या दण्डेनैव रिपुशिरःसु वर्तते देवः ॥ ३

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते
वरद वरदारोधोवृक्षैः सहावनतो रिपुः ॥ १ ॥

---

१ अशोकसत्कारव्यापृतया अशोकस्य सत्कारे संमाने व्यापृतया आसक्तया देव्या आज्ञप्ताऽस्मि । आज्ञामनुवदति इतीत्यन्तेन । विज्ञापय प्रार्थय । आर्यपुत्रं पतिं राजानमित्यर्थः । सह सहिता । प्रसूनलक्ष्मीं प्रसूनानां पुष्पाणां लक्ष्मीं शोभां प्रत्यक्षीकर्तुं द्रष्टुम् । " प्रसूनं कुसुमं सुमम् " इत्यमरः । " लक्ष्मीः संपत्तिशोभयोः " इति मेदिनी । धर्मासनगतं न्यायासनवर्तिनं देवं राजानं प्रतिपालयामि प्रतीक्षे । " धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ । अहिंसोपनिषन्न्याय " इति मेदिनी ॥

२ वैतालिकौ राज्ञः कालादिबोधकरौ बन्दिविशेषौ । " वैतालिका बोधकराः " इत्यमरः । विविधेन तालेन शब्देन चरन्ति वैतालिका इति महेश्वरः । वदत इति शेषः ॥

३ दण्डेनैव शासनेनैव करणेन रिपुशिरःसु रिपूणां शत्रूणां शिरःसु मूर्धसु । रिपवस्ते शासनं संमन्यन्त इति भावः ॥

परभृतेति ॥ हे वरद प्रसन्न राजन् । " वरदा स्त्रियाम् ।

कन्यायां वाच्यलिङ्गस्तु प्रसन्न" इति मेदिनी । अङ्गवान् मूर्तिमान् अनङ्गो मदन इव । परभृतकलव्याहारेषु परभृतानां कोकिलानां कलेषु मधुरेषु व्याहारेषु शब्देषु आत्तरतिः कृतप्रीतिः । कोकिलानां मदनबन्दित्वात् । राजपक्षे तु परभृतानां परैः स्वस्माद्भिन्नैर्भृताः पोषिताः सेवका इत्यर्थः। तेषामस्मादृशानां सेवकानां कलव्याहारेषु आत्तरतिः । त्वं कर्ता। "कलं शुक्रे त्रिष्वजीर्णे नाटचोक्तमधुरध्वनौ" इति मेदिनी । विदिशातीरोद्यानेषु विदिशाया विदर्भदेशवर्तिनगरीविशेषस्य तीरसंबन्धिषु प्रान्तवर्तिष्वित्यर्थः उद्यानेषूपवनेषु मधुं वसन्तं नयसि ।वसन्तस्य पुष्पपरागादिभिर्धवलत्वाद्यशसश्च वसन्तसादृश्यादेवमुक्तिः । विदर्भराजजयेन तत्र स्वं यशः प्रसारयसीत्यर्थः । " मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे " इति मेदिनी । किं च प्रबलस्य ते तव रिपुः शत्रुर्विदर्भराजः कर्ता । त इति देहलीदीपन्यायेन सम्बध्यते । ते तव विजयकारिणां वियद्गहस्तिनाम् । आलानत्वं बन्धस्तम्भतां गतः । " आलानं बन्धस्तम्भेऽथ शृङ्खले " इत्यमरः । वरदारोधोवृक्षैः वरदाया विदर्भदेशवर्तिन्या नद्याः रोधसस्तीरस्य संबन्धिभिः वृक्षैः तीरवर्तिभिर्वृक्षैरित्यर्थः । सह । अवनतः नम्रः तव विजयकरी विदर्भसीमान्तस्थवरदानदीपर्यन्तं परिभ्रान्तो रिपुश्चावनत इति भावः । अत्र पूर्वार्धश्लेषोत्थापितसाङ्गत्वरूपाधिक्यप्रतिपादनोद्भूतव्यतिरेकसंकीर्णोऽतिशयोक्तिरलङ्कारः । उत्तरार्धे सहोक्तिः । तल्लक्षणानि तु " शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् । " इति । "सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ।" इति । " सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः । सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत् ॥" इति च । उक्तपूर्वलक्षणं हरिणीवृत्तम् । एतदेव विरचितपदामित्येतस्योत्तरपद्यस्यापि ॥ १ ॥

---

१ 'बाग' इति भाषायाम् ।

द्वितीयः—विरचितपदं वीरगीत्या सुरोपमसूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥ २ ॥

प्रतिहारी—एसो जअसद्दसूइदपत्थाणो भट्टा इदो एव्व आअच्छदि । अहं वि दाव इमस्स पमुहादो लोआदो ओसरिअ खंभंतरिदा होमि ॥ ( एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति । अहमपि तावदस्य प्रमुखाल्लोकादपसृत्य स्तम्भान्तरिता भवामि ) ॥ १

---

विरचितेति ॥ परिघगुरुभिः परिघा अस्त्रविशेषा इव गुरुभिर्महद्भिः दोर्भिर्बाहुभिः करणैः । विष्णोश्चतुर्भुजत्वाद्बहुवचनम् । रुक्मिणीं हृतवतः विष्णोः । दण्डानीकैः शासकसेनाभिः विदर्भपतेः विदर्भराजस्य श्रियं हृतवतः तव च । एतयोरुभयोः चरितं वर्तनं कर्तृ । सुरोपमसूरिभिः सुरोपमैर्देवसदृशैः सूरिभिः कविभिः विरचितपदं विरचितानि ग्रथितानि पदानि श्लोकपादा यत्र विषये तथाभूतं सत् । क्रथकैशिकान् विदर्भदेशान् मध्येकृत्य आक्रम्येत्यर्थः स्थितम् । मध्येकृत्येत्यत्र " मध्ये पदे निवचने च " इति गतिसंज्ञायां " कुगतिप्रादयः " इति समासे च, " समासेऽनञ्पूर्वे क्त्वो ल्यप् " । अत्र गुणोत्कृष्टेन विष्णुना राज्ञः समीकरणात्तुल्ययोगिताऽलङ्कारः । तदुक्तम् । " गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता । " इति । रत्नाकरदर्पणकारादिमते तु अत्र प्रकृताप्रकृतयोः समस्तत्वान्नायमलङ्कारः । तैरिह व्यस्तयोरेव प्रकृताप्रकृतयोः प्रयोजकतास्वीकारात् । अतस्तेषां मते दीपकमेवेदम् । तदुक्तम् । " प्रकृतानां चेतरेषामौपम्यं गम्यते यदि । समानधर्मसंबन्धाद्दीपकम् " इति ॥ २ ॥

१ जयशब्दसूचितप्रस्थानः जयशब्देन सूचितं प्रस्थानं स्थलान्तरात्प्रयाणं यस्य तथाभूतः ॥

( प्रविश्य सवयस्यः )

राजा—कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते मम मनः सुखमश्नुते च ॥ ३ ॥

विदूषकः—जह अहं पेक्खामि तह एकंतसुहिदो भवं हुविस्सदि ॥ ( यथाऽहं प्रेक्षे तथा एकान्तसुखितो भवान्भविष्यति ) ॥ १

राजा—कथमिव ? ॥ २

विदूषकः—अज्ज किल देवीए एव्वं पंडिदकोसिई भणिदा । " भअवदि ! जं तुमं पसाहणगव्वं वहसि, तं दंसेहि मालविआ-

---

कान्तामिति ॥ कान्तां मालविकां सुलभेतरसंप्रयोगां सुलभादितरो भिन्नो दुर्लभः संप्रयोगः प्राप्त्युपायो यस्यास्तथाभूतां विचिन्त्य । विदर्भपतिं विदर्भराजं बलैः मम सैन्यैः आनमितं नम्रीकृतं जितमित्यर्थः । श्रुत्वा चेत्युभयं क्रमाद्विषादे हर्षे च हेतुः । आतपे प्रकाशे धाराभिः वृष्टिप्रपातैः अभिहतं सावातं सिक्तं सरोजं कमलमिव मम मनः । दुःखायते दुःखमनुभवति । " सुखादिभ्यः कर्तृवेदनायाम् " इति क्यङ् । सुखम् अश्नुते उपभुनक्ति च । उपमासंकीर्णं यथासङ्ख्यमलङ्कारः । " यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यत् । " इति दर्पणे । वसन्ततिलकाख्यं वृत्तं लक्षणं तूक्तम् ॥ ३ ॥

१ प्रेक्षे पश्यामि । एकान्तसुखितः एकान्तमत्यन्तं सुखितः सञ्जातसुखः । " तीव्रैकान्तनितान्तानि " इत्यमरः ॥

२ कथमिव केन प्रकारेण पश्यसीत्यर्थः ॥

ए सरीरे विवाहणेवत्थं"त्ति। ताए सविसेसालंकिदा मालविआ। तत्तहोदी कदा वि पूरए भवदो मणोरहं॥ (अद्य किल देव्यैवं पण्डितकौशिकी भणिता। "भगवति! यत्त्वं प्रसाधनगर्वं वहसि, तद्दर्शय मालविकायाः शरीरे विवाहनेपथ्यम्" इति। तया सविशेषालङ्कृता मालविका। तत्रभवती कदापि पूरयेद्भवतो मनोरथम्)॥ १

राजा—सखे! मदपेक्षामनुवृत्य अनया धारिण्या पूर्वचरितैः संभाव्यत एवैतत्॥ २

प्रतिहारी—(उपगम्य) जेदु जेदु देवो। देवी विण्णवेदि। "तवणीआसोअस्स कुसुमसमदंसणेण मह आरंभो सफलो करीअदु" त्ति॥ (जयतु जयतु देवः। देवी विज्ञापयति। "तपनीयाशोकस्य कुसुमसहदर्शनेन ममारम्भः सफलः क्रियताम्" इति)॥ ३

---

१ किलेति वाक्यालङ्कारे। भणिता उक्ता। भगवति कौशिकि। यत् यदि प्रसाधनगर्वम् अलङ्करणाभिमानम् अहमेवालंकर्त्रीति रूपं वहसि धारयसि। तत् तर्हि। विवाहनेपथ्यं विवाहस्य संबन्धि नेपथ्यं प्रसाधनकर्म दर्शय आविष्कुरु। मालविकां विवाहालंकारैर्योजयेत्यर्थः। तया कौशिक्या सविशेषालङ्कृता सविशेषं विशेषेणाधिक्येन सहितं यथा तथा अलङ्कृता भूषिता। तत्रभवती धारिणी कर्त्री भवतो राज्ञस्तव। मनोरथं मालविकापरिणयरूपमभिलाषम्। पूरयेत् पूर्णं कुर्यात् इति संभावना॥

२ धारिण्या कर्त्र्या। मदपेक्षां ममेच्छाम् अनुसृत्य पूर्वचरितैः पूर्वं चरितैः कृतैः कर्मभिरिति शेषः। एतद्भवदुक्तं संभाव्यते अनुमीयत इत्यर्थः॥

३ तपनीयाशोकस्य कुसुमानां पुष्पाणां सह दर्शनेन मया सहाऽवलोकनेन। आरम्भ उद्यमः॥

राजा—ननु तत्रैव देवी ? ॥ १

प्रतिहारी—अह इम्।जहरिहसंमाणसुहिदं अंतेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण सह देवं पडिपालेदि ॥ ( अथ किम् । यथार्हसम्मानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेणात्मनः परिजनेन सह देवं प्रतिपालयति ) ॥ २

राजा—( सहर्षं विदूषकं विलोक्य ) जयसेने ! गच्छाग्रतः ॥

प्रतिहारी—एदु एदु देवो॥(इति परिक्रामति)(एत्वेतु देवः) ॥

विदूषकः—( विलोक्य ) भो वअस्स ! किंचिपरिवुत्तजोव्वणो विअ वसंतो पमदवणे लक्खीअदि ॥ ( भो वयस्य ! किञ्चित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ) ॥ ३

राजा—यथाह भवान् ॥ ४

अग्रे विकीर्णकुरुवकफलजालकभिद्यमानसहकारम् ॥
परिणामाभिमुखमृतोरुत्सुकयति यौवनं चेतः ॥ ४ ॥

---

१ नन्विति प्रश्ने। तत्रैव अशोकसमीप एव। वर्तते इति शेषः ॥

२ यथार्हसंमानसुखितं यथार्हेण उचितेन संमानेन सुखितं आनन्दितम् अन्तःपुरम् अन्तःपुरवर्तिनीः स्त्रीरित्यर्थः। विसृज्य प्रेषयित्वा। मालविकापुरोगेण मालविकापुरोगाऽग्रेसरी यत्र तेन। प्रतिपालयति प्रतीक्षते ॥

३ किञ्चित् ईषत् । परिवृत्तयौवनः अतिक्रान्ततारुण्यः। लक्ष्यते दृश्यते ॥

४ यथा प्रशंसायाम्। आह ब्रवीति। साधु भवान्ब्रवीतीत्यर्थः। "यथा तुल्यार्थमानयोः। प्रशंसायाम्" इति मेदिनी ॥

अग्र इति ॥ अग्रे अग्रभागे। विकीर्णकुरुवकफलजालकाभिद्यमानसहकारं विकीर्णानां व्याप्तानां कुरुवकानां फलजालजालकेन

विदूषकः—( परिक्रम्य ) अहो ! अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ । ओलोअदु भवं ॥ ( अहो ! अयं स दत्तनेपथ्य इव कुसुमस्तबकैस्तपनीयाशोकः । आलोकतां भवान् ) ॥ १

राजा—स्थाने खलु प्रसवमन्थरोऽयमभूत् । यदिदानीमनन्यसाधारणीं शोभामुद्वहति । पश्य ॥ २

सर्वाशोकतरूणां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोहदेऽस्मिन्सङ्क्रान्तानीव कुसुमानि ॥ ५ ॥

---

फलसमूहेन भिद्यमानानि विदीर्यमाणानि सहकाराणि आम्रफलानि यत्र तथाभूतम् । "फले लुक्" इति सहकारात्तद्धितलुक् । परिणामाभिमुखं परिणामस्यावसानस्य अभिमुखं संमुखम् उपस्थितपरिणाममित्यर्थः । ऋतोर्वसन्तस्य यौवनं तारुण्यं मध्यावस्थेत्यर्थः । चेतः मनः कर्मभूतम् उत्सुकयति उत्कण्ठयति । अत्र पूर्वार्धेन ध्वनितं स्तनयोर्नखार्पणम् उत्सुकतायां हेतुरिति बोध्यम्। आर्या॥४॥

१ कुसुमस्तबकैः पुष्पगुच्छैः उपलक्षितः । दत्तनेपथ्य इव अर्पितभूषण इव ॥

२ यत् असावशोकः प्रसवमन्थरः प्रसवे पुष्पोद्गमविषये मन्थरस्त्वराशून्यः अभूत् । तत् स्थाने योग्यं खलु । यत् यतः इदानीं साम्प्रतम् । अनन्यसाधारणीम् अन्येषां साधारणी सामान्या न भवति तथाभूताम् उद्वहति धारयति । स्वोक्तिं समर्थयति । पश्येति ॥

सर्वेति ॥ प्रथमं वसन्तारम्भे । सूचितवसन्तविभवानां सूचितो ज्ञापितो वसन्तस्य संबन्धी विभवः पुष्पसम्पत्तिर्यैस्तेषां सर्वाशोकतरूणां सर्वेषामशोकवृक्षाणां कुसुमानि पुष्पाणि कर्तॄणि।निर्वृत्तदोहदे निर्वृत्तं निष्पन्नं दोहदं नारीपादाघातरूपं यस्य तस्मिन् ।

**विदूषकः**—तह । भो वीसद्धो होहि । अम्हेसु संणिहिदेसु वि धारिणी पासपरिवट्टिणीं मालविअं अणुमण्णेदि ॥ ( तथा । भो विस्रब्धो भव । अस्मासु सन्निहितेष्वपि धारिणी पार्श्वपरिवर्तिनीं मालविकामनुमन्यते ) ॥ १

**राजा**—( सहर्षम् ) सखे ! पश्य ॥

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया ।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥

( ततः प्रविशति धारिणी, मालविका, परिव्राजिका, विभवतश्च परिवारः । )

---

अस्मिन् पुरो दृश्यमाने तपनीयाशोके संक्रान्तानीव मिलितानीव । अत्र कुसुमातिशये अशोकान्तरपुष्पाणां सङ्क्रमणसंभावनादुत्प्रेक्षालङ्कारः । इवशब्दोपादानाच्च सा वाच्या । सङ्क्रमणाक्रियोत्प्रेक्षणात्क्रियोत्प्रे[illegible] चेयं वाच्या क्रियोत्प्रेक्षा । आर्या जातिः ॥ ५ ॥ [illegible]

१ विस्रब्धः [illegible]न्तः इति यावत् । अत्र बीजमाह । अस्मास्विति । सन्निहितेषु समीपगतेषु अपि पार्श्वपरिवर्तिनीं पार्श्वे समीपे वर्तमानां विद्यमानाम् अनुमन्यते । तस्याः समीपावस्थानं न प्रतिषेधतीत्यर्थः । अत एव विस्रब्धो भवेति तात्पर्यम् ॥

**मामिति** ॥ विस्तृतहस्तकमलया विस्तृतं विशालं हस्तकमलं यस्यास्तया प्रियया मालविकया विनयात् विनयमालम्ब्य अनूत्थिता पश्चादुत्थानेन संमानिता । इयं देवी धारिणी कर्त्री नरेन्द्रलक्ष्म्या राज्ञः श्रिया अनूत्थिताऽनुगतेत्यर्थः । वसुमती पृथ्वीव मामभ्युत्तिष्ठति संमानयितुमुत्तिष्ठति । " अत्रानुपूर्वकस्थाधातोः कर्मणि क्तः । अन्वासितमरुन्धत्येत्यादिवदस्य सकर्मकत्वमभ्युपेयम् " इति वाचस्पतिः । उपमालंकारः । आर्या जातिः ॥ ६ ॥

**मालविका**–( आत्मगतम् ) जाणामि णिमित्तं कोदुआलंकारस्स । तह वि मे हिअअं विसिणीपत्तगदं विअ सलिलं वेवदि । अवि अ दक्खिणेदरं वि मे णअणं बहुसो प्फुरदि ॥ ( जानामि निमित्तं कौतुकालङ्कारस्य । तथापि मे हृदयं बिसिनीपत्रगतं सलिलमिव वेपते । अपि च दक्षिणेतरदपि मे नयनं बहुशो विस्फुरति ) ॥ १

**विदूषकः**–भो वअस्स ! विवाहणेवत्थेण सविसेसं खु सोहदि मालविआ ॥ ( भो वयस्य ! विवाहनेपथ्येन सविशेषं किल शोभते मालविका ) ॥ २

**राजा**–पश्याम्येनाम् । यैषा ॥

अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे ।
उडुगणैरुदयोन्मुखचन्द्रिका हतहिमैरिव चैत्रविभावरी ॥७॥

---

१ कौतुकालङ्कारस्य कौतुक उत्सवेऽलङ्कारस्य मत्र ृरितस्यालङ्कारधारणस्येत्यर्थः । निमित्तं कारणं देवीप्रसादरूपं ानामि । तथापि मे हृदयं बिसिनीपत्रगतं बिसिन्याः कमललतायाः पत्रगतं पर्णेषु वर्तमानं सलिलं जलमिव वेपते कम्पते । बिभेतीत्यर्थः। श्रेयसामनेकविघ्नसंकुलत्वादिति भावः । दक्षिणेतरत् दाक्षिणाद्भिन्नं वामम् । बहुशो बहुवारम् । वामनयनस्फुरणेनेष्टलाभः सूच्यते । तदुक्तं वसन्तराजीये । " भ्रूभागमध्ये प्रियसङ्गमः स्यान्नासाक्षिमध्ये च सहायलाभः । दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्विस्फुरिते दृगादौ ॥ पुंसां तथा दक्षिणदेहभागे स्त्रीणां च वामावयवे प्रजाते । " इति ॥

२ विवाहनेपथ्येन विवाहसंबन्धिप्रसाधनकर्मणा । सविशेषमधिकम् ॥

**अनतीति** ॥ अनतिलम्बिदुकूलनिवासिनी नातिलम्बत इत्य-

धारिणी—( उपेत्य ) जेदु जेदु अज्जउत्तो ॥ ( जयतु जयत्वार्यपुत्रः ) ॥

विदूषकः—वड्ढदु भोदी ॥ ( वर्धतां भवती ) ॥

परिव्राजिका—विजयतां देवः ॥

राजा—भगवति ! अभिवादये ॥ १

परिव्राजिका—अभिप्रेतसिद्धिरस्तु ॥ २

देवी—( सस्मितम् ) अज्जउत्त ! एसो ते अम्हेहिं तरुणीजणसहाअस्स असोओ संकेतघरो कप्पिदो ॥ ( आर्यपुत्र ! एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहं कल्पितः)॥ ३

विदूषकः—भो आराहिओ सि ॥ ( भो आराधितोऽसि)॥ ४

---

नातिलम्बि यद्दुकूलं क्षौमं तत् वस्ते परिधत्ते तथाभूता । " वस आच्छादने " इत्यत आदादिकाण्णिनिः । एषा मालविका । बहुभिराभरणैरलङ्कारैः मे मम प्रतिभाति । अत्रोपमामाह । उदयोन्मुखचन्द्रिका उदयोन्मुखी आसन्नोदया चन्द्रिका यत्र तथाभूता चैत्रविभावरी चैत्रस्य मासविशेषस्य विभावरी रात्रिः कर्त्री हतहिमैः हतमपसारितं हिमं कान्तिप्रतिबन्धकं नीहारं येषां तैः उडुगणैर्नक्षत्रसमूहैरिव । बिम्बप्रतिबिम्बभावोपन्यस्तसाधारणधर्मोपमालङ्कारः । उत्प्रेक्षेति तु भ्रान्तिः । द्रुतविलम्बितं वृत्तम् ॥ ७ ॥

१ अभिवादये प्रणमामि ॥

२ अभिप्रेतस्येष्टस्य । अस्तु आशिषि लोट् ॥

३ अस्माभिः एषः अशोकः तरुणीजनसहायस्य तरुणीजनः सहायः सहभूतो यस्य तस्य ते तव संकेतगृहं रतिसंकेतस्थलं कल्पितो योजितः । त्वामत्रेष्टजनेन योजयितुकामाऽस्मीत्यर्थः ॥

४ आराधितोऽसि संमानितोऽसि । देव्येति शेषः ॥

---

१ ' पाटाव, पैठणी ' इति भाषाम् । २ ' धुकें ' इति भाषायाम् ।

राजा—( सव्रीडमभितोऽशोकं परिक्रामन् ) १

नायं देव्या भाजनत्वं न नेयः

सत्काराणामीदृशानामशोकः ।

यः सावज्ञो माधवश्रीनियोगे

पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

विदूषकः—भो ! वीसद्धो भविअ तुमं जोव्वणवदिं इमं पेक्ख ॥ ( भो ! विस्रब्धो भूत्वा त्वं यौवनवतीमिमां प्रेक्षस्व)॥ २

देवी—कम् ? ॥ ( काम् ? ) ॥

---

१ सव्रीडं सलज्जं यथा तथा । अशोकमभितः अशोकस्य समीपे । " अभितः परितः " इति द्वितीया ॥

नायमिति ॥ देव्या त्वया कर्त्र्या । अयम् अशोकः ईदृशानां संकेतकरणरूपाणां सत्काराणां सम्मानानां भाजनत्वं पात्रतां न नेयः न प्रापणीयः इति न अपि तु अवश्यमेव प्रापणीय इति भावः । नञ्द्वयस्य प्रकृतार्थदाढर्चपोपकत्वात् । कुत एवमित्याह । यः अशोकः माधवश्रीनियोगे माधवश्रियाः वैशाखलक्ष्म्याः। कर्तरि षष्ठी । नियोगे कुसुमोद्गमरूप आदेशे विषये सावज्ञः कृतावमानः सन् । त्वत्प्रयत्ने दोहदपूरणेन पुष्पोत्पादनरूपे तव प्रयासे पुष्पैः करणभूतैः आदरं संमानं शंसति सूचयति । य आत्मानं संमानयति तस्यात्मनाऽवश्यं संमाननीयत्वात्त्वत्प्रयत्न आदरसूचकस्यास्याशोकस्य त्वयाऽप्यादरोऽवश्यं करणीय इति भावः । अत्र पूर्वार्धार्थे उत्तरार्धार्थस्य हेतुत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । शालिनी वृत्तम् ॥ ८ ॥

२ विस्रब्ध एकाग्रः । यौवनवतीं तारुण्यवतीम् इमां मालविकामित्यर्थः । एतमेवाभिप्रायमवगच्छन्ती देवी प्राह । कामिति । स्वकीयं वचनमन्यथापयति विदूषकः भवतीति ॥

**विदूषकः**—भोदि ! तवणीआसोअस्स कुसुमसोहम् ॥
( भवति ! तपनीयाशोकस्य कुसुमशोभाम् ) ॥

( सर्वे उपविशन्ति । )

**राजा**—( मालविकां विलोक्य आत्मगतम् ) कष्टः खलु सन्निधिवियोगः ॥ १

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसंपर्का धारिणी रजनीव नौ ॥ ९ ॥

( प्रविश्य । )

**कञ्चुकी**—जयति जयति देवः । अमात्यो विज्ञापयति । विदर्भविषयोपायने द्वे शिल्पकारिके मार्गपरिश्रमादलघुशरीरे इति पूर्वं न प्रवेशिते । सम्प्रति देवोपस्थानयोग्ये संवृत्ते तदाज्ञां देवो दातुमर्हति इति ॥ २

---

१ सन्निधिवियोगः सन्निधौ सामीप्ये सत्यपि वियोगो विघटना । कष्टः दुःखकरः खलु ॥

**अहमिति** ॥ अहं राजा कर्ता रथाङ्गनामेव रथाङ्गस्य नामेव नाम संज्ञा यस्य स रथाङ्गनामा चक्रवाक इव । "कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः ।" इत्यमरः । मे प्रिया मालविका सहचरीव चक्रवाकस्य सहचरी अङ्गनेव चक्रवाकीव । नौ आवयोः अननुज्ञातसंपर्का अननुज्ञातः नानुमतः संपर्कः संबन्धो यया तथाभूता धारिणी रजनी रात्रिरिव । यथा रात्र्यां प्राप्तायां चक्रवाकमिथुनस्य दुर्घटः सङ्गमस्तथाऽस्यां सत्यामावयोरिति भावः । दर्पणरत्नाकरादिमते समस्तवस्तुविषयेयमुपमा । दण्डी त्विमां युक्तोपमामाह । सा च पूर्वार्धे सामान्यधर्मानुपादानाल्लुप्ता उत्तरार्धे तु पूर्णेत्यनयोः संसृष्टिः । पथ्यावक्त्रं वृत्तम् ॥ ९ ॥

२ विदर्भविषयेत्यादिरमात्यविज्ञापनस्यानुवादः । विदर्भविषयो-

**राजा**—प्रवेशय ते ॥

**कञ्चुकी**—यदाज्ञापयति देवः । ( इति निष्क्रम्य ताभ्यां सह प्रविश्य ) इत इतो भवत्यौ ॥

**प्रथमा**—( जनान्तिकम् ) हला मदणिए ! अपुव्वं इमं राअउलं पविसंतीए पसीददि मे हिअअम् ॥ ( हला मदनिके ! अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम् ) ॥ १

**द्वितीया**—जोसणिए ! अत्थि खु लोअप्पवादो । " आआमि सुहं दुक्खं वा हिअअसमवत्था कहेदि " त्ति ॥ ( ज्योत्स्निके ! अस्ति खलु लोकप्रवादः । " आगामि सुखं दुःखं वा हृदयसमवस्था कथयति " इति ॥ २

---

पायने विदर्भविषयस्य विदर्भदेशस्य संबन्ध्युपायने उपायनरूपे । विदर्भराजेनोपायनीकृते इत्यर्थः । अलघुशरीरे लघु मनोज्ञं न भवति तथाभूतं शरीरं ययोस्ते । परिश्रान्तत्वादसुन्दरशरीर इत्यर्थः । यद्वा परिश्रान्ततया जडीभूतग्रामे इति न प्रेरिते इति ' लघुरगुरौ च मनोज्ञ " इति मेदिनी । देवोपस्थानयोग्ये देवस्य राज्ञो भवत उपस्थाने समीपगमने विषये योग्ये संवृत्ते जाते । व्यपेतश्रमत्वेन प्रसन्नकान्तित्वादिति भावः । तत् तस्मात्कारणात् । देवो भवान् राजा । अर्हति योग्यो भवति ॥

१ अपूर्वं नवीनमपरिचितमित्यर्थः । राजकुलं राज्ञो गृहम् । " कुलं जनपदे गोत्रे सजातीयगणेष्वपि । भवने च " इति मेदिनी । मे मम हृदयं मनः कर्तृ । प्रसीदति संतुष्यति । प्रपूर्वात् " षद्लृ गतौ " इत्यतो लटि "पाघ्रा" इति सीदादेशः । रमणिका मदनिका वेति द्वितीयायाः शिल्पकारिकाया नाम । ज्योत्स्निकेति तु प्रथमायाः ॥

२ लोकप्रवादः लोकानां वचनम् । इत्यन्तं तदेवानूद्यते । हृदय-

प्रथमा—सच्चो दाणिं होदु ॥ ( सत्य इदानीं भवतु ) ॥ १

कञ्चुकी—एष देव्या सह देवस्तिष्ठति।उपसर्पतां भवत्यौ ॥२

( उभे उपसर्पतः । )

(मालविका परिव्राजिका च चेटचौ विलोक्य परस्परमवलोकयतः)३

उभे—( प्रणिपत्य ) जेदु जेदु भट्टा जेदु जेदु भट्टिणी ॥ ( जयतु जयतु भर्ता । जयतु जयतु भट्टिनी ) ॥

राजा—निषीदतम् ॥ ( उभे राजाज्ञयोपविष्टे ) ॥ ४

राजा—कस्यां कलायामभिविनीते भवत्यौ ॥ ५

उभे—भट्टा ! संगीदए अब्भंतरे म्ह ॥( भर्तः ! सङ्गीतकाभ्यन्तरे स्वः ) ॥ ६

राजा—देवि ! गृह्यतामनयोरन्यतरा ॥ ७

---

समवस्था हृदयस्य दशा कर्त्री । आगामि भविष्यत्कालिकं सुखं दुःखं वा कथयति सूचयति इति यावत् ॥

१ सत्यो यथार्थः लोकवाद इति संबन्धः । सुखाधिगमेन सत्यो भवत्वित्यर्थः ॥

२ उपसर्पताम् उपगच्छताम् । लोटस्तस् ॥

३ परस्परमन्योन्यमवलोकयतः पश्यतः । लटस्तस् । तयोः परिचितयोरिव दृश्यमानत्वमत्र बीजम् ॥

४ निषीदतम उपविशतम् । निपूर्वात्सीदतेर्लोटस्थस् ॥

५ अभिविनीते शिक्षिते निपुणे इति यावत् ॥

६ सङ्गीतकाभ्यन्तरे सङ्गीतमध्ये स्वार्थे कन् । अभिविनीते इति संबन्धः ॥

७ अन्यतरा एका द्वयोर्निर्धारणे तरप् ॥

धारिणी—मालविए ! इदो पेक्ख । कदरा दे संगीदसहआरिणी रुच्चदि ॥ ( मालविके ! इतः प्रेक्षस्व । कतरा ते सङ्गीतसहकारिणी रोचते ) ॥ १

उभे—( मालविकां दृष्ट्वा ) अंमो भट्टिदारिआ । जेदु जेदु भट्टिदारिआ ॥ ( अम्भो भर्तृदारिका । जयतु जयतु भर्तृदारिका ) ॥ २

( इति प्रणिपत्य तया सह बाष्पं विसृजतः । )

( सर्वे सविस्मयं विलोकयन्ति । )

राजा—के भवत्यौ ? का वेयम् ? ॥ ३

प्रथमा—अम्हाणं भट्टिदारिआ ॥ ( अस्माकं भर्तृदारिका )॥

राजा—कथमिव ? ॥

उभे—सुणादु भट्टा । जो सो भट्टिणा विजअदंडेहिं विदब्भणाहं वसीकरिअ बंधणादो मोइदो कुमारो माहवसेणो णाम । तस्स इअं कणीअसी बहिणी मालविआ णाम ॥ ( शृणोतु भर्ता। यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम । तस्येयं कनीयसी भगिनी मालविका नाम ) ॥ ४

---

१ सङ्गीतसहकारिणी सङ्गीते सहाया । ते तुभ्यं " रुच्यर्थानाम् " इति चतुर्थी ॥

२ अम्भो इति विस्मये । भर्तृदारिका भर्तुः पोषकस्य राज्ञः दारिका कन्या । अस्माकं राज्ञः कन्येत्यर्थः ॥

३ भवत्योरनया कः संबन्ध इति भावः ॥

४ विजयदण्डैर्विजयसेनाभिः । कुमारो राजपुत्रः । माधवसेनो नाम माधवसेन इति प्रसिद्धः । कनीयसी कनिष्ठा। भगिनी सोदरी

देवि—कहं । राजदारिआ इअम् । चंदणं खु मए पादुओवओएण दूसिदम् ॥ ( कथम् । राजदारिकेयम् । चन्दनं खलु मया पादुकोपयोगेन दूषितम् ) ॥ १

राजा—अथात्रभवती कथमित्थंभूता ? ॥ २

मालविका—( निःश्वस्यात्मगतम् ) विहिणिओएण ॥ ( विधिवियोगेन ) ॥ ३

द्वितीया—सुणादु भट्टा । दाआदवसंगदे भट्टदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एसा ॥ ( शृणोतु भर्ता । दायादवशंगते भर्तृदारके माधवसेने तस्यामात्येनार्यसुमतिनाऽस्मादृशं परिजनमुज्झित्वा गूढमानीतैषा ) ॥ ४

---

युवाल्पयोरिति यूनः कनादेशः । ईयसुन उगित्त्वान् ङीप् । मालविका नाम मालविकेति प्रसिद्धा । नाम प्रसिद्धौ ॥

१ चन्दनं पादुकोपयोगेन पादुकायाम् उपानहि उपयोगेन योजनया । पादुकीकृत्येत्यर्थः दूषितम् । यथा सुरभिविलेपनयोग्यस्य चन्दनस्य पादुकायामुपयोगस्तथान्तःपुरनिवासमात्रयोग्याया अस्याः परिचारिकासु योग इति भावः । निदर्शनालङ्कारः ॥

२ इत्थंभूता एवंभूता एतामवस्थां प्राप्ता । कथं केन प्रकारेण । अथेति प्रश्ने ॥

३ विधिनियोगेन दैववशादित्यर्थः । " विधिर्विधाने दैवे च " इत्यमरः ॥

४ दायादवशं बान्धवेष्वधीनतां गते प्राप्ते । भर्तृदारके राजकुमारे । तस्य माधवसेनस्य । आर्यसुमतिना आर्येण सुमतिनाम्ना । अस्मादृशम् अबलाप्रायमित्यर्थः । उज्झित्वा त्यक्त्वा । गूढम् अप्राकाशं यथा तथा ॥

राजा—श्रुतपूर्वं मयैतत् । ततस्ततः ॥

द्वितीया—भट्टा ! अदो अवरं ण आणामि ॥ ( भर्तः ! अतः परं न जानामि ) ॥

परिव्राजिका—अतः परमहं मन्दभागिनी कथयिष्यामि॥१

उभे—भट्टिदारिए ! अज्जकोसिईए विअ सरसंजोओ । णं सा एव्व ? ॥ ( भर्तृदारिके ! आर्यकौशिक्या इव स्वरसंयोगः । ननु सैव ? ) ॥ २

मालविका—अह इम् ॥ ( अथ किम् ) ॥

उभे—जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि ! णमो दे ॥ ( यतिवेषधारिणी आर्यकौशिकी दुःखेन विभाव्यते । भगवति ! नमस्ते ) ॥ ३

परिव्राजिका—स्वस्ति भवतीभ्याम् ॥ ४

राजा—कथम्, आप्तवर्गोऽयं भवत्याः ? ॥ ५

---

१ मन्दभागिनी निकृष्टभाग्यवती । " भागो रूपार्धके भाग्ये " इति मेदिनी । अमात्यकुमारिकाया आत्मनो यतिवेषाङ्गीकारप्रसङ्गाद्दैवस्य निकृष्टत्वम् ॥

२ आर्यकौशिक्या आर्यायाः कौशिक्या इव । स्वरसंयोगः स्वरघटना । तस्याः स्वर इवायं स्वरः श्रूयत इत्यर्थः । नन्विति प्रश्ने ॥

३ यतिवेषस्य धारिणी धारिका अत एव दुःखेन कष्टात् विभाव्यते ज्ञायते इति ॥

४ भवतीभ्यां युवाभ्याम् । "नमःस्वस्ति" इत्यादिना चतुर्थी ॥

५ आप्तवर्गः सुहृद्वर्गः । " आप्तौ लब्धहितौ " इति त्रिकाण्डशेषः । " वृन्दभेदाः समैर्वर्ग " इत्यमरः ॥

---

१ ' मित्र ' इति भाषायाम् ।

परिव्राजिका—एवमेतत् ॥

विदूषकः—तेण कहेदु दाणिं भअवदी अत्तहोदीवुत्तंतं दाव असेसम् ॥ ( तेन कथयत्विदानीं भगवत्यत्रभवतीवृत्तान्तं तावदशेषम् ) ॥ १

परिव्राजिका—( सविक्लवम् ) तावच्छ्रूयताम् । माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ ) ॥ २

राजा—उपलक्षितः । ततस्ततः ॥ ३

परिव्राजिका—स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्संबन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः ॥ ४

राजा—ततस्ततः ॥

---

१ भगवती त्वमित्यर्थः । अत्रभवतीवृत्तान्तं अत्रभवत्या मालविकाया वृत्तान्तं वार्ताम् । अशेषं संपूर्णम् ॥

२ सविक्लवं सदुःखं यथा तथा । अत्र विक्लवशब्दो भावप्रधानः । माधवसेनसचिवं माधवसेनस्यामात्यं सुमतिमेतन्नामानं ममाग्रजं ज्येष्ठं सोदरमवगच्छ जानीहि ॥

३ उपलक्षितो ज्ञातः ॥

४ सः ममाग्रजः सुमतिः । तथागतभ्रातृकां तथागतस्तथाभूतो वैदर्भेण निगृहीतो भ्राता यस्यास्ताम् । मया सार्धं सह । अपवाह्य अप्रकाशं किंचनस्थलं प्रापय्य " वह प्रापणे " इत्यतो णिजन्तादुपसृष्टाल्ल्यप् । तत आवाभ्यां सहेत्यर्थात् । विदिशागामिनं विदिशाऽग्निमित्रस्य नगरी तां गन्तारम् । पथिकसार्थं पान्थसमूहम् । अनुप्रविष्टः संक्रान्तः । ते च पान्था वणिज इत्युत्तरवाक्यादवगम्यते ॥

परिव्राजिका—स चाटव्यन्तरे निविष्टो गताध्वा वणिग्गणः ॥ १

राजा—ततस्ततः ॥

परिव्राजिका—ततः किं चान्यत् ॥ २

तूणीरपट्टपरिणद्धभुजान्तराल-
मापार्ष्णिलम्बिशिखिबर्हकलापधारि ।
कोदण्डपाणि निनदत्प्रतिरोधकाना-
मापातदुःप्रसहमाविरभूदनीकम् ॥ १० ॥

---

१ गताध्वा गतो गमनविषयीकृतोऽध्वा मार्गो येन तथाभूतः। किञ्चिदतिक्रान्तमार्ग इत्यर्थः । अटव्यन्तरे अरण्यमध्ये निविष्टः प्रविष्टः ॥

२ ततश्च किमन्यत् इति संबन्धः ॥

तूणीरेति ॥ तूणीरपट्टपरिणद्धभुजान्तरालं तूणीराणां शरधीनां पट्टैर्बन्धनचर्मभिः परिणद्धानि विशालतां गतानि भुजानामन्तरालानि मध्यभागा हृदयानि यस्य तथाभूतम् । आपार्ष्णिलम्बि शिखिबर्हकलापधारि । आपार्ष्णि पार्ष्णि गुल्फाधस्तनं चरणपश्चाद्भागं मर्यादीकृत्य लम्बते तथाभूतस्य शिखिनां मयूराणां बर्हाणां पिच्छानां कलापस्य समूहस्य धारि धारकम् । कोदण्डपाणि कोदण्डानि धनूंषि पाणिषु यस्य तथाभूतम् । निनदच्छब्दायमानम् । आपातदुःप्रसहम् आपातेनापि ईषत्संयोगेनापि दुःप्रसहं दुःखेन सोढुं शक्यम् । अत्यन्तसंयोगे तु कृच्छ्रं किमुत वक्तव्यमिति भावः । प्रतिरोधकानां प्रतिरोधिनां चौर[१]विशेषाणाम् अनीकं सैन्यम् आविरभूत्प्रादुर्भूतम् । “ तूणोपासङ्गतूणीर ” इति “ शिखावलः शिखी केकी ” इति । “ पिच्छबर्हे नपुंसकम् ”

---

१ ‘ दरवडेखोर ’ इति भाषायाम् ।

( मालविका भयं रूपयति । ) १

**विदूषकः**—भोदि ! मा भआहि । अदिक्कंतं खु तत्तहोदी कहेदि ॥ ( भवति ! मा बिभेहि । अतिक्रान्तं खलु तत्रभवती कथयति ) ॥ २

**राजा**—ततस्ततः ॥

**परिव्राजिका**—ततो मुहूर्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः ॥ ३

**राजा**—हन्त ! इतः परं कष्टतरं श्रोतव्यम् ॥

**परिव्राजिका**—ततः स मत्सोदर्यः ॥ ४

इमां परीप्सुर्दुर्जाते पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥ ११ ॥

---

इति । "कलापो भूषणे बर्हे तूणीरे संहतावपि ।" इति । "धन्वशरासनकोदण्डकार्मुकम्" इति । "दस्युतस्करमोषकाः" "प्रतिरोधि परास्कन्दि" इति चामरः ॥ १० ॥

१ रूपयति प्रकाशयति ॥

२ अतिक्रान्तं भूतपूर्वम् । न त्विदानीं प्रत्यक्षमिदमित्यर्थः ॥

३ मुहूर्तं घटिकाद्वयपर्यन्तम् । "कालाध्वनोः" इति द्वितीया । तस्करैः सह बद्धायुधाः बद्धानि युद्धाय सज्जीकृतान्यायुधानि शस्त्राणि यैस्ते । प्रारब्धयुद्धा इति यावत् । सार्थवाहयोद्धारो वणिग्रूपा योद्धारः । पराङ्मुखीभूता विमुखीभूताः युद्धात्प्रतिनिवृत्ता इत्यर्थः । "वैदेहकः सार्थवाहो नैगमो वणिजो वणिक् ।" इत्यमरः ॥

४ मत्सोदर्यः मम बन्धुः कर्ता ॥

**इमामिति** ॥ दुर्जाते तस्मिन्युद्धरूपे व्यसने । पराभिभवकातरां परैः शत्रुभिरभिभवेनात्मनः पराभवेन कातराम् अधीरामिमां मालविकां परीप्सुः पर्याप्तुं प्राप्तुमिच्छुः सन् । परिपूर्वादाप्नोतेः सनि

**प्रथमा**—हा हदो सुमदी णमु ॥ (हा हतः सुमतिर्ननु )॥ १

**द्वितीया**—तदो क्खु इअं भट्टिदारिआए समवत्था संवुत्ता॥ ( ततः खल्वियं भर्तृदारिकायाः समवस्था संवृत्ता ? ) ॥

( परिव्राजिका बाष्पं विसृजति । )

**राजा**—भगवति ! तनुत्यजामीदृशी लोकयात्रा । न शोच्यस्तत्रभवान्सफलीकृतभर्तृपिण्डः । ततस्ततः ॥ २

**परिव्राजिका**—ततोऽहं मोहमुपगता यावत्संज्ञां लभे तावदियं दुर्लभदर्शना संवृत्ता ॥ ३

---

" आप्ज्ञप्यृधामीत्"इत्यात इति। अत्र "लोपोभ्यासस्य" इत्यभ्यासलोपः । भर्तृप्रियः भर्तुरात्मनः पोषकस्य राज्ञः प्रियः मत्सोदर्यः सुमतिः। भर्तुः प्रियैः असुभिः प्राणैः आनृण्ये करणभूतैः आनृण्यम् ऋणशून्यतां गतः प्राप्तः । निधनं गत इत्यर्थः । आत्मनः पालनरूपं भर्तृप्रयुक्तमृणमात्मनोऽसुनाशावधि तत्पुत्रीं रक्षयन् निरयातयदिति भावः ॥ ११ ॥

१ ननु प्रश्ने । हा दुःखे ॥

२ तनुत्यजां तनुं त्यजन्ति तथाभूता मनुजास्तेषाम् । अवश्यंभाविमरणानामित्यर्थः । त्यजतेः क्विप् । ईदृशी तव भ्रातुरिव लोकयात्रा लोकस्थितिः । अत एवापि सुमतिर्न शोच्यः । किं च स सफलीकृतभर्तृपिण्डः सफलीकृतम् आत्मकृतया सेवया फलयुक्तं कृतं भर्तृपिण्डं भर्तू राज्ञः पिण्डं तत्प्रदत्तं वेतनं येन सः । पिण्डशब्दार्थेषु " क्लीबमाजीवनाशयोः " इति मेदिनी । अतस्तु नैव शोच्य इति भावः। शोच्यः शोकार्हः । "शुच शोके" इत्यतो ण्यति रूपम् । सकर्मकोऽयं धातुः ॥

३ मोहं मूर्च्छाम् उपगता प्राप्ता । संज्ञां चेतनां लभे प्राप्नोमि । दुर्लभं दर्शनं यस्यास्तथाभूता संवृत्ता जाता ॥

राजा—महत्खलु कृच्छ्रमनुभूतं भगवत्या ॥ १

परिव्राजिका—ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतवैधव्यदुःखया त्वदीयं देशमवतीर्य काषाये गृहीते ॥ २

राजा—युक्तः सज्जनस्यैष पन्थाः । ततस्ततः ॥ ३

परिव्राजिका—सेयमाटविकेभ्यो वीरसेनं वीरसेनाद्देवीं गता। देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येतदवसानं कथायाः ॥ ४

मालविका—किं णु खु भट्टा संपदं भणादि ॥ (किं नु खलु भर्ता सांप्रतं भणति) ॥ ५

राजा—अहो परिभवोपहारिणो विनिपाताः । कुतः ॥ ६

---

१ कृच्छ्रं दुःखम् । भगवत्या पूज्यया त्वया ॥

२ भ्रातुर्वीरसेनस्य शरीरम् । अग्निसात् अग्न्यधीनं कृत्वा। अग्निना संयोज्येत्यर्थः। "तदधीनवचने" इति सातिः । पुनर्नवीकृतेति पूर्वमेव वैधव्यजनितं दुःखमासीत् तच्च भ्रातृनिधनेन प्रवृद्धमिति तस्य नवीभावः । अवतीर्य प्रविश्य । काषाये कषायेण वर्णविशेषेण रञ्जिते वाससी कर्मभूते गृहीते स्वीकृते परिव्राजिका भूतास्मीत्यर्थः । "तेन रक्तं रागात्" इति कषायशब्दादण् ॥

३ एष भवत्या संश्रितः पन्था मार्गः सज्जनस्य साधोर्युक्तो योग्यः । युक्तं कृतं भवत्येत्यर्थः ॥

४ सेयं मालविका आटविकेभ्योऽरण्यवासिभ्यश्चौरेभ्यः सकाशात् वीरसेनं धारिण्याः भ्रातरम् । गता प्राप्ता । लब्धप्रवेशया लब्धः प्राप्तः प्रवेशो गतिर्यया तथाभूतया । अवसानं समाप्तिः ॥

५ किं नु खल्वित्यव्ययसमुदायो वितर्के ॥

६ विनिपाता दुःखानि । परिभवोपहारिणः परिभवे विपद्युपहरन्त्युपतिष्ठन्ते तथाभूताः । यद्वा । विनिपत्यतेऽपकृष्यतेऽनेन विनि-

---

१ 'भगवा' इति भाषायाम् ।

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्त्रोर्णं वोपयुज्यते ॥ १२ ॥

धारिणी—भअवदि ! तुए अहिजणवदिं मालविअं अणाचक्खंतीए असंपदं किदं ॥ ( भगवति ! त्वयाऽभिजनवतीं मालविकामनाचक्षाणयाऽसाम्प्रतं कृतम् ) ॥ १

परिव्राजिका—शान्तं पापम् । कारणेन खलु मया नैर्घृण्यमालम्बितम् ॥ २

---

पातो विपत् । ताश्च परिभवोपहारिणः परिभवमपमानम् उपहरन्ति तथाभूतानि । विपद्यपमान उत्पद्यत इति भावः । तदेव समर्थयति ॥

प्रेष्येति ॥ देवीशब्दक्षमा देवीशब्दयोग्या सती साध्वी इयं मालविका । पत्त्रोर्णं धौतकौशेयं स्नानीयवस्त्रक्रियया स्नान्त्यनेन स्नानीयं स्नानोपयुक्तं वस्त्रं तस्य क्रियया शरीरप्रोञ्छनादिकर्मणा वा इवार्थे । प्रेष्यभावेन दासीत्वेन उपयुज्यते सम्बध्यते । नामेति निन्दायां धिङ् मामित्यर्थः । "पत्त्रोर्णं धौतकौशेयम्" इत्यमरः । "नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च । संभाव्यकुत्साप्राकाश्यविकल्पेऽपि च दृश्यते ॥" इति मेदिनी । यथोत्सवकालमात्रयोग्यं पत्त्रोर्णं स्नानक्रियायां योज्यं तथा देवीत्वमात्रयोग्येयं मालविकास्माभिर्दासीकृतेत्ययुक्तकारिताऽस्माकमिति भावः । "वा स्याद्विकल्पोपमयोः" इत्यमरः । उपमालङ्कारः । पथ्यावक्त्रं वृत्तम् ॥ १२ ॥

१मालविकाम् अभिजनवतीं प्रशस्तकुलोद्भवाम् । अभिजनो वंशः प्रशंसायां मतुप् । अनाचक्षाणया अकथयन्त्या । "चक्षिङ् व्यक्तायां वाचि" इत्यतः शानच् । त्वया कर्त्र्या असाम्प्रतमयोग्यम् । कृतम् ॥

२ शान्तं पापम् । परोक्तस्यानङ्गीकारे आत्मनोऽनभीष्टे च वचने

धारिणी—किं विअ तं कारणम् ? ॥ ( किमिव तत्कारणम् ? ) ॥

परिव्राजिका—इयं पितरि जीवति केनापि देवयात्राऽऽगतेन सिद्धादेशकेन साधुना मत्समक्षं समादिष्टा । आसंवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यतीति । तदेवं भाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि ॥ १

राजा—युक्ता प्रतीक्षा ॥ २

---

शान्तं पापमिति प्रयुज्यते । कारणेन खलु प्रयोजनमुद्दिश्यैव । नैर्घृण्यं निर्दयत्वम् । मालविकाया अप्रकाशनरूपम् आलम्बितमाश्रितम् ॥

१ पितरि ताते मालविकाया इति शेषः । जीवति सति देवयात्रागतेन देवयात्रायां देवोत्सवे आगतेन साधुना सत्पुरुषेण । सिद्धादेशकेन सिद्धं परिणतं भावि इतिवृत्तमिति यावत् आदिशति कथयति तथाभूतेन । समादिष्टा उक्ता । आदेशमाह-आसंवत्सरमिति । संवत्सरमात्रं वर्षपर्यन्तम् । प्रेष्यभावं दासीत्वं सदृशभर्तृगामिनी सदृशेन योग्येन भर्त्रा गन्तुं शीलं यस्यास्तथाभूता भविष्यति । आत्मनो वयसः कुलस्य रूपस्य च योग्यं भर्तारं लप्स्यत इति भावः । तत् तस्मात् एवम् अनेन प्रकारेण भाविनं भविष्यन्तम् अस्याः कर्मणि षष्ठी । आदेशं सिद्धोक्तिम् । त्वत्पादशुश्रूषया तव चरणसेवया सेवात्मनेत्यर्थः । परिणमन्तं फलन्तम् अवेक्ष्य दृष्ट्वा । कालप्रतीक्षया कालं प्रतीक्ष्येत्यर्थः । कालस्य वत्सरान्तस्य प्रतीक्षया साधुकरणे करणभूतया साधु योग्यं कृतम् ॥

२ युक्ता योग्या प्रतीक्षा कालस्येति शेषः ॥

**कञ्चुकी**—कथान्तरेणान्तरितम् । अमात्यो विज्ञापयति । विदर्भगतमनुष्ठेयमनुष्ठितमभूत् । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ॥ १

**राजा**—मौद्गल्य ! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ॥ २

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तंदिवं विभज्योभौ शीतोष्णकिरणाविव ॥ १३ ॥

---

१ कथान्तरेणान्यया वक्ष्यमाणया कथया । अन्तरितं विभक्तमिदं कथानकमिति शेषः । अपरैव कापि कथाऽत्र मध्ये प्राप्तेति भावः । किं तत्कथान्तरमित्याह । अमात्य इति । विदर्भगतं विदर्भदेशवर्ति विदर्भदेशसंबन्धीत्यर्थः । अनुष्ठेयं कर्तव्यम् । अनुष्ठितं कृतम् । तावत् साकल्ये । देवस्याभिप्रायं साकल्येन श्रोतुमिच्छामीत्यर्थः ॥

२ द्वैराज्यं द्वयो राज्ञोर्भावः कर्म वा । ब्राह्मणादित्वात् ष्यञ् । राज्यविभागमित्यर्थः । अवस्थापयितुकामः स्थापयितुमिच्छुः । "तुं काममनसोरपि" इति मलोपः ॥

**ताविति** ॥ उभौ तौ यज्ञसेनमाधवसेनौ कर्तारौ शीतोष्णकिरणौ शीतकिरणश्चन्द्र उष्णकिरणः सूर्यः तौ । द्वन्द्वान्ते श्रूयमाणस्य किरणशब्दस्य प्रत्येकं संबन्धः । नक्तंदिवं रात्रिदिने इव । "अचतुरविचतुर" इति निपातनात्साधुः । उत्तरदक्षिणे वरदाकूले वरदाया नद्यास्तटौ विभज्य उत्तरदक्षिणतटोपलक्षितौ देशौ विभज्येत्यर्थः । पृथक् असंभिन्नं यथा तथा शिष्टां शासनेन रक्षताम् । "शासु अनुशिष्टौ" इत्यत आदादिकाल्लोटस्तस् । "शास इदङ्हलोः" इतीत् । "शासिवसिघसीनां च" इति षत्वम्। तथा च वरदां नाम नदीं सीमां कृत्वा तस्या उत्तरे दक्षिणे च देशे क्रमेण

**कञ्चुकी**—देव ! एवममात्यपरिषदे निवेदयामि । (राजाङ्गुल्यानुमन्यते) ॥ १

(निष्क्रान्तः कंचुकी ।)

**प्रथमा**—(जनान्तिकम्) भट्टदारिए ! दिट्ठिआ भट्टिणा भट्टदारओ अद्धरज्जे पडिट्ठं गमइस्सिअदि ॥ (भर्तृदारिके ! दिष्ट्या भर्त्रा भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमयिष्यते) ॥ २

**मालविका**—एदं दाव बहु मण्णिदव्वं, जं जीविदसंसआदो मुत्तो ॥ (एतत्तावद्बहुमन्तव्यं यज्जीवितसंशयान्मुक्तः) ॥ ३

**कञ्चुकी**—(प्रविश्य) विजयतां देवः । देव ! अमात्यो विज्ञापयति । कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येतदेव दर्शनम् । कुतः ? ॥ ४

---

विभक्तं यज्ञसेनमाधवसेनयो राज्यमस्त्विति ममाभिप्राय इति भावः । उपमालङ्कारः । पथ्यावक्त्रम् ॥ १३ ॥

१ अमात्यपरिषदे अमात्यानां मन्त्रिणां परिषदे सभायै । अङ्गुल्याऽनुमन्यते स्वानुमतं सूचयति ॥

२ भर्तृदारिके मालविके । भर्त्राऽग्निमित्रेण । भर्तृदारको माधवसेनः । प्रतिष्ठां स्थितिं गमयिष्यते प्रापयिष्यत इति दिष्ट्या हर्षोऽस्माकमिति भावः ॥

३ तावत्प्रथमम् एतद्बहुमन्तव्यं किं तदित्याह । यदिति । जीवितसंशयात् जीवितस्य संशयः संदेहोऽत्र जीवेन्न वेति रूपो यत्र तस्माद्बन्धनादित्यर्थः । यद्वा जीवितसंशयो जीवनसंशयस्तस्मात् ॥

४ दर्शनं मतम् ॥

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः ।
तौ स्थास्यतस्ते नृपते निदेशे
परस्परोपग्रहनिर्विकारौ ॥ १४ ॥

राजा—तेन हि मन्त्रिपरिषदं ब्रूहि । सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति ॥ १

कञ्चुकी—यदाज्ञापयति देवः । ( इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य ) अनुष्ठिता प्रभोराज्ञा । अथ देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सोत्तरीयप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः ॥ २

---

द्विधेति ॥ हे नृपते राजन् । रथाश्वौ कर्तारौ संग्रहीतुः सारथेर्धुरं भारमिव द्विधा विभक्तां श्रियं राज्यलक्ष्मीं वहन्तौ धारयन्तौ । परस्परोपग्रहनिर्विकारौ परस्परस्योपग्रहेणोपयोगेन निर्विकारौ परस्परबाधाशून्यौ तौ यज्ञसेनमाधवसेनौ ते तव निदेशे आज्ञायां स्थास्यतः वर्तिष्येते । "उपग्रहः पुमान्बन्द्यामुपयोगेऽनुकूलने ।" इति मेदिनी । यथा रथाश्वौ नियामकस्य सारथेर्वशे तिष्ठतो न च परस्परं बाधेते रथं च वहत एवं यज्ञसेनमाधवसेनावपि तव वशे तिष्ठन्तौ परस्परमबाधमानौ राज्यधुरं वक्ष्यत इति भावः । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः ॥ १४ ॥

१ तेन मन्त्रिपरिषत्संमतत्वादेव । सेनान्ये सेनापतये वीरसेनाय । एवं मया प्रोक्तपूर्वमिव ॥

२ सप्राभृतकं प्राभृतमेव प्राभृतकं स्वार्थे कः । प्राभृतकेन सहितं प्राभृतमुपायनं "प्राभृतं तु प्रदेशनम् । उपायनम्" इत्यमरः । प्रभो राज्ञो भवतः । देवस्य राज्ञस्तव पुष्पमित्र इति सेनापतेर्नाम तस्य सकाशात्समीपात् सोत्तरीयप्राभृतकः उत्तरीयरूपेण प्राभृतकेन सहितः । प्रत्यक्षीकरोतु पश्यतु ॥

(राजोत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा
(परिजनायार्पयति ।) १
(परिजनो लेखं नाट्येनोद्घाटयति ।)

देवी—(आत्मगतम्) अम्हो! तदोमुहं एव्व णो हिअअं। सुणिस्सं दाव गुरुअणस्स वुत्तंतं। अदिघोरे खु पुत्तओ सेणावदिणा णिवुत्तो॥ (अम्भो! ततोमुखमेव नो हृदयम्। श्रोष्यामि तावद्गुरुजनस्य वृत्तान्तम्। अतिघोरे खलु पुत्रकः सेनापतिना नियुक्तः)॥ २

राजा—(उपविश्य लेखं सोपचारं गृहीत्वा वाचयति।) स्वस्ति यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति। विदितमस्तु। योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपात्तनियमो निरर्गलस्तुरङ्गमो विसृष्टः, स सिन्धोर्दक्षिणरोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः। तत उभयोः सेनयोर्महानासीत्संमर्दः॥ ३

---

१ सोपचारं ससंमानं यथा तथा गृहीत्वा। परिजनाय सेवकायार्पयति ददाति॥

२ अम्भो आनन्दे। नः अस्माकं हृदयं मनः ततो मुखमेव ततः लेख एव मुखमग्रं यस्य तथाभूतं लेखैकाग्रं लेखदर्शनोत्कण्ठितमित्यर्थः। गुरुजनस्य पित्रादेः संबन्धिनं वृत्तान्तं वार्ताम्। सेनापतिना पुष्पमित्रेण कर्त्रा पुत्रकः अस्मत्पुत्रो वसुमित्रः। अतिघोरेऽत्यन्तभयंकरे कर्मणि सैनापत्ये नियुक्तः। अतस्तस्यापि वृत्तान्तं श्रोष्यामीत्यर्थः॥

३ लेखस्य प्रथमतो मङ्गलकारकं स्वस्तीति लेखनीयमिति लेख-

( देवी विषादं नाटयति । )

राजा—कथमीदृशं संवृत्तम् ? ( शेषं पुनर्वाचयति । )॥ १

ततः परान्पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः ॥ १५ ॥

---

निकानां समयः । यज्ञशरणात् यज्ञशरणनाम्नो नगरात् पुष्पमित्रः कर्ता । वैदिशस्थं वैदिशं नामाग्निमित्रनगरं तत्र तिष्ठति तथाभूतम् । तिष्ठतेः कः । पुत्रं पुत्रसदृशमित्यर्थः । स्नेहात् प्रेम्णा । परिष्वज्य आलिङ्ग्य । अनुदर्शयति आत्मनो वृत्तान्तं कथयतीत्यर्थः । इदं गुरुजनेन स्वस्मात्कनीयसे लेखनीयस्य लेखस्य शीर्षकमिति बोध्यम् । विदितं ज्ञातमस्तु । अग्रे लिखितं वृत्तं ज्ञायतामित्यर्थः । राजयज्ञदीक्षितेन राजयज्ञे राजसूये दीक्षितेन गृहीतदीक्षेण । " राजसूयो नृपाध्वरः " इति त्रिकाण्डशेषः । नृपाध्वरो राजयज्ञ इति पर्यायौ । राजपुत्रशतपरिवृतं राजपुत्राणां शतेन परिवृतं युक्तम् । वसुमित्रमग्निमित्रतनयं गोप्तारं रक्षितारम् आदिश्य नियुज्येति यावत् । वत्सरोपात्तनियमः वत्सरं वर्षमेव उपात्तः प्रतिनिवर्तनीयतया स्वीकृतो नियमः कालावधिरूपो येन तथाभूतः संवत्सरेण प्रतिनिवर्तनीय इत्यर्थः । निरर्गलो निष्प्रतिबन्धस्तुरङ्गमोऽश्वः विसृष्टः प्रेषितः । सः सिन्धोर्नदीविशेषस्य दक्षिणरोधसि दक्षिणे तटे । चरन् गच्छन् । अश्वानीकेन अश्वा अश्वारोहा इत्यर्थः । अनीकं सेना यस्य तेन । लाक्षणिकोऽत्राश्वारोहेष्वश्वशब्दः । यवनेन मुण्डितशिरसो जातिविशेषस्य राज्ञा प्रार्थितोऽभिलषितो निगृहीत इति यावत् । महान्संमर्दो युद्धम् ॥

१ ईदृशम् एवं कथं संवृत्तं जातम् ॥

**तत इति** ॥ ततः संमर्दानन्तरं धन्विना धनुर्धरेण वसुमित्रेण कर्त्रा " धन्वी धनुष्मान्धानुष्को निषङ्गयस्त्री धनुर्धरः। " इत्यमरः ॥ परान् शत्रून् पराजित्य पराभूय । ल्यपि ह्रस्वस्य तुक् । "अभिधा-

देवी—इमिणा आसासिदं मे हिअअम् ॥ ( अनेनाश्वसितं मे हृदयम् ) ॥ १

राजा—( शेषं पुनर्वाचयति ।) सोऽहमिदानीमंशुमता सगरपुत्रेणेव प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति ॥ २

राजा—अनुगृहीतोऽस्मि ॥

परिव्राजिका—दिष्ट्या पुत्रविजयेन दम्पती वर्तेते ॥ ३

---

तिपराराति" इत्यमरः । प्रसह्य बलात्कारेण ह्रियमाणः गृह्यमाणः शत्रुणेति शेषः । "हृञ् हरणे" इत्यतः कर्मणि "लटः शानच्" "रिङ्शयग्लिङ्क्षु" इति रिङ् । मे मम वाजिराजः अश्वश्रेष्ठः निवर्तितः प्रत्याहृतः ॥ १९ ॥

१ अनेन शत्रुपराजयपूर्वकाश्वप्रत्याहरणवृत्तान्तेन मे मम हृदयम् आश्वसितं निर्वृतं सुखितम् । "आश्वासः पुंसि निर्वृतौ" इति मेदिनी ॥

२ सः प्रत्याहृताश्वः अहं पुष्पमित्रः कर्ता । सगरपुत्रेण सगरस्य राजविशेषस्य पुत्रेणांशुमता एतन्नाम्ना इव वसुमित्रेणेति शेषः प्रत्याहृताश्वः प्रतिनिवर्तिताश्वः । यक्ष्ये राजसूयेनेति शेषः । यजतेः स्वरितेत्त्वात् "स्वरित ञितः" इति कर्तृगामिनि फले तङ् । अकालहीनम् कालेन हीनं शून्यं न भवति यथा तथा । यथाकालमित्यर्थः । विगतरोषचेतसा विगतरोषं क्रोधशून्यं चेतो यस्य तथाभूतेन । यज्ञसेवनाय यज्ञस्य सेवार्थम् । तादर्थ्ये चतुर्थी ॥

३ पुत्रविजयेन पुत्रस्य पुत्रकर्तृकस्य विजयेनोत्कर्षेण उपलक्षितौ । दम्पती जायापती राजा राज्ञी च वर्तेते इति दिष्ट्या हर्षोऽस्माकमित्यर्थः ॥

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि ।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः ॥ १६ ॥

धारिणी—भअवदि ! परितुट्ठम्हि जं पिदरं अणुजादो मे वच्छओ ॥ ( भगवति ! परितुष्टास्मि यत्पितरमनुजातो मे वत्सकः ) ॥ १

राजा—मौद्गल्य ! ननु कलभेन यूथपतेरनुकृतम् ॥ २

---

भर्त्रेति ॥ राज्ञीं प्रतीयमुक्तिः । भर्त्रा पत्याऽग्निमित्रेण कर्त्रा त्वं श्लाघ्यानां प्रशस्यानां वीरपत्नीनां वीरः शूरः पतिर्यासां तासां स्त्रीणां धुरि अग्रभागे स्थापिताऽसि । वीरपूर्वस्य पतिशब्दस्य "विभाषा सपूर्वस्य " इति वा नादेशः।उत्कृष्टतया सर्वासामुपरि कृतासि इत्यर्थः । तव पतिर्वीरवर्य इति भावः । अयं वीरसूः वीरं शूरं सूते तथाभूता । षूङः क्विप् । वीरमाता इति शब्दः तनयाद्धेतुभूतात् त्वाम् उपस्थितः प्राप्तः पुत्रोऽपि ते वीर इति धन्या त्वामिति भावः । अत्र महतोश्चरितस्य प्रस्तुताङ्गत्वादुदात्तालङ्कारः । " लोकातिशयसंपत्तिवर्णनोदात्तमुच्यते । यद्वापि प्रस्तुतस्याङ्गं महतां चरितं भवेत् ॥ " इति लक्षणात् । पथ्यावक्त्रं वृत्तम् ॥ १६ ॥

१ यत् यस्मात् मे वत्सकः पुत्रो वसुमित्रः । पितरं स्वजनकम् अनुजातः सदृशो जातः । वीर्येण पितृसदृशो जात इत्यर्थः । अनुः सादृश्ये । " अनु हीने सहार्थे च पश्चात्सादृश्ययोरपि । " इति मेदिनी ॥

२ कलभेन करिपोतेन यूथपतेः प्रधानगजस्य चरितमिति शेषः । अनुकृतं सदृशीकृतम् । यद्वा यूथपतेरिति शेषे षष्ठी यूथपतिरनुकृत इत्यर्थः । यथाल्पवयस्केन करिशावेन प्रधानगजसदृशं वीरचरितमनुष्ठातव्यं तथाल्पवयसा मम कुमारेण वीरपरिवृढानां चरितमन्वकारीति भावः ॥

कञ्चुकी—नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चै-
रग्नेरपां दग्धुरिवोरुजन्मा ॥ १७ ॥

राजा—मौद्गल्य ! यज्ञसेनश्यालमूरीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः ॥ १

कञ्चुकी—यदाज्ञापयति देवः ॥ ( इति निष्क्रान्तः । )

देवी—जयसेने ! गच्छ । इरावतीपमुहाणं अंतेवुराणं पुत्तस्स वुत्तंतं णिवेदेहि ॥ ( जयसेने ! गच्छ । इरावतीमुखेभ्योऽन्तः-पुरेभ्यः पुत्रस्य वृत्तान्तं निवेदय ) ॥ २

---

नैतावतेति ॥ अपां जलानां दग्धुः दाहकस्य । "ण्वुल्तृचौ" इति तृच् । अत एव न षष्ठीनिषेधः । अग्नेः और्वाग्नेरित्यर्थः । ऊरुजन्मा ऊरुतो जन्म यस्य तथाभूतो मुनिविशेष इव उच्चैः महान् । "अल्पे नीचैर्महत्युच्चैः" इत्यमरः । अप्रधृष्यः अन्यैः प्रधर्षयितुं पराभवितुमशक्यः त्वं यस्य प्रभव उत्पत्तिस्थानम् । स ते पुत्र इति शेषः । एतावता एतत्परिमाणेन शूररिपुजयपूर्वकं तुरगप्रत्याहरणरूपेण वीरविजृम्भितेन वीराणां शूराणां विजृम्भितेन चेष्टया कर्मणेत्यर्थः । नः अस्माकं चित्तस्य विस्मयमाश्चर्यं नादधाति न करोति । इतोऽप्यधिकं ते चरितमिति भावः । इन्द्रवज्रा ॥१७॥

१ यज्ञसेनश्यालं यज्ञसेनस्य विदर्भराजस्य श्यालं पत्न्याः भ्रातरं मौर्यनामानमूरीकृत्य अङ्गीकृत्य तेन सहेत्यर्थः । स च सङ्गत इति आर्यसचिवं इति प्रथमाङ्कस्थसप्तमपद्यात् ज्ञातव्यम् ॥

२ इरावतीमुखेभ्यः इरावतीप्रमुखेभ्यः अन्तःपुरेभ्यः अन्तःपुरवर्तिस्त्रीभ्यः । अन्तःपुरशब्दो मञ्चाः क्रोशन्तीतिवत्स्वाधिष्ठातरि लाक्षणिकः ॥

धारिणी–एहि दाव ॥ ( एहि तावत् ) ॥

प्रतिहारी–( प्रतिनिवृत्त्य ) इअम्हि ॥ ( इयमस्मि ) ॥

धारिणी–( जनान्तिकम् ) जं मए असोअदोहलणिओए मालविआए पडिण्णादं तं से अहिजणं अ णिवेदिअ मह वअणेण इरावदिं अणुणेहि । तुए अहं सच्चादो ण विब्भंसिदव्वेत्ति ॥ ( यन्मयाऽशोकदोहदनियोगे मालविकायै प्रतिज्ञातं तदस्या अभिजनं च निवेद्य मम वचनादिरावतीमनुनय । त्वयाहं सत्यान्न भ्रंशितव्येति ) ॥ १

प्रतिहारी–जं देवी आणवेदि । ( इति निष्क्रम्य पुनः प्रविश्य ) भट्टिणि ! पुत्तविजअणिमित्तेण परितोसेण अंतेउराणं आहरणाणं मंजूसं म्हि संवुत्ता ॥ ( यद्देव्याज्ञापयति । भट्टिनि ! पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणामाभरणानां मञ्जूषाऽस्मि संवृत्ता ) ॥ २

---

१ अशोकदोहदनियोगे अशोकदोहदस्य नियोगावसरे । मालविकायै प्रतिज्ञातं दातुं संकल्पितम् । तत् निवेद्येति संबन्धः । किं च । अस्या मालविकाया अभिजनं कुलं च निवेद्य । अनुनय सान्त्वय । सत्यात् सत्यरूपाद्धर्मात् अहं त्वया इरावत्या न भ्रंशितव्या॥

२ भट्टिनि राज्ञि धारिणि । पुत्रविजयनिमित्तेन पुत्रविजयो निमित्तं यत्र तेनान्तःपुराणामन्तःपुरस्त्रीणां परितोषेण हेतुना आभरणानामलङ्काराणां मञ्जूषा पेटी संवृत्ताहम् । यथा पेटयां सर्वाणि रत्नानि निधीयन्ते तथा परितुष्टेनान्तःपुरेण मे सर्वाण्याभरणानि पारितोषिकीकृतानीत्यर्थः ॥

धारिणी—एदं किं अच्चरिअं । साहारणो खु त्ताणं मह अ अअं अब्भुदओ ॥ ( एतत्किमाश्चर्यम् । साधारणः खलु तासां मम चायमभ्युदयः ) ॥ १

प्रतिहारी—( जनान्तिकम् ) भट्टिणि ! इरावदी उण विण्णावेदि । सरिसं देवीए पहवंतीए । तुह वअणं संकप्पिदं ण जुज्जई अण्णहा कादुं त्ति ॥ ( भट्टिनि ! इरावती पुनर्विज्ञापयति । सदृशं देव्याः प्रभवन्त्याः । तव वचनं संकल्पितं न युज्यतेऽन्यथा कर्तुमिति ) ॥ २

धारिणी—भअवदि ! तुए अणुमदा इच्छामि अज्जसुमदिणा पुढमसंकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदुम् ॥ ( भगवति ! त्वयानुमतेच्छामि आर्यसुमतिना प्रथमसंकल्पितां मालविकाम् आर्यपुत्राय प्रतिपादयितुम् ) ॥ ३

परिव्राजिका—इदानीमपि त्वमेवास्याः प्रभवसि ॥ ४

---

१ एतदाश्चर्यं किं नैवेदमाश्चर्यमित्यर्थः । कुत इत्याह । साधारण इति । अयम् अभ्युदय उत्कर्षः मम तासां च साधारणः समानः । वसुमित्रस्य सर्वप्रियत्वादिति भावः ॥

२ प्रभवन्त्याः समर्थायाः देव्या धारिण्यास्तवेत्यर्थः । सदृशं योग्यमिदं जातमिति भावः । संकल्पितं करणीयतया मनसा निर्धारितं तव वचनम् अन्यथा विपरीतं कर्तुं न युज्यते न योग्यं भवति ॥

३ भगवति परिव्राजिके कौशिकि । अनुमता अनुमोदिता । आर्येण सुमतिना तव भ्रात्रा । प्रथमसंकल्पितां प्रथममेव दातुं निश्चिताम् । आर्यपुत्राय राज्ञे । प्रतिपादयितुं दातुम् ॥

४ अस्याः प्रभवसि सत्वं धारयसीत्यर्थः ॥

धारिणी—( मालविकां हस्ते गृहीत्वा ) इदं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडिच्छदु त्ति ॥ ( राजा व्रीडां नाटयति । ) ( इदमार्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु इति ) ॥ १

देवी—( सस्मितम् ) किं अवधीरेदि अज्जउत्तो ? ॥ ( किमवधीरयत्यार्यपुत्रः ? ) ॥ २

विदूषकः—भोदि ! एसो लोअव्ववहारो । सव्वो णववरो लज्जादुरो होदि त्ति ॥ ( भवति ! एष लोकव्यवहारः । सर्वो नववरो लज्जातुरो भवति इति ) ॥ ३

( राजा विदूषकमवेक्षते । ) ४

विदूषकः—अह देवीए एव्व किदप्पणअविसेसं दिण्णदेवीसद्दं मालविअं अत्तहवं पडिग्गहीदुं इच्छदि ॥ ( अथ देव्यैव कृतप्रणयविशेषां दत्तदेवीशब्दां मालविकामत्रभवान्प्रतिग्रहीतुमिच्छति ) ॥ ५

---

१ इदं मालविकारूपं प्रियनिवेदनानुरूपं प्रियनिवेदनस्य पुत्रविजयकथनस्य अनुरूपं सदृशं योग्यं पारितोषिकमुपहारं प्रतीच्छतु गृह्णातु । व्रीडां लज्जाम् ॥

२ अवधीरयत्यवमानयति ॥

३ लोकव्यवहारः लोकानां पद्धतिः । नववरः नवीनो जामाता "वरो जामातरि वृतौ" इति मेदिनी । लज्जातुरः लज्जया पीडितः लज्जायुक्त इत्यर्थः ॥

४ धारिण्या मालविकायै देवीत्वप्रतिपादनमत्राकूतम् ॥

५ कृतप्रणयविशेषां कृतः प्रणयविशेषोऽनुरागातिशयो यस्यां तथाभूताम् । दत्तः देवीति शब्दो यस्यै तथाभूतां राज्ञः पट्टमहिषीकृतामित्यर्थः ॥

देवी—एदाए राअदारिआए अहिजणेण एव्व दिण्णो देवी-सद्दो किं पुणरुत्तेण ? ॥ ( एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः । किं पुनरुक्तेन ? ) ॥ १

परिव्राजिका—मा मैवम् ॥ २

अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः ।
जातरूपेण कल्याणि मणिः संयोगमर्हति ॥ १८ ॥

देवी—( स्मृत्वा ) मरिसेदु भअवदी । अब्भुदअकहाए उइदं ण लक्खिदम् । जअसेणे ! गच्छ दाव । कोसेअपत्तोण्णजुअलं उवणेहि ॥ ( मर्षयतु भगवती । अभ्युदयकथयोचितं न लक्षितम् । जयसेने ! गच्छ तावत् । कौशेयपत्त्रोर्णयुगलमुपनय ) ॥ ३

---

१ राजदारिकायाः राजकुमार्याः अभिजनेनैव वंशेनैव । अस्याः सत्कुलोद्भवत्वादेव देवीशब्दयोग्यत्वात् । पुनर्देवीशब्दप्रदानं पौनरुक्त्यमात्राय । अकिञ्चित्करमित्यर्थः ॥

२ मा निषेधे एवं नैव वक्तव्यमित्यर्थः ॥

अपीति ॥ हे कल्याणि शोभने देवि । आकरसमुत्पन्नः आकरात्समुत्पन्न उत्पन्नः । रत्नजात्या रत्नानां जात्या पुरस्कृतो भूषितोऽपि मणिः रत्नं जातरूपेण सुवर्णेन सह संयोगम् अर्हति । “ चामीकरं जातरूपं महारजतकाञ्चने । ” इत्यमरः । तथा च महाकुलसमुद्भवा पद्मिनीजातीयाप्यसौ मालविका देवीशब्दमर्हतीति भावः ॥ १८ ॥

३ मर्षयतु क्षमां करोतु । यत् अभ्युदयकारणात् उत्कर्षण हेतुना न लक्षितं न दृष्टं तन्मर्षयत्विति संबन्धः । यद्वा मर्षणे हेतुरयम् अभ्युदयेति । उत्सवे हि प्रायः सर्वोऽपि जनः प्रमाद्यति ततः क्षन्तव्यमिति भावः । तावत्सत्वरम् । कौशेयस्य कृमि-

प्रतिहारी–जं देवी आणवेदि । ( इति निष्क्रान्ता । पत्त्रोर्णं गृहीत्वा पुनः प्रविश्य ) देवि ! एदम् ॥ ( यद्देव्याज्ञापयति । देवि ! एतत् ) ॥ १

देवी–( मालविकामवगुण्ठनवतीं कृत्वा ) अज्जउत्तो दाणिं पडिच्छदु ॥ ( आर्यपुत्र इदानीं प्रतीच्छतु ) ॥ २

राजा–त्वच्छासनात्प्रवृत्ता एव वयम् । ( अपवार्य ) हन्त! प्रतिगृहीता ॥ ३

विदूषकः–अहो देवीए अणुऊलदा ॥ ( अहो ! देव्या अनुकूलता ) ॥ ४

( देवी परिजनमवलोकयति । ) ५

प्रतिहारी–( मालविकामुपेत्य ) जेदु भट्टिनी ॥ ( जयतु भट्टिनी ) ॥ ( देवी परिव्राजिकां निरीक्षते । ) ६

---

कोशोद्भवस्य[1] पत्त्रोर्णयुगलं धौतवस्त्रयुग्मम् । विशिष्टवाचकानामिति न्यायात्पत्त्रोर्णशब्दो धौतवस्त्रमात्रस्य वाचको नतु कौशेयस्य नापि युग्मस्य । उपनय आनय ॥

१ एतत् तत् पत्त्रोर्णमिति भावः ॥

२ अवगुण्ठनवतीम् । अवगुण्ठन[2]युक्तां कृत्वा प्रतीच्छतु स्वीकरोतु ॥

३ प्रतिगृहीता स्वीकृता मालविकेति शेषः । हन्त हर्षे । तत्र तु प्रतिग्रह एव हेतुः ॥

४ देव्या धारिण्या अनुकूलता अविरोधिता । अहो इत्याश्चर्ये ॥

५ देवी मालविका सेव्यतामिति कथनमत्राकूतम् ॥

६ कथमिदानीं संवृत्तमिति प्रश्नः परिव्राजिकानिरीक्षणे बीजम् ॥

---

१ ' रेशीम् ' इति भाषायाम् । २ ' बुरखा ' इति भाषायाम् ।

परिव्राजिका—नैतच्चित्रं त्वयि ॥ १

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम् ॥ १९ ॥

( प्रविश्य )

निपुणिका—जेदु भट्टा । इरावदी विण्णावेदि । जं उवआरातिक्कमेण तदा भट्टिणो अवरद्धा तं सअं एव्व भत्तुणो अणुऊलं णाम मए आअरिदं । संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण संभावइदव्व त्ति ॥ ( जयतु भर्ता । इरावती विज्ञापयति । यदुपचारातिक्रमेण तदा भर्तुरपराद्धा तत्स्वयमेव भर्तुरनुकूलं नाम मयाऽऽचरितम् । साम्प्रतं पूर्णमनोरथेन भर्त्रा प्रसादमात्रेण संभावयितव्येति ) ॥ २

---

१ त्वयि वर्तमानमेतत् भर्तृमनोनुकूलत्वं चित्रमाश्चर्यकरं न । तव पतिव्रतात्वादस्य च पतिव्रतासाधारणत्वादिति भावः । तदेवाह ॥ **प्रतिपक्षेणेति** ॥ भर्तृवत्सलाः । वत्सं मनः लान्त्यावर्जयन्ति तथाभूता वत्सलाः । " सुपि च " इति लातेः कः । भर्तुः वत्सला मनोऽनुकूलाः साध्व्यः पतिव्रताः स्त्रियः प्रतिपक्षेण आत्मनः प्रतिकूलेन स्त्रीजनेनापि सह पतिं भर्तारं सेवन्ते । अत्र दृष्टान्तमाह । समुद्रगाः समुद्रगामिन्यो नद्यः अन्यसरितामपि आपिर्भिन्नक्रमः अन्यासामपि सरितां नदीनां जलम् उदधिं समुद्रं प्रापयन्ति आत्मना सह प्रवेशयन्ति । दृष्टान्तालंकारः । आर्या ॥ १९ ॥

२ उपचारातिक्रमेण उपचारस्य राज्ञा तृतीयाङ्कावसाने कृतस्य प्रणिपातरूपस्यातिक्रमेणोल्लङ्घनेन रूपेण । प्रकृत्यादित्वात्तृतीया । अपराद्धा अपराधं कृतवती । तत् उपचारातिक्रमणम् अनुकूलं हितम् आचरितं कृतम् । मालविकासमागमे मम प्रत्यूहायमानत्वा-

देवी—णिउणिए ! अवस्सं से सेवितं अज्जउत्तो जाणिस्सदि ॥ ( निपुणिके ! अवश्यमस्याः सेवितमार्यपुत्रो ज्ञास्यति ) ॥ १

निपुणिका—अणुग्गहीदम्हि ॥ ( अनुगृहीताऽस्मि ) ॥

परिव्राजिका—देव ! अमुना युक्तसंबन्धेन चरितार्थं माधवसेनं सभाजयितुं गच्छामः ॥ २

देवी—भअवदीए ण जुत्तं अम्हे परिच्चइदुम् ॥ ( भगवत्या न युक्तमस्मान्परित्यक्तुम् ) ॥ ३

राजा—भगवति ! मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामः ॥ ४

---

त्तोपसरणं राज्ञो हितमेवात एव मयैवं कृतमिति भावः । पूर्णमनोरथेन पूर्णः सिद्धो मनोरथो मालविकाधिगमरूपो यस्य तेन भर्त्रा । प्रसादमात्रेणानुग्रहमात्रेण । संभावयितव्या संमाननीया । मयि अनुग्रहः क्रियतामिति भावः ॥

१ अस्या इरावत्याः । कर्तरि षष्ठी । सेवितं सेवनं भावे क्तः । अवश्यं ज्ञास्यति । सेवनानुरूपं प्रसादं करिष्यतीत्यर्थः ॥

२ युक्तसंबन्धेन योग्येन सम्बन्धेन श्यालकतारूपेण चरितार्थं कृतार्थम् । माधवसेनं मालविकाया भ्रातरम् । सभाजयितुमानन्दयितुम् । गच्छामः गच्छामीत्यर्थः। अस्मदो द्वयोश्च इति बहुवचनम् ॥

३ भगवत्याः परिव्राजिकायास्तव न युक्तं न योग्यम् । परित्यक्तुं विहातुम् ॥

४ मदीयेषु मत्कर्तृकेष्वेव । तत्रभवतः माधवसेनस्य सभाजनाक्षराणि आनन्दनाक्षराणि पातयिष्यामो निवेशयिष्यामो लेखिष्याम इत्यर्थः । यथा त्वं समक्षं सभाजयितासि तथैव पत्रे लेखिष्यामीत्यर्थः ॥

परिव्राजिका—युवयोः स्नेहात्परवानयं जनः ॥ १

देवी—अज्जउत्त ! किं ते भूओ वि प्पिअं उवहरामि ॥
( आर्यपुत्र ! किं ते भूयोऽपि प्रियमुपहरामि ) ॥ २

राजा—त्वं मे प्रसादसुमुखी भव देवि नित्य-
मेतावदेव हृदये प्रतिपालनीयम् ।
तथापीदमस्तु ( भरतवाक्यम् )
आशास्यमीतिविगमप्रभृतिप्रजानां
संपत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

( इति निष्क्रान्ताः सर्वे । )

## इति पञ्चमोऽङ्कः ।

---

१ युवयो राज्ञीनृपयोः स्नेहाद्धेतुभूतात् अयं जनः मत्स्वरूपः परवान्परतन्त्रः । युवयोः स्नेहमवलोक्य गन्तुं न शक्नोमीति भावः ॥

२ आर्यपुत्र भर्तः राजन् । भूयोऽपि पुनरपि । मालविकाधिगमाद्भिन्नमित्यर्थः। ते प्रियं प्रीतिहेतु भूमं किम् उपहरामि ददामीत्यर्थः॥

त्वमिति ॥ हे देवि । त्वं कर्त्री । नित्यं मे मम प्रसादसुमुखी संतोषोन्मुखी भव । एतावत् इयत् एव हृदये मनसि प्रतिपालनीयम् अपेक्षणीयं मयेति शेषः । ननु किमनेनात्मंभरित्वप्रकाशकेन प्रार्थनेन सर्वजनीनं किंचिदाशास्यतामिति चेत्तत्राह । तथापीति । अन्यस्यानपेक्षणीयत्वेऽपि इदं वक्ष्यमाणम् अस्तु भवतु । प्रजानामीतिविगमप्रभृति ईतीनामनावृष्ट्यादिपीडानां विगमो अपाकरणं प्रभृति यत्र तत् आशास्यम् इच्छाविषयम् अभिलषितमित्यर्थः । अग्निमित्रे मयि गोप्तरि रक्षके सति न संपत्स्यते इति न अपि तु अवश्यमेव संपत्स्यते इत्येतदेवास्तु । अवश्यमेव प्रजानामभिलषितं संपद्यतामित्यर्थः । अत्र काटयवेमः । “सर्वनाटकप्रयोगान्ते भरतेन

सर्वकालसाधारण आशीर्वचने कर्तव्ये सत्यत्र प्रजानामाशास्यसिद्धिं प्रति गोप्तुरग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्यम्" इत्याह स्मेति शिवम् । "अतिवृष्टिरनावृष्टिः शलभा मूषकाः खगाः। प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः" इतीतयः ॥ २० ॥

क्व श्रीमत्कविचक्रवर्तिवचनं नानारसालंकृतं
गम्भीरं क्व च मामिका मतिरियं भव्याशयाऽसंस्तुता ।
किं तु श्रीशशिशेखरस्य कृपया सान्द्रानुरागाद्गुरो-
र्यत्किंचिद्व्यगदं तदेव विबुधा युष्माकमास्तां मुदे ॥ १ ॥
अष्टादशोत्तराष्टादशशतमितशालिवाहनृपशाके ।
संपूरिता मयेयं व्याख्या श्रीकालिदासकृतेः ॥ २ ॥

इति श्रीमत्पण्डितराजवंशावतंसवैयाकरणशेखरश्रीकान्ताचार्यसूरिणां छात्रेण वासिष्ठेन राशिवडेकरोपाह्वेन श्रीसदाशिवबुधसूनुना विद्यावाचस्पतिबिरुदशालिना श्रीअप्पाशर्मणा विरचितायां बालबोधिन्याख्यायां मालविकाग्निमित्रव्याख्ययां पञ्चमोऽङ्कः ॥ ५ ॥

---

॥ श्रीशिवार्पणमस्तु ॥

पुस्तक मिलनेका ठिकाना—
गंगाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" छापाखाना,
कल्याण-मुंबई.

सार। वसीकिदो किल वीरसेणप्पमुहेहिं दण्डचक्केहिं भट्टिणो विदब्भणाहो। मोइदो किल से दाआदो माहवसेणो। दूदो अ तेण महासाराणि रअणवाहणाणि सिप्पिदारिआभूइट्ठं (१) परिअणं अ उवाअणीकरिअ भट्टिणो सआसं पेसिदो। सो किल भट्टारअं पेक्खिस्सदि। (ञ)

मधु। गच्छ, अनुचिट्ठ अत्तणो णिओअं। अहं पि देवीं पेक्खिस्सं। (ट)

इति निष्क्रान्तौ।

## प्रवेशकः (ठ)।



---

(ञ) वशीकृतः किल वीरसेनप्रमुखैर्दण्डचक्रैर्भर्त्तुर्विदर्भनाथः। मोचितः किलास्य दायादो माधवसेनः। दूतश्च तेन महासाराणि रत्नवाहनानि शिल्पिदारिकाभूयिष्ठं परिजनश्चोपायनीकृत्य भर्त्तुः सकाशं प्रेषितः। स किल भर्त्तारं प्रेक्षिष्यते।

(ट) गच्छ अनुतिष्ठ आत्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये।

---

(ञ) सारेति। वीरसेनप्रमुखैः वीरसेनाख्यसेनापतिप्रभृतिभिः, भर्त्तुः अग्निमित्रस्य दण्डचक्रैः योद्धृसमूहैः। वशीकृतः विजित्य आयत्तीकृतः। अस्य विदर्भनाथस्य। दायं संक्रान्तधनं आददातीति दायादः सपिण्डः। तेन वीरसेनेन। महासाराणि परमोत्कृष्टानि बहुमूल्यानि। शिल्पिनः कारुप्रभृतयः दारिकाः कन्याश्च भूयिष्ठा बहुला यत्र तं परिजनं अधीनीकृतलोकसमूहं। स दूतः भर्त्तारं प्रेक्षिष्यते भर्त्तुः साक्षात्कारं करिष्यतीत्यर्थः।

(ठ) प्रवेशक इति। तल्लक्षणादिकमुक्तम्। अत्र अशोकमुकुलोद्गमं वीरसेन

---

(१) सिप्पकारिआभूइट्ठं इति पाठभेदः।

ततः प्रविशति प्रतिहारी ।

प्रती। आगत्तह्मि देवीए असोअसक्कारव्वाविदाए, विस्सवेहि अज्जउत्तं, इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसुणलच्छिं पच्चक्खीकादुं त्ति । ता जाव धम्मासणगदं देवं पड़िवालेमि । इति परिक्रामति । (ड)

नेपथ्ये वैतालिकाः । (ढ)

प्रथमः । दिष्ट्या दण्डेनैवारिशिरःसु (१) वर्त्तते देवः । (ण)

---

(ड) आगतास्मि देव्या अशोकसत्कारव्यापृतया, विज्ञापयार्य्यपुत्रम्, इच्छामि आर्य्यपुत्रेण सह अशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्त्तुमिति । तद्यावत् धर्म्मासनगतं देवं प्रतिपालयामि ।

---

विजयादिकस्य वृत्तकथांशस्य निदर्शनं, "स किल भट्टारअं पेक्खिस्सदि" इत्यनेन शिल्पदारिकासाक्षात्कारादिवर्त्तिष्यमाणकथांशस्य निदर्शनञ्च बोध्यम् ।

(ड) प्रतीति । अशोकस्य तपनीयाशोकस्य सत्कारे मूलपरिष्कारजलसेचनादिरूपे तदुपकारकर्म्मणि व्यापृतया आसक्तया । किमाज्ञप्तेति सत्त्वं देवीवाक्यमेवानुवदति विज्ञापयेत्यादि । प्रसूनलक्ष्मीं नवकुसुमोद्गमजनितशोभां । धर्म्मासनगतं विचारासनस्थितं । प्रतिपालयामि प्रतीक्षे ।

(ढ) नेपथ्य इति । वैतालिकाः मङ्गलपाठकाः ।

"वैतालिकः खड्जताले मङ्गलपाठकेऽपि च ।" इति हेमचन्द्रः ।

(ण) प्रथम इति । वैतालिकानां मध्ये प्रथमः कश्चित् नेपथ्यात एव ब्रवीतीत्यर्थः । दण्डेनैव राज्ञां चतुर्थोपायेन दमनेनैव, न तु दुर्बलवत् सामादिप्रयोगेण इत्येवशब्दार्थः । अरिशिरःसु वर्त्तते शत्रून् वशीकरोतीत्यर्थः । अतीव प्रबलप्रतापो भवानिति भावः ।

---

(१) दण्डेनैव रिपुशिरःसु इति पाठान्तरम् ।

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान्।
विजयकरिणामालानत्वं गतैः प्रबलस्य ते (१)
वरद! वरदारोधोवृक्षैः सहावनतो रिपुः॥१॥

कथमिदं ज्ञायत इत्याह परभृतेत्यादि। आत्ता सहचरत्वेन गृहीता धृता च रतिः रतिनाम्नी स्वभार्य्या वैरिविजयादावनुरागश्च येन स आत्तरतिः, तथा अङ्गवान् प्रशस्ताङ्गशाली सुन्दरदेह इत्यर्थः, पक्षे हस्त्यश्वरथपदातिलक्षणसेनाङ्गचतुष्टयवान्, अनङ्गो मन्मथ इव त्वं परभृतानां कोकिलानां परपुष्टानां वैतालिकानाञ्च कला मधुरास्फुटाः व्याहारा ध्वनयः स्तुतिवादात्मिका उक्तयश्च येषु तथोक्तेषु विदिशातीरोद्यानेषु विदिशाख्यनदीतीरस्थोपवनेषु मधुं वसन्तं माधुर्य्यञ्च नयसि आविर्भावयसि। रतिसहचरः सुन्दरशरीरो मन्मथो यथा कोकिलकलालापसमन्वितेषु विदिशातीरोद्यानेषु वसन्तभावमाविर्भावयति, तथा महोत्साहशीलः सकलसेनाङ्गवान् भवानपि माहृशवन्दिजनस्तुतिवादविशिष्टेषु विदिशातीरोद्यानेषु शोभामाविर्भावयतीति सरलार्थः। सर्व्वत्रैव महावीरश्रीसमाश्रयणादिति भावः। यथा च हे वरद! प्रार्थितप्रद! प्रबलस्य महाबलस्य ते तव रिपुः शत्रुः विजयकरिणां विजयजनकानां त्वदीयानामेव हस्तिनां आलानत्वं गतैः बन्धनस्तम्भत्वं प्राप्तैः वरदारोधोवृक्षैः वरदानामनदीतटस्थतरुभिः सह अवनतः नम्रीभूतः अधीनीभूतश्च। अत एवातीवप्रबलप्रतापत्वं भवत इति भावः।

अत्र पूर्वार्द्धे पूर्णोपमाऽलङ्कारः, द्वितीयार्द्धे सहोक्तिः, वरद वरदेति व्यञ्जनानां सकृत्साम्याच्छेकानुप्रासश्च, एतेषां मिथोनिरपेक्षत्वात् संसृष्टिः। तथा अनङ्गो नयति त्वन्तु नयसीत्युपमानोपमेययोः पुरुषभेदात् "लतेव राजसे तन्वि!" इत्यादिवत् भग्नप्रक्रमत्वदोषः, स च—

(१) विजयकरिणामालानाङ्करूपीढ़बलस्य ते, इति पाठान्तरम्।

द्वितीयः । विरचितपदं वीरप्रीत्या सुरोपम ! सूरिभि-
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकै विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥२॥

---

परभृतकलारावैश्वर्हन् ! भवान् मरतिर्मधुं
नयति विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।

इति पाठेन समाधेयः ।

"मधर्के वसन्ते च माधुर्य्ये द्रुमदैत्ययोः ।" इति व्याडिः ।

अङ्गवानिति प्रशंसायां वतुः । हरिणी वृत्तम् ॥ १ ॥

विरचितेति । हे सुरोपम । देवतुल्य ! दण्डानीकैः दमनार्थसेनाभिः प्रसह्य बलेन विदर्भपतेः विदर्भदेशाधिपते र्यज्ञसेनस्य श्रियं राजलक्ष्मीं हृतवत आनीतवत स्तव, तथा परिघवत् लौहमयलगुडवत् गुरुभिर्महद्भिः, दोर्भि श्चतुर्भिर्भुजैः प्रसह्य बलेन रुक्मिणीं भीष्मककन्यां हृतवतो विष्णोश्च द्वारकानाथस्य कृष्णस्य च एतयोरुभयो श्चरितं चरित्रं कर्त्तृ सूरिभिः पण्डितैः वीरप्रीत्या वीरजनं प्रति अनुरागवशेन विरचितानि निर्म्मितानि पदानि माहात्म्यप्रकाशकवाक्यानि यस्य तत् विरचितपदं सत् माहात्म्यप्रकाशनपूर्वकं वर्णितं सदित्यर्थः क्रथकैशिकान् विदर्भदेशान् मध्ये कृत्य आश्रित्य स्थितं विद्यमानं। वीरप्रियैः पण्डितैः कीर्त्तिता रुक्मिणीं हृतवतः कृष्णस्य कीर्त्ति र्यथा विदर्भदेशे विस्तीर्णा, तथा विदर्भाधिपतेर्यज्ञसेनस्य राजलक्ष्मीं हृतवतो भवतोऽपि कीर्त्तिर्विदर्भदेशे विस्तीर्णेति सरलार्थः ।

अत्र अप्रस्तुतस्य विष्णोः प्रस्तुतस्य चाग्निमित्रस्य हृतवत् इत्येकक्रियासम्बन्धात् दीपकालङ्कारः सुरोपम परिघगुरुभिरित्युपमाभ्यां सङ्कीर्य्यते सुरोपमसूरिभिरित्यत्र छेकानुप्रासश्च । दीपकेन चाग्निमित्रस्य विष्णुतुल्यत्वं व्यज्यते । तथा विष्णोरित्यतः परं स्थितियोग्यस्य चकारस्यान्यत्र स्थिते रक्रमतादोषः, स च

प्रती। **एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि । अहं वि दाव इमस्स मुहादो (१) ओसरिअ एदं मुहालिन्दतोरणं समस्सिदा (२) होमि ।** इत्येकान्ते स्थिता। (त)

(त) एष जयशब्दसूचितप्रस्थानो भर्त्ता इत एवागच्छति। अहमपि तावत् अस्य मुखादपसृत्य एतन्मुखालिन्दतोरणं समाश्रिता भवामि ।

---

परिघगुरुभिर्दोर्भिर्विष्णो र्य भीष्मकजां बलात् ।

इति पाठेन समाधेयः।

मध्ये इति सप्तम्यन्तप्रतिरूपकमव्ययं तदुपपदे करोतेः "समासे भाविन्यनञ् क्त्वो ल्यप्" इति क्त्वाप्रत्ययस्य ल्यबादेशः। एते पाणौपर्य्यन्ताः सप्तम्यन्तप्रतिरूपका अव्यया" इति विलोचनः। क्रथवंश्यानां कैशिकवंश्यानाञ्चाधिष्ठानात् क्रथकैशिकेति विदर्भदेशस्य नामान्तरम्। "बहुलवदस्यादेरेकाधिकरणस्य प्रायेणे"ति बहुवचनम् ।

हरिणी वृत्तम् ॥ २ ॥

(त) प्रतीति। जयशब्देन सूचितं द्योतितं प्रस्थानं सभागृहान्निष्क्रमणं यस्य सः। मुखात् सम्मुखदेशात्। मुखालिन्दतोरणं सम्मुखस्थबहिर्द्वारप्रकोष्ठतोरणं तेनान्तरितेत्यर्थः।

---

(१) पमुहादो ओसादो इति पाठान्तरम

(२) खम्भन्तरिदा इति पाठभेदः।

प्रविश्य सवयस्यो राजा ।

कान्तां विचिन्त्य सुलभेतरसम्प्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च ।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते च हृदयं सुखमश्नुते च ॥ ३ ॥

---

कान्तामिति । कान्तां मालविकां, सुलभेतर इरावतीप्रभृतिभिर्विघ्नाचरणाद्दुर्लभः सम्प्रयोगः समागमो यस्या स्तां तथाभूतां विचिन्त्य विभाव्य, तथा बलैः सैन्यैः विदर्भपतिं यज्ञसेनं आनमितञ्च अधीनीकृतञ्च श्रुत्वा विद्यमानस्य ममेत्यर्थः हृदयं कर्त्तृ आतपे रौद्रे स्थितमिति शेषः पुनर्धाराभिरतिवृष्टिभिः अभिहतं ताडितं सरोजं पद्ममिव दुःखायते दुःखमनुभवति च सुखमश्नुते सुखञ्चानुभवति । मालविकाया दुर्लभसमागमत्वचिन्ता दुःखहेतुः तथा विदर्भपतिविजयश्रवणञ्च सुखहेतुरिति भावः ।

अत्र दुःखानुभवसुखानुभवयोर्विरूपयोः संघटनया विषमाऽलङ्कार उपमया सङ्कीर्य्यते । तथा आनमितमित्यनन्तरस्थितियोग्यस्य चकारस्य बलैरित्यनन्तरावस्थानात् अक्रमतादोषः, एवमातपे इत्यत्र स्थितमित्यध्याहारात् न्यूनपदत्वदोषः, किञ्च चतुर्थचरणे "यशोऽधिगन्तुं सुखलिप्सया वा" इत्यादिवत् विभिन्नधातूपन्यासात् भग्नप्रक्रमता-दोषोऽपि । तेन

श्रुत्वा विदर्भपतिमानमितञ्च सैन्यैः ।
धाराभिराहतमिवाम्बुजमातपस्थं
दुःखायते मम मनोऽद्य सुखायते च ।

इति पाठेन तेषां समाधानं विधेयम् ।

वसन्ततिलका वृत्तम् ॥ ३ ॥

विदू। इह पेक्खामि, (१) एकन्तसुहिदो भवं भविस्सदि। (थ)

राजा। कथमिव।

विदू। अज्ज किल देवीए धारिणीए पण्डिदकोसिइ भणिदा। भअवदि! तुमं यदि सच्चं पसाहणगव्वं वहेसि, दंसेहि दाव मालविआए सरीरे विवाहणेवत्थं त्ति। तदो सविसेसकोदुहलं अलंकिदा मालविआ तत्तभोदीए। कदावि पूरए भवदो मणोरहं। (द)

राजा। सखे! मदपेक्षामनुसृत्य (२) अनया धारिण्या पूर्वचरितैः सम्भाव्यत एवैतत्। (ध)

---

(थ) इह प्रेक्षे एकान्तसुखितो भवान् भविष्यतीति।

(द) अद्य किल देव्या धारिण्या पण्डितकौशिकी भणिता। भगवति! त्वं यदि सत्यं प्रसाधनगर्वं वहसि, दर्शय तावत् मालविकायाः शरीरे विवाहनेपथ्यमिति। ततः सविशेषकौतूहलं अलङ्कृता मालविका तत्रभवत्या। कदापि पूरयेत् भवतो मनोरथम्।

---

(थ) विदूति। प्रेक्षे अनुमिनोमि। एकान्तं सुखं सञ्जातमस्येति एकान्तसुखितः तारकादित्वादितच्। मालविकायाः समागमेन महासुखीत्यर्थः।

(द) विदूति। प्रसाधनगर्वं अलङ्करणविषये अहङ्कारं परस्यालङ्कारादिपरिधापने नैपुण्याभिमानमित्यर्थः। विवाहनेपथ्यं विवाहोपयोगिनं वेशं। तत्रभवत्या कौशिक्या। पूरयेत् देवीति शेषः।

(ध) राजेति। मदपेक्षामनुसृत्य मम सुखसन्तोषविधानापेक्षयेत्यर्थः। पूर्वचरितैः

---

(१) जह अहं पेक्खामि इति पाठान्तरम्।

(२) अनुप्राप्य इति पाठभेदः।

प्रती। उपगम्य। जेदु जेदु देवो। देवी विस्सवेदि। तवणीआसोअस्स कुसुमोग्गमसिरिं अज्जउत्तेण सह पच्चक्खीकादुं इच्छामि त्ति (१)। (न)

राजा। ननु तत्रैव देवी ?। (प)

प्रती। अधइं। जहरिहसंमाणसुहिअं (२) अन्तेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण (३) समं देवं पड़िवालेदि। (फ)

---

(न) जयतु जयतु देवः। देवी विज्ञापयति। तपनीयाशोकस्य कुसुमोद्गमश्रियमार्य्यपुत्रेण सह प्रत्यक्षीकर्त्तुमिच्छामीति।

(फ) अथकिम्। यथार्हसम्मानसुखितमन्तःपुरं विसृज्य मालविकापुरोगेण आत्मनः परिजनेन समं देवं प्रतिपालयति।

---

पूर्वकृतव्यापारैः। एतत् ममोद्देशे मालविकाया अलङ्करणम्। एतावन्तं कालं यावत् देव्या मम सुखसन्तोषविधानाय यद्यदाचरितं तेनाहमिसदनुमातुमर्हामि यत्, ममोद्देश एवैतत्मालविकाया वेशभूषाकरणमिति सरलार्थः।

(न) प्रतीति। कुसुमोद्गमश्रियं पुष्पोत्पत्तिशोभाम्। इति शब्दस्य विज्ञापयतीत्यनेनान्वयः।

(प) राजेति। ननुशब्दः प्रश्ने। तत्रैव प्रमदवन एव।

(फ) प्रतीति। यथार्हं यथायोग्यं सम्मानसुखं सञ्जातमस्येति यथार्हसम्मानसुखितं

---

(१) कुसुमसइदंसणेण मह आरम्भो सफलो करीअदुत्ति इति भिन्नः पाठः।

(२) जहा तुह संमाणसुहं इति पाठभेदः।

(३) पच्छिम कोसिआए च इत्यधिकः पाठः क्वचित्।

राजा । सहर्षं विदूषकं विलोक्य । जयसेने ! गच्छाग्रतः । (व)

प्रती । एदु एदु देवो । इति परिक्रामति । (भ)

विदू । विलोक्य । भो वअस्स ! किंचि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि । (म)

राजा । यथाह (१) भवान् । (य)

अग्रे विकीर्णकुरुवकफलजालकभिद्यमानसहकारम् ।
परिणामाभिमुखमृतो (२) रुत्सुकयति यौवनं चेतः ॥४॥

(भ) एतु एतु देवः ।

(म) भो वयस्य ! किञ्चित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।

महिषीयोग्य समुत्कृष्टासन-चामरान्दोलनादि-सम्मानसुखान्वितमित्यर्थः । एतेन देव्याः प्रमदवनेऽवस्थानं उद्देश्यविशेषसाधनाय विशेषावश्यकमिति ध्वनितं । मालविका पुरोगा अग्रवर्त्तिनी यस्य तेन ।

(व) राजेति । यथार्थमेव भवताभिहितमिति इङ्गितेन ज्ञापनाय विदूषकस्याबलोकनम् । जयसेने इति प्रतीहार्य्याः सम्बोधनम् । गच्छाग्रतः प्रमदवने गन्तुमिति भावः ।

(म) विदूिति । विलोक्य प्रमदवनमिति शेषः । किञ्चित्परिवृत्तं पूर्वस्मात् ईषत् परिवर्त्तनं प्राप्तं यौवनं यस्य सः । पूर्वस्मादाधिक्येन पूर्णदशामापन्नो वसन्त इति भावः ।

(य) राजेति । यथाह समीचीनं ब्रवीति ।

तत्समीचीनतां स्वयमपि प्रतिपादयितुमाह अग्र इति । अग्रे पुरतः विकीर्णानां प्रसृतानां कुरुवकफलानां रक्तझिण्टीफलानां जालकेन समूहेन भिद्यमान आश्रीयमानः

(१) यदाह इति पाठान्तरम् ।

(२) परिणामसुखमिदमृतोरिति भिन्नः पादः ।

विदू। भो! अअं सो दिसणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ। आलोएदु भवं। (र)

राजा। स्थाने खलु प्रसवमन्थरोऽयमभूत्, यदिदानीमनन्य-साधारणीं शोभामुद्वहति (१)। पश्य (ल)

---

(र) भोः! अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः। आलोकयतु भवान्।

---

सहकार आम्रतरुर्यस्मिन् तत् तथोक्तम्। परिणामाभिमुखं वार्द्धक्योन्मुखं ऋतो वसन्तस्य यौवनं कर्त्तृ चेतः माहृशानां मनः, उत्सुकयति उत्कण्ठयति। तदानीं मालविकादर्शनसमये प्रमदवने (तृतीयाङ्के) कुरुवककुसुममात्रं दृष्टं इदानीन्तु फलदर्शनात् "किंचि परिवुत्तजोव्वणो विअ वसन्तो" इति त्वया यदुक्तं तत् सत्यमेवेति भावः।

अत्र वसन्तस्य प्रस्तुतत्वेन ऋतुशब्दस्य वसन्तपरतयैवाभिधानात् न विशेषेऽविशेषा-ख्यदोष इति भाव्यम्।

आर्य्या जातिः॥ ४॥

(र) विदृति! कुसुमस्तवकैः पुष्पगुच्छैः दत्तमर्पितं नेपथ्यं वेशो यस्य सः, कुसुम-स्तवकरूपवेशविशिष्ट इत्यर्थः। अयं दृश्यमानः, स मालविकादत्तदोहदः।

(ल) राजेति। अयं तपनीयाशोकः प्रसवे कुसुमोत्पादने मन्थरः जड़ः असमर्थ इति यावत् अभूत्, इति यत् तत् स्थाने खलु युक्तमेव। यद् यस्माद्धेतोः, इदानीं अनन्य-साधारणीं अनन्यसमानां सर्वशोभाभ्य एवोत्तमामित्यर्थः शोभां उद्वहति धारयति। यः पूर्वं कार्य्यक्षमासामर्थ्यमिव प्रदर्श्य समनन्तरमेव असाधारणसामर्थ्यं प्रदर्शयति स एव श्रेयानित्यद्भुतचमत्कारी बहूनामभिमत इति भावः।

---

(१) स्थाने खलु प्रसवमन्थरोऽभूत् यदयमिदानीमनन्यसाधारणीं शोभां पुष्यति, इति पाठान्तरम्।

सर्वाशोकतरूणां (१) प्रथमं सूचितवसन्तविभवानाम्।
निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव कुसुमानि (२) ॥ ५ ॥

विदू। तह। भो! वीसद्धो होहि। अह्मेसु सण्णिहिदेसु (३) वि धारिणी पासपरिवट्टिणीं (४) मालविअं अणुमण्णेदि। (व)

---

(व) तथा। भोः! विस्रब्धो भव। अस्मासु सन्निहितेष्वपि धारिणीपार्श्वपरिवर्त्तिनीं मालविकामनुमन्यते।

---

सर्वेति। निर्वृत्तो निष्पन्नः दोहदो रमणीचरणाघातो यस्मिन् तादृशे अस्मिन् तपनीयाशोके प्रथमं सूचितो ज्ञापितो वसन्तविभवः कुसुमोत्पत्तिरूपा वसन्तकालसम्पत्ति र्यैः, तेषां सर्वाशोकतरूणां सर्वेषामशोकवृक्षाणां कुसुमानि संक्रान्तानि सञ्चरितानीव। अस्य ईदृशकुसुमप्राचुर्य्ये मालविकापदस्पर्श एव हेतुरिति भावः।

अत्र भावाभिमानिनी वाच्या क्रियोत्प्रेक्षाऽलङ्कारः।

आर्य्या जातिः ॥ ५ ॥

(व) विदिति। तथा, तदेव भवदुक्तं सत्यमित्यर्थः। विस्रब्धो भव मालविकासम्भोग-विषये विश्वस्तो भव कथमित्याह अस्मास्वित्यादि। मालविकां पार्श्ववर्त्तिनीं अनुमन्यते निषेधमकृत्वा अस्माकं दृष्टिगोचरे स्वपार्श्वे स्थातुमेव मालविकामनुमोदते, न पुनः पूर्ववदस्माकं दृष्टिपथादपसारयतीत्यर्थः। तेन हि धारिण्याः प्रतिकूलबुद्धिरपगतेति निश्चयात् प्रतिबन्धकाभावे कार्य्यसिद्धिरावश्यकीति न्यायादवश्यमेव मालविकासमागमो भवतो भविष्यतीति भावः।

---

(१) सर्वाशोकलतानामिति पाठभेदः।

(२) मुकुलानीति क्वचित् पाठः।

(३) उवगदेसु इति भिन्नः पाठः।

(४) पासपरिवत्तिणं इति पाठान्तरम्।

राजा। सहर्षम्। पश्य पश्य सखे!।

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ ६ ॥

ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः। (अ)

माल। आत्मगतम्। जाणामि णिमित्तं मह कोदुआलंकारस्स तह वि मे हिअअं विसिणीपत्तगदं विअ सलिलं वेवदि। दक्खिणेदरं णअणं अ बहुसो फुरदि। (ष)

(ष) जानामि निमित्तं मम कौतुकालङ्कारस्य, तथापि मे हृदयं विसिनीपत्रगतमिव सलिलं वेपते। दक्षिणेतरत नयनञ्च बहुशः स्फुरति।

मामिति। विस्तृते अभिवादनार्थं प्रसारिते हस्तकमले पाणिपद्मद्वयं यया तया तथोक्तया प्रियया नवप्रेमास्पदत्वात् अत्यन्तं दयितया मालविकया विनयात् नम्रीभावात् अनूत्थिता पश्चादुद्गता इयं देवी धारिणी नरेन्द्रलक्ष्म्या राजश्रिया अनूत्थिता वसुमतीव पृथिवीव मां अभ्युत्तिष्ठति मां प्रति सम्मानप्रदर्शनार्थं दण्डायमाना भवति।

अत्र उपमाऽलङ्कारः, तथा हस्तौ कमले इव एवं हस्ताविव कमले इत्युभयविधसमासस्यापि सम्भवात् साधकबाधकप्रमाणाभावेन उपमारूपकयोः सन्देहसङ्करश्च, इत्युभयोरङ्गाङ्गिभावेन सङ्करः।

"अन्वासितमरुन्धत्या" इत्यादौ अन्वासितमित्यादिवत् अनूत्थितेत्यस्य सकर्म्मकत्वं विवक्षितम्।

आर्य्या जातिः॥ ६॥

(अ) तत इति। विभवतः अभिनेतॄणां जनसम्पत्त्यनुसारेण। यावन्तः सम्भवन्ति तावन्त एव देव्याः परिवाराः प्रविशन्ति, नतु तेषां संख्याविशेषोऽपेक्षित इत्याशयः। परिवारः परिजनः।

(ष) मालेति। कौतुकालङ्कारस्य कौतूहलप्रयुक्तदेवीकर्त्तृकभूषणक्रियायाः निमित्तं

विदू। भो वअस्स! विवाहणेवत्थेण सविसेसं क्खु सोहदि अत्तभोदी मालविआ। (स)

राजा। पश्याम्येनाम्। यैषा (१)

अनतिलम्बिदुकूलनिवासिनी
बहुभिराभरणैः (२) प्रतिभाति मे।

---

(स) भो वयस्य! विवाहनेपथ्येन सविशेषं खलु शोभते अत्रभवती मालविका।

---

हेतुं जानामि। तपनीयाशोके दोहददानात् पञ्चरात्राभ्यन्तरे तस्य कुसुमोद्गमेन प्रतिश्रुतो देव्याः प्रसाद एवात्र कारणमिति भावः। बिसिनीपत्रगतं पद्मिनीपत्रस्थितम् सलिलं जलमिव। वेपते कम्पते। मम भाग्यदोषात् पुनरपि देवी यदि प्रतिबन्धकतामाचरेदिति शङ्कयेति भावः। किञ्चेति चार्थः। दक्षिणेतरत् वामं। स्फुरति स्पन्दते। स्त्रीणां वामनयनस्पन्दनस्य अर्थलाभसूचकतया राजलक्षणमहार्थलाभो मे भविष्यतीत्याशंसितुमप्यर्हामीति भावः। तथा च वसन्तराजशाकुनम्।

"भ्रूभागमध्ये प्रियसङ्गमः स्यात् नासाक्षिमध्ये च सहायलाभः।
दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्विस्फुरिते दृगादौ॥
पुंसां सदा दक्षिणदेहभागे स्त्रीणाञ्च वामावयवे प्रजातः।"

अत्र स्मृति शङ्का हर्षाख्यास्त्रयो भावाः प्रदर्शिताः।

(स) विदिति। विवाहनेपथ्येन विवाहोपयोगिना क्षौमवसनपरिधानादिना वेशेन। सविशेषं अतिमात्रम्।

अनतीति। अनतिलम्बि नातिदीर्घं दुकूलं क्षौमवसनं निवस्ते परिदधातीति अनतिलम्बिदुकूलनिवासिनी या एषा मालविका बहुभिराभरणैः प्रचुरैरलङ्कारैः, कृतानि

---

(१) एषेति पाठभेदः।

(२) लघुभिराभरणैरिति पाठान्तरम्।

उडुगणैरुदयोन्मुखचन्द्रिका
हतहिमैरिव चैत्रविभावरी ॥ ७ ॥

देवी। उपेत्य। जेदु जेदु अज्जउत्तो। (छ)

विदू। वड्ढदु भोदी। (ज)

---

(छ) जयतु जयतु आर्य्यपुत्रः।

(ज) वर्द्धतां भवती।

---

कालेन नाशितानि हिमानि समाच्छादकनीहारा येषां तैः हतहिमैः उडुगणैः नक्षत्रसमूहैः, उदयोन्मुखी क्रमेणोदयमाना चन्द्रिका ज्योत्स्ना यस्यां सा उदयोन्मुखचन्द्रिका शुक्लपक्षीयेत्यर्थः चैत्रविभावरी चैत्रमासीयरात्रिरिव मे मम प्रतिभाति प्रतिभाविषयो भवति ज्ञानगोचरो भवति। तामेनां पश्यामीत्यन्वयः। सुतरां सविशेषं शोभते इति यदुक्तं तत् सत्यमेवेति भावः।

अत्रोपमाऽलङ्कारः। चन्द्रिकया दुकूलस्य, उडुगणैश्च आभरणानां सादृश्यं बोध्यं। हतहिमैरित्यनेन उडुगणानां सातिशयोज्ज्वलत्वं प्रतिपादितं तेन च आभरणानामपि मार्जनादिवशात् विशेषौज्ज्वल्यं ध्वनितं, तेन च प्रकृतविशेषशोभाया उपकारित्वात् न अपुष्टत्वदोषः। चैत्ररात्रेरेव विशेषोत्तेजकतया समुत्तेजिकाया मालविकायाः सादृश्याय चैत्रविभावरीत्युक्तं तेन न अविशेषे विशेषाख्यदोषः।

"दुकूलम्। (क्लीं) क्षौमवस्त्र" मिति शब्दकल्पद्रुमः। "नक्षत्रमृक्षं भं तारा तारका प्युडुवास्त्रियां" मित्यमरः।

हतानि हिमानि येषामिति आच्छाद्याच्छादकत्वसम्बन्धे षष्ठीति षष्ठ्यन्तगर्भो बहुव्रीहिः सङ्गच्छते।

द्रुतविलम्बितं वृत्तम् ॥ ७ ॥

परि। विजयतां देवः ।

राजा। भगवति ! अभिवादये । (क)

परि। अभिप्रेतसिद्धिरस्तु । (ख)

देवी। सस्मितम्। अज्जउत्त ! एस दे अह्मेहिं तरुणीजणसहाअस्स असोओ संकेदगेहओ कप्पिदो । (ग)

विदू। भो ! आराहिओ सि । (घ)

राजा। सव्रीडमशोकमभितः परिक्रामन्। (ङ)

---

(ग) आर्य्यपुत्र ! एष ते अस्माभिस्तरुणीजनसहायस्य अशोकः सङ्केतगेहकः कल्पितः।

(घ) भोः। आराधितोऽसि।

---

(क) राजेति। अभिवादये भवतीमिति शेषः।

(ख) परीति। अभिप्रेतसिद्धिरस्तु इत्यनेन मालविकासमागमस्ते भवत्विति ध्वन्यते।

(ग) देवीति। अस्माभिः एष अशोकः तरुणीजनसहायस्य युवतिसमन्वितस्य ते तव सङ्केतगेहकः समागमसङ्केतगृहमिव कल्पितः अस्य मूले यथेष्टं विहर्त्तुमर्हसीति भावः। सङ्केतगेहक इति इवार्थे कन्।

(घ) विदूति। भो राजन् ! आराधितोऽसि सत्कृतोऽसि सम्मानितोऽसीति यावत् देव्या इति शेषः। चिरविरोधिन्या देव्या यत् सन्तोषणं तत् विस्मयकरमेवेति भावः।

(ङ) राजेति। सव्रीडं कौशिकीप्रभृतीनामन्तिक एव देव्या तथोक्तत्वात् सलज्जं, अशोकमभितः अशोकतरोश्चतुष्पार्श्वे परिक्रामन् पदक्षेपं कुर्वन्। अशोकमिति "तसोभयाभि परिसर्वे"रिति द्वितीया।

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ ८ ॥

विदू। भो ! वीसद्धो भविअ जोव्वणवदिं पेक्ख । (च)

---

(च) भोः ! विस्रब्धो भूत्वा यौवनवतीं प्रेक्षस्व।

---

नायमिति। देव्या त्वया अयमशोकः ईदृशानां सत्काराणां एवम्भूतानां सम्मानानां भाजनत्वं पात्रत्वं न नेयः न प्रापणीय इति न, अपितु नेय एव, भवत्या अयमशोकः सर्वथैव ईदृक् सम्माननीय इत्यर्थः। कथमित्याह य इत्यादि। यः अशोकः माधवश्रिया वसन्तलक्ष्म्या नियोगे कुसुमवान् भव इत्येवमादेशे सावज्ञः अवहेलाऽन्वितः सन् त्वत्-प्रयत्ने मालविकाचरणाघातप्रजोजके त्वदीयप्रयासे पुष्पैः विकसितस्वकीयकुसुमैः आदरं सम्मानं शंसति सूचयति। यः खलु निखिलकुसुमविकासकारणीभूतं वसन्तश्रिया नियोगमप्यनादृत्य स्वकीयकुसुमविकासेन त्वदीयनियोगे सम्माननं प्रदर्शितं तं प्रति मद्वस्थानिर्देशलक्षण सम्मानप्रदर्शनं तवोचितमेवेति भावः।

अत्र पूर्वार्द्धवाक्यार्थं प्रति परार्द्धवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गम-लङ्कारः। तुच्छः खल्वशोको देव्या सत्कारभाजनत्वं न नेय इति सम्भाव्यमाननिषेध-निवर्त्तनाय द्वितीयो नञ्। तथा च वामनः "सम्भाव्यनिषेधनिवर्त्तने नञ्द्वय"मिति। अतएवात्र नाधिकपदत्वदोषः।

शालिनी वृत्तम् ॥ ८ ॥

(च) विदृति। भो ! राजन् ! विस्रब्धः इदानीं देवीभयाभावात् विश्वस्तो भूत्वा यौवनवतीं प्रशस्तयौवनां मालविकामित्यर्थात् प्रेक्षस्व पश्य। पक्षे यौवनवतीं पूर्णावयवाम्।

देवी। कां ? (१)। (छ)

विदू। तवणीआसोअस्स कुसुमसोहं। (ज)

सर्वे उपविशन्ति।

राजा। मालविकां विलोक्यात्मगतम्। कष्टः खलु सन्निधिवियोगः।(झ)

अहं रथाङ्गनामेव प्रिया सहचरीव मे।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ॥ ८॥

(छ) काम् ?।

(ज) तपनीयाशोकस्य कुसुमशोभाम्।

(ज) विदिति। स्वसमक्षमेव सप्रागल्भ्यमासक्तिविशेषं वीक्षमाणा देवी चेदीर्ष्यया पुनरपि प्रतिबध्नीयादित्याशङ्कमानो विदूषकः स्वोक्तमेव यौवनवतीमिति मालविका-विशेषणं कुसुमशोभायां योजयति तपनीयेत्यादि।

(झ) राजेति। सन्निधौ समीपेऽपि वियोगो विच्छेदः कष्टः विप्रकृष्ट वियोगात् कष्टकरः। खलुशब्दो वाक्यालङ्कारे।

ननु कथमिदानीमपि वियोगकष्टमनुभवसि स्वयमेव यतमानः सम्भोगमस्याः कुर्वन् कथं न तदपसारयसीत्याह अहमिति। अहं रथाङ्गनामा चक्रवाक इव, मे मम प्रिया वल्लभा मालविका सहचरी चक्रवाकसहचारिणी चक्रवाकीव, तथा न अनुज्ञातः अनुमोदितः सम्पर्कः संसर्गो यया सा तथोक्ता धारिणी देवी नौ आवयोः न अनुज्ञातः सम्पर्को यस्यां सा अननुज्ञातसम्पर्का रजनी रात्रिरिव वर्त्तत इति शेषः। रात्रेरिव धारिण्याः प्रतिबन्धकतया चक्रवाकदम्पतीवदावां सन्निधाविव वियोगकष्टमनुभवाव इति भावः।

अत्र तिसृणामुपमानानामङ्गाङ्गिभावेन सङ्करालङ्कारः। तथा कस्य सहचरीति सन्देहात् सन्दिग्धत्वदोषः 'प्रिया ततसहगेव मे' इति पाठेन तत् समाधानं विधेयम्॥८॥

(१) कां विश्व इति क्वचित् पाठः।

प्रविश्य कञ्चुकी। विजयतां देवः (१)। देव! अमात्यो विज्ञापयति। तस्मिन् काले विदर्भराजोपायने द्वे शिल्पिदारिके (२) मार्गपरिश्रमादलघुशरीरे इति कृत्वा न प्रवेशिते। सम्प्रति देवोपस्थानयोग्ये संवृत्ते। तदाज्ञां देवो दातुमर्हतीति। (ञ)

राजा। प्रवेशय ते। (ट)

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रम्य ताभ्यां सह प्रविश्य। इत इतो भवत्यौ। (ठ)

प्रथ। जनान्तिकम्। हला मदणिए! (३) अपुव्वं इमं राअउलं पविसन्तीए पसीददि मे हिअअं (४)। (ड)

---

(ड) हला मदनिके! अपूर्वमिदं राजकुलं प्रविशन्त्याः प्रसीदति मे हृदयम्।

---

(ञ) प्रविश्येति। विदर्भराजस्य यज्ञसेनस्य उपायने उपहारस्वरूपे उपहारीकृत्य प्रेरिते इत्यर्थः। शिल्पिदारिके शिल्पिकन्याद्वयं मार्गपरिश्रमात् विपुलपथागमनखेदात् अलघु भारवत् असुस्थं शरीरं ययो स्ते, इति कृत्वा इति हेतोरित्यर्थः। देवस्य भवत उपस्थानयोग्ये विश्रामकरणात् लघुशरीरतया समीपागमनसमर्थे। तस्मात्, आज्ञां तयोः प्रवेशानुमतिं। इति इत्यन्तं विज्ञापयतीत्यन्वयः।

(ट) राजेति। ते शिल्पिदारिके।

(ठ) कञ्चुकीति। वैचित्र्येण मालविकायाः परिचयाय अनयोः प्रवेश इति प्रतीयते।

(ड) प्रथेति। मदयति हृदयं यूनां रूपादिनेति मदनिका नन्द्यादेर्युः। द्वितीयाया नामैतत्। अपूर्वं आश्चर्यं। राजकुलं राजगृहं। प्रसीदति निर्म्मलीभवति सन्तुष्यति।

---

(१) जयति जयति देव इति पाठान्तरम्। (२) शिल्पकारिके इति पाठभेदः।

(३) रमणीए! इति भिन्नः पाठः।

(४) हिअअव्भन्तरसङ्कहो अप्पा इति क्वचित् पाठः।

द्विती। जोसिणिए! मह वि एव्वं। अत्थि क्खु लोअप्पवादो 'आआमि सुहं दुक्खं वा हिअअसमवत्था कधेदि' त्ति। (ढ)

प्रथ। सो सच्चो दाणिं होदु। (ण)

कञ्चु। एष देव्या सह देवस्तिष्ठति। उपसर्पतां भवत्यौ। (त)

उभे। उपसर्पतः।

मालविका परिव्राजिका च चेट्यौ दृष्ट्वा परस्परमवलोकयतः (१)। थ

---

(ढ) ज्योत्स्निके! ममाप्येवम्। अस्ति खलु लोकप्रवादः 'आगामि सुखं दुःखं वा हृदयसमवस्था कथयती'ति।

(ण) स सत्य इदानीं भवतु।

---

(ढ) द्वितीति। ज्योत्स्नासदृशचिक्कणरूपवत्त्वात् ज्योत्स्निकेति प्रथमाया नाम। उभयत्रापि संज्ञायां कप्रत्ययः। ममाप्येवं, हृदयं प्रसीदतीति वाक्यशेषः। हृदयसमवस्था चित्तस्य प्रसादो दौःस्थ्यं वा। आगामि भविष्यत्। कथयति सूचयति। चित्तप्रसादो भविष्यत् सुखं सूचयति, चित्तदौःस्थ्यन्तु भविष्यत् दुःखमवगमयति। सुतरामीदृशचित्तप्रसाददर्शनात् सुखमेवावयोर्भविष्यतीति मन्य इति भावः।

(ण) प्रथेति। स उक्तो लोकप्रवादः, सत्यो भवतु, तथाच सति खल्वावयोश्चित्तप्रसादात् सुखमेव भविष्यतीति भावः।

(त) कञ्चुकीति। उपसर्पतां राजमहिष्योः समीपं गच्छतां।

(थ) मालेति। चेट्यौ नवागते दास्यौ शिल्पिदारिकाद्वयमिति यावत्। अत्र कथमिमे समागते इति विस्मयसूचनाय परस्परावलोकनम्।

---

(१) उभे।...मालविका परिव्राजिकाच दृष्ट्वा परस्परमवलोकयत इति पाठान्तरम्।

उभे । प्रणिपत्य । जेदु जेदु भट्टा, जेदु जेदु भट्टिणी । (द)

राजा । निषीदतम् । (ध)

उभे । राजाज्ञया उपविष्टे ।

राजा । कस्यां कलायामभिविनीते भवत्यौ ? (न)

उभे । भट्टा ! संगोदे अब्भन्तर म्ह । (प)

राजा । देवि ! गृह्यतामनयोरन्यतरा । (फ)

देवी । मालविए ! इदो पेक्ख । कदरा ते संगोदसहआरिणी रुच्चदि (१) । (ब)

---

(द) जयतु जयतु भर्त्ता । जयतु जयतु भट्टिनी ।

(प) भर्त्तः ! सङ्गीते अभ्यन्तरे स्वः ।

(ब) मालविके ! इतः प्रेक्षस्व । कतरा ते सङ्गीतसहकारिणी रोचते ? ।

---

(ध) राजेति । निषीदतं उपविशतं युवामिति शेषः ।

(न) राजेति । कलायां नृत्यगीतादिकलाविद्यायां अभिविनीते शिक्षिते । शिल्पिदारिके इति कञ्चुकिवचनश्रवणादेव ते कलाविद्यायां शिक्षिते इति राज्ञः सामान्येनावगततया कस्यां कलायामिति विशेषः प्रश्न उपपद्यत इति बोध्यम् ।

(प) उभे इति । सङ्गीते सङ्गीतविद्यायां अभ्यन्तरे अन्तर्निविष्टे शिक्षिते इत्यर्थः । स्व आवामिति शेषः ।

(फ) राजेति । अनयोः शिल्पिदारिकयोः मध्ये अन्यतरा एकतरा ।

(ब) देवीति । इतः प्रेक्षस्व अस्यां दिशि पश्य इमे शिल्पिदारिके प्रति दृष्टिपातं कुर्वित्यर्थः । कतरा अनयोर्मध्ये का ते तव सङ्गीते सहकारिणी सहायभूता रोचते । तामहं गृह्णामीति भावः ।

---

(१) इदो दक्खदरा सङ्गीदसहआरिणी दे का रुच्चदि इति पाठभेदः ।

उभे। मालविकां दृष्ट्वा। अम्मो भट्टिदारिआ! इति प्रणम्य। जेदु जेदु भट्टिदारिआ। तया सह वाष्पं विकिरतः। (भ)

सर्वे सविस्मयमवलोकयन्ति।

राजा। के भवत्यौ? का वेयम्। (म)

प्रथ। भट्टा! एसा अम्हाणं भट्टिदारिआ। (य)

राजा। कथमिव?।

उभे। सुणादु भट्टा। जो सो भट्टिणा विजअदण्डेहिं विदब्भणाहं वसीकरिअ बन्धणादो मोइदो कुमारो माहवसेणो णाम, तस्स इअं कणीअसी बहिणिआ मालविआ णाम। (र)

---

(भ) अहो भर्त्तृदारिका!। जयतु जयतु भर्त्तृदारिका।

(य) भर्त्तः। एषा अस्माकं भर्त्तृदारिका।

(र) शृणोतु भर्त्ता। यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम, तस्येयं कनीयसी भगिनिका मालविका नाम।

---

(भ) उभे इति। तया मालविकया। आकस्मिकस्विजनदर्शनेन शोकोदयात् वाष्पमोचनम्।

(म) राजेति। इयं मालविका वा का।

(य) प्रथेति। भर्त्तृदारिका राजकन्या। "राजा भट्टारको देवस्तत्सुता भर्त्तृदारिका।" इत्यमरः।

(र) उभे इति। भर्त्रा त्वया। विजयदण्डैः विजयजनकदण्डसाधनीभूतसैन्यैः। विदर्भनाथं यज्ञसेनं वशीकृत्य पराजयेनायत्तीकृत्य। भगिनिका स्वसा। अनुकम्पायां कप्रत्ययः।

देवी। कहं राअदारिआ इअं। चन्दणं क्खु मए पादुआवदेसेण (१) दूसिदं। (ल)

राजा। अथात्रभवती कथमित्थंभूता ?। (व)

माल। निःश्वस्यात्मगतम्। विह्विणिओएण। (श)

विदू। सुणादु भट्टा। दाआदवसं गदे भट्टिदारए माहवसेणे, तस्स अमच्चेण अज्जसुमदिणा अम्हारिसं परिअणं उज्झिअ गूढं आणीदा एसा। (ष)

---

(ल) कथं राजदारिकेयम्। चन्दनं खलु मया पादुकापदेशेन दूषितम्।

(श) विधिनियोगेन।

(ष) शृणोतु भर्त्ता। दायादवशंगते भर्त्तृदारके माधवसेने तस्य अमात्येन आर्य्यसुमतिना अस्मादृशं परिजनं उज्झित्वा गूढमानीता एषा।

---

(ल) देवीति। राजदारिका राजकन्या। पादुकापदेशेन पादुकाच्छलेन पादुकाभ्रमेणेत्यर्थः। पादुकाभ्रमेण चन्दनावस्कन्दनमिव साधारणबालिकाबोधेन राजकन्याया मालविकायाः कारागारनिक्षेपणादिकमेकान्तमनुचितमभूदिति भावः।

अतएवात्र असम्भवद्वस्तुसम्बन्धा निदर्शनाऽलङ्कारः।

(व) राजेति। अत्रभवती मालविका कथं केन हेतुना, इत्थंभूता असंख्याया अमालयमागता।

(श) मालेति। विधिनियोगेन दैवनिर्देशेन अदृष्टदोषेणेत्यर्थः। इत्थंभूतास्मीति वाक्यशेषः।

(ष) विदूेति। दायं पैतृकधनं आदत्ते यः स दायादः सपिण्डः तस्य यज्ञसेनस्य वशं गते अधीनतां प्राप्ते भर्त्तृदारके राजपुत्रे। अमात्येन मन्त्रिणा आर्य्यसुमतिना मागनीयेन

---

(१) पादुओवओएण इति पाठान्तरम्।

राजा। श्रुतपूर्वं मयैतत्। ततस्ततः।

द्विती। भट्टा! अदो वरं ण आणीमो (१)। (स)

परि। अतः परमहं (२) मन्दभागिनी कथयिष्यामि। (ह)

उभे। अज्जकोसिईए विअ सरसंजोओ? (३)। (च)

माल। णं सा एव्व (४)। (क)

उभे। जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि। भअवदि! णमो दे (५)। (ख)

---

(स) भर्त्तः! अतः परं न जानीमः।

(च) आर्य्यकौशिक्या इव स्वरसंयोगः?।

(क) ननु सैव।

(ख) यतिवेशधारिणी आर्य्यकौशिकी दुःखेन विभाव्यते। भगवति! नमस्ते।

---

सुमतिनामकेन। उज्झित्वा विहाय। गूढ़ं गुप्तं यथा स्यात्तथा। गुप्तभावेनेत्यर्थः। एषा मालविका।

(ह) परीति। अतः परं उक्तवृत्तान्तांशात् परं।

(च) उभे इति। स्वरसंयोगः आवयोः कर्णे कण्ठध्वनिसम्बन्धः। भवतीति शेषः।

(क) मालेति। ननुशब्दः सम्बोधने। सैव कौशिक्येव।

(ख) उभे इति। यतिवेशधारिणी प्रव्रज्योचितकाषायवसनादिधारिणी। दुःखेन वतृस्वरनिश्चयादिविशेषायासेन। विभाव्यते निश्चीयते। सुतरामावयोरापाततः संशयः सम्भवत्येवेति भावः। अत्र पूर्ववाक्यं मालविकां प्रति नमस्कारस्तु कौशिकीं प्रतीति बोध्यम्।

---

(१) अदो अवरं ण आणामि इति पाठभेदः।

(२) ततः परं इति पाठान्तरम्।

(३) भट्टिदारिए! अज्जकोसिईए विअ सरसंजोओ। णं सा एव्व, इति भिन्नः पाठः।

(४) अहइं इत्यपि पाठः। (५) वन्दामो इति क्वचित् पाठः।

परि। स्वस्ति भवतीभ्याम्। (ग)

राजा। कथमाप्तवर्गोऽयं भगवत्याः ?। (घ)

परि। एवमेतत्। (ङ)

विदू। तेण कहेदु दाणिं भअवदी अत्तभोदीए वुत्तन्तं दाव असेसं। (च)

परि। सवैक्लव्यम्। तावत् श्रूयताम्। माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ। (छ)

राजा। उपलक्षितम् (१)। ततस्ततः। (ज)

---

* (च) तेन कथयतु इदानीं भगवती अत्रभवत्या वृत्तान्तं तावदशेषम्।

---

(ग) परीति। स्वस्ति क्षेमं भवत्विति शेषः। "स्वस्त्याशीः क्षेमपुण्यादा"वित्यमरः। भवतीभ्यामिति "नमःस्वस्ती"त्यादिना चतुर्थी।

(घ) राजेति। सम्भावनायां कथंशब्दः। आप्तवर्गः परिचितत्वात् विश्वस्तवर्गः। मालविकाप्रभृतिकोऽयं जनसमूहो भवत्याः परिचित इति सम्भावयामीति निष्कर्षः। "आप्तः प्रत्ययिते त्रिषु"त्यमरः। काकुवशात् प्रश्नो व्यज्यते।

(ङ) परीति। एवमेतत् भवदुक्तं सत्यमित्यर्थः।

(च) विदिति। तेन परिचितत्वेन हेतुना। भगवती भवती। अत्रभवत्या मालविकायाः। अशेषं समग्रं। तावत् वाक्यालङ्कारे।

(छ) परीति। वैक्लव्येन शोकविह्वलतया सहेति सवैक्लव्यम्। अत्र साकल्ये तावच्छब्दः। मालविकायाः सकलो वृत्तान्तः श्रूयतामित्यर्थः।

(ज) राजेति। उपलक्षितं ज्ञातं। भवत्याः शोकवैक्लव्यदर्शनात् सोदरत्वादि किञ्चित्सम्बन्धविशिष्टः सुमतिरित्यवगतमिति भावः। ततस्तदनन्तरं किं जातमिति शेषः सर्वत्र मे जिज्ञासा। अन्यत्रापीदृशम्।

---

(१) उपलक्षित इति पुंलिङ्गः पाठः क्वचित्।

परि। स इमां तथागतभ्रातृकां मया सार्द्धमपवाह्य भवत्सम्बन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः। (झ)

राजा। ततस्ततः।

परि। स चाटव्यन्तरे निविष्टो गताध्वा वणिग्जनः (१)। (ञ)

राजा। किं चान्यत् (२)। (ट)

परि। ततः (३)।

तूणीरपट्ट परिणद्ध (४) भुजान्तराल-
मापार्ष्णिलम्बिशिखिवर्हकलापधारि (५)।

---

(झ) परीति। स सुमतिः, तथागतः तादृशीं दुर्दशां प्राप्तः यज्ञसेनवश्यतां प्राप्त इति यावत् भ्राता माधवसेनो यस्यास्तां इमां मालविकां। अपवाह्य निष्काश्य नीत्वा। भवत्सम्बन्धापेक्षया भवते मालविकाया दानानुरोधेन। विदिशागामिनं विदिशाभिधानामिमां भवतो नगरीं प्रति गच्छन्तं पथिकसार्थं पथिकजनसमूहं अनुप्रविष्टः तेन पथिकसार्थेन सह मिलित इत्यर्थः। "संघसार्थौ तु जन्तुभिरित्यमरः।

(ञ) परीति। स च पथिको वणिग्जनः वणिक्त्वेन परं ख्यातो जनसमूहः गताध्वा अतीतविपुलपथः अतएव परिश्रान्त इति भावः, अटव्यन्तरे वनमध्ये निविष्टः प्रविष्टः।

(ट) राजेति। अन्यच्च किं एतद्भिन्नञ्च किं। ततः परं ब्रूहीत्यर्थः।

तूणीरेति। तूणीरपट्टेन तूणबन्धनसाधनपट्टनिर्म्मितरज्जुविशेषेण परिणद्धं वद्धं भुजयो रन्तरालं पृष्ठतः सम्मुखतश्च वाह्वो र्मध्यदेशो यस्य तत् तथोक्तं। आपार्ष्णि पार्ष्णि-

---

(१) वनिम्गणा इव विश्रमितुमारब्ध इति पाठान्तरम्।

(२) ततस्तत इति पाठभेदः।

(३) ततः। किं चान्यदिति भिन्नः पाठः।

(४) परिवद्ध इति पाठान्तरम्।

(५) शिखिपिच्छकलापधारि इति पाठभेदः।

कोदण्डपाणि निनदत् प्रतिरोधकाना-
मापातदुष्प्रसहमाविरभूदनीकम् ॥ १० ॥

मालविका भयं रूपयति। (ठ)

विदू। भोदि! मा भाआहि, अदिक्कन्तं क्खु अत्तभोदी कहेदि। (ड)

राजा। ततस्ततः।

---

(ड) भवति! मा बिभिहि, अतिक्रान्तं खलु अत्रभवती कथयति।

---

पर्य्यन्तं पृष्ठदेशपर्य्यन्तं वा लम्बिनं लम्बमानं शिखिवर्हकलापं मयूरपिच्छसमूहं धारयति शिरसि दधातीति तत्। तथा कोदण्डो धनुः पाणौ करतले यस्य तत् कोदण्डपाणि तथा आपातेन कर्णयोरुपस्थितिमात्रेण श्रवणमात्रेणेत्यर्थः दुष्प्रसहं नितान्तपरुषतया अतीवदुःसहं यथा स्यात् तथा निनदत् शब्दायमानं विकटं कोलाहलं कुर्वाणमिति तात्पर्य्यं प्रतिरोधकानां दस्यूनां अनीकं सैन्यं आविरभूत् प्रादुरासीत् अस्माकमन्तिके उपस्थित मासीदिति यावत्।

अत्र वर्हकलापशब्दयोरेकपिच्छरूपार्थबोधकतया आपाततः पौनरुक्त्यप्रतीतेः परञ्च कलापशब्दस्य समूहार्थबोधनपर्य्यवसानात् भिन्नाकारशब्दगतत्वाच्च पुनरुक्तवदाभासोऽलङ्कारः।

"पट्टः (पुं)...पाट् रेशम् इति च भाषा"। "पार्ष्णिः (पुं स्त्री) गोड़मुड़ा इति, गोड़ारि इति च भाषा। पृष्ठम्।" "वर्हम् (क्ली) मयूरपिच्छम्।" "कलापः (पुं) समूहः। मयूरपिच्छं।" इति च शब्दकल्पद्रुमः।

वसन्ततिलका वृत्तम् ॥ १० ॥

(ठ) मालेति। भयं रूपयति मुखवैवर्ण्यदेहकम्पादिना भीतिमभिनयति।

(ड) विदिति। अत्रभवती कौशिकी अतिक्रान्तं अतीतं वृत्तान्तं कथयति, अतएव मा बिभिहीत्यन्वयः।

परि। ततो मुहूर्त्तं बद्धायुधास्ते (१) पराङ्मुखीभूताः सार्थ-वाहयोद्धार स्तस्करैः। (ढ)

राजा। हन्त! इतः परं कष्टतरं श्रोतव्यम् (२)। (ण)

परि। ततः स मत्सोदर्य्यः (३)। *

इमां परीप्सुर्दुर्जाते (४) पराभिभवकातराम्।
भर्त्तृप्रियः प्रियैर्भर्त्तुरानृण्यमसुभिर्गतः॥ ११॥

---

(ढ) परीति। बद्धायुधाः धृतास्त्राः। सार्थैः समानप्रयोजनवद्भिः सङ्गिभिर्वैश्यैश्च व्रजन्ति ये ते सार्थवाहा वणिजः तेषां योद्धारः। तस्करैश्चौरैः दस्युभिः करणै-रित्यर्थः।

(ण) राजेति। विषादे हन्तशब्दः। कष्टतरं कष्टकरतरम्।

* परीति। मत्सोदर्य्यः मम सहोदरः स सुमतिः। श्लोकस्थस्य गत इत्यस्य कर्त्तृपदमेतत्।

इमामिति। दुर्जाते तस्यां विपदि पराभिभवेन शत्रूणामाक्रमणेन कातरां भयव्याकुलां इमां मालविकां परीप्सुः परित्रातुमिच्छुः भर्त्तृप्रियः स्वामिवल्लभः प्रियैः सर्वेषामेव प्राणिनामतीवप्रियत्वात् दुस्त्याज्यैरपीत्यर्थः असुभिः प्राणैः भर्त्तुरानृण्यं स्वामिनः अनृणत्वं आजीवनराजान्नभोजनस्य प्रत्युपकर्त्तृत्वमित्यर्थः गतः प्राप्तः मालविकां परित्रातुमिच्छुः सन् युध्यमानस्तैर्दस्युभि र्निहत इति सरलार्थः।

अत्र भङ्गीविशेषेण प्रतीयमानमरणाभिधानात् पर्य्यायोक्तमलङ्कारः इति केचित् "पर्य्याप्तिः स्यात् परित्राणं हस्तधारणमित्यपि।" इत्यमरः। "दुर्जातं व्यसने क्लीवं असम्यग्जातवस्तुनि"। इति केशवः॥ ११॥

---

(१) मुहूर्त्तमुग्धयोद्धारस्ते इति पाठान्तरम्।

(२) भगवति! हन्त अतः कष्टतर मिदानीं श्रोतव्यम् इति पाठभेदः।

(३) कुत्र सुमतिः इति भिन्नः पाठः। (४) दुर्जाते इति पाठः क्वचित्।

प्रथ। अह्हो ! हदो सुमदो (१)। (त)

द्विती। अदो (२) क्खु भट्टिदारिआए इअं समवत्था संवुत्ता। (थ)

परिव्राजिका बाष्पं विसृजति।

राजा। भगवति! तनुत्यजामीदृशी लोकयात्रा। न शोच्य-स्तत्रभवान् सफलीकृतभर्त्तृपिण्डः (३)। ततस्ततः। (द)

---

(त) अहो ! हतः सुमतिः।

(थ) अतः खलु भर्त्तृदारिकाया इयं समवस्था संवृत्ता।

---

(थ) द्वितीति। भर्त्तृदारिकाया मालविकायाः, इयं दृश्यमाना, समवस्था दूरे पराधीनतारूपा दुर्दशा।

(द) राजेति। तनुत्यजां विनश्वराणां शरीरिणां सम्बन्धे ईदृशी असमये मरणादि-रूपा लोकयात्रा जगतो रीति रित्यर्थः। तथा च याज्ञवल्क्यः—

"गन्त्री वसुमती नाशं उदधिर्दैवतानि च।
फेनप्रख्यः कथं नाशं मर्त्त्यलोको न यास्यति॥"

सफलीकृतं आत्मत्यागेनापि आत्मजीवनरूपप्रत्युपकारकरणचेष्टनात् सार्थकीकृतं भर्त्तुर्मालविकापितुः पिण्डमन्नं येन स तथोक्तः, तत्रभवान् धार्म्मिकतया माननीयः सुमतिः न शोच्यः न शोकयोग्यः।

"दंष्ट्रिभिः शृङ्गिभिर्वापि हताश्चैव तस्करैः।
ये स्वाम्यर्थे हता यान्ति राजन्! स्वर्गं न संशयः॥"

---

(१) आं हा हदो सुमदी यम् इत्यपि पाठः।

(२) तदो इति पाठः पुस्तकान्तरे।

(३) तपस्वी इत्यधिकः पाठः क्वचित्।

परि। ततोऽहं मोहमुपगता यावत् संज्ञां लभे, तावदियं दुर्लभदर्शना संवृत्ता। (ध)

राजा। महत् खलु कृच्छ्रमनुभूतं भगवत्या (१)। (न)

परि। ततो भ्रातुः शरीरमग्निसात् कृत्वा पुनर्नवीभूतवैधव्य-दुःखया (२) मया त्वदीयं देशमवतीर्य्य इमे काषाये गृहीते। (प)

राजा। युक्तः सज्जनस्यैष पन्थाः (३)। (फ)

---

इति श्रुतिस्मृतिपुराणवचनात् सामर्थ्यनिहतस्य पारलौकिकोन्नतेरवश्यम्भावात् सुमतेः शोच्यत्वाभावेन तदर्थं वाष्पविसर्जनं न विधेयमिति भावः।

(ध) परीति। ततः सुमतेर्मरणानन्तरं। संज्ञां चेतनां। इयमहं दुर्लभदर्शना-चिरायान्यत्रावस्थानात् आत्मीयानां पुनर्दुष्प्रापसाक्षात्कारा।

(न) राजेति। कृच्छ्रं कष्टम्। भगवत्या भवत्या।

(प) परीति। भ्रातुः सुमतेः। अग्निसात्कृत्वा दग्ध्वा। पुनर्नवीभूतं कालेन सुप्तप्रायमपि भ्रातुः शोकात् पुनर्जागरितं वैधव्यदुःखं यस्या तया। अवतीर्य्य आगम्य। काषायेण रक्ते इति काषाये वसने कुसुम्भादिरञ्जितं वस्त्रद्वयमित्यर्थः।

(फ) राजेति। सज्जनस्य एष पन्थाः गार्हस्थ्यसुखलेशाभावे प्रव्रज्यावलम्बन मित्यर्थः। युक्तः सङ्गतः। "यदहरेव विरज्येत् तदहरेव प्रव्रजे"दिति श्रुतेरिति भावः।

---

(१) तवभवत्या इति पाठान्तरम्।

(२) पुनर्नवीकृतदुःखया इति पाठभेदः।

(३) पन्था इत्यतः परं ततस्ततः इति क्वचित् पाठः।

परि। सेयमाटविकेभ्यो वीरसेनं वीरसेनाच्च देवीं गता। देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येवमवसानं कथायाः। (ब)

माल। आत्मगतम्। किं णु क्खु संपदं भट्टा भणादि। (भ)

राजा। अहो! परिभवोपहारिणो विनिपातः (१)। कुतः। (म)

प्रैष्यभावेन नामेयं देवीशब्दक्षमा सती।
स्नानीयवस्त्रक्रियया पत्रोर्णं वोपयुज्यते ॥ १२ ॥

---

(भ) किं नु खलु साम्प्रतं भर्त्ता भणति।

---

(ब) परीति। सेयं मालविका, आटविकेभ्यः वनचारिभ्यस्तेभ्यो दस्युभ्यः सकाशात् वीरसेनं भवदीयसेनापतिं गतेत्यन्वयः। देवीं धारिणीं। तैर्वनचारिभिर्दस्युभिरियं मालविका प्रतिबन्धकताचरणभयेन वीरसेनायोपहृता, तेन च भगिन्यै धारिण्यै प्रीत्युपहारत्वेन दत्तेति सरलार्थः। दृष्टा मालविकेत्यन्वयः। अवसानं समाप्तिः।

(भ) मालेति। भर्त्ता राजा किंनु खलु भणति, एषा मे प्रणयिनीभावेनाऽत्र तिष्ठतु अथवा भ्रातुरन्तिकमेव यथेच्छं गच्छतु, अनयोः किं ब्रवीतीत्यर्थः। एतेन राजनि महाननुरागो व्यजते। साशङ्कोक्तिरियम्।

(म) राजेति। परिभवं अनादरं अवहेलां दुःखमिति यावत् उपहर्तुं दातुं शीलं यस्य तस्य दैवस्येति शेषः विनिपातः उपस्थितिः।

प्रैष्येति। इयं मालविका देवीशब्दक्षमा रूपलक्षणशीलादिभिः महिषीसमानार्थक देवीशब्दयोग्या सती प्रैष्यभावेन परिचारिकाभावेन स्नानीयवस्त्रक्रियया स्नानकाले परिधेयवस्त्रत्वकरणेन अथवा स्नानकाले गात्रप्रञ्छोञ्छनीयवस्त्रत्वकरणेन पत्रोर्णं वा

---

(१) विनिपाता इति बहुवचनान्तः पाठः पुस्तकान्तरे।

देवी। भअवदि! तुए अहिजणवदिं मालवियं अणाचक्खन्तीए असंपदं किदं। (य)

परि। शान्तं पापम्। केन च कारणेन मया नैघृण्यमवलम्बितम्। (र)

देवी। किं विअ तं कारणम्?। (ल)

---

(य) भगवति! त्वया अभिजनवतीं मालविकामनाचचाणया असाम्प्रतं कृतम्।

(ल) किमिव तत् कारणम्?।

---

धौतकौषेयवसनमिव उपयुज्यते सम्बध्यते इति नाम सम्भावयामीत्यर्थः। यथा मझीत्कृष्ट-धौतकौषेयवसनस्य स्नानशाटीत्वमसम्भवं तथा राजकन्याया अस्या मालविकाया अपि परिचारकत्वमसम्भवमेवासीत् किन्तु दुर्दैवेन तदस्या घटितमित्याश्चर्य्येव दैवोपस्थितिरिति भावः।

अत्रोपमाऽलङ्कारः।

सम्भावनायां नामशब्दः। इवार्थे वाशब्दः। "वा स्याद्विकल्पोपमयो रेवार्थे च समुच्चये" इति विश्वः। "पत्रोर्णं धौतकौषेय" मित्यमरः। "वट लकुचादिपत्रेषु क्रिमिभिरूर्णायाः कृतत्वात् पत्रसम्बन्धिनी ऊर्णा अत्रेति पत्रोर्ण"मिति भरतः। "ऊर्णा पसम् इति भाषा" इति शब्दकल्पद्रुमः॥ १२॥

(य) देवीति। अभिजनवतीं सत्कुलशालिनीं प्रशस्तकुलजातां। अनाचक्षाणया अकथयन्त्या त्वया असाम्प्रतं अयुक्तं कृतं। इयं मालविका सत्कुलजाता इति यदि त्वमवदिष्यः, कथमपि तदाऽस्याः प्रेष्यभावो नाभविष्यदिति भावः।

अभिजनवतीमिति प्रशंसार्थे वतुः। "सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ" वित्यमरः।

(र) परीति। शान्तमिति वारणार्थमव्ययम्। पापं पापाभिमतं। केन च केनापि। नैघृण्यं निर्दयत्वम्।

(ल) देवीति। किमिव किम्भूतम्।

परि। इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन (१) साधुना मत्समक्षं समादिष्टा (२)। संवत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्त्तृगामिनी भविष्यतीति। तदेवं भाविनमादेशमस्यास्त्वत्पादशुश्रूषया परिणमन्तमवेक्ष्य कालप्रतीक्षया मया साधु कृतमिति पश्यामि (३)। (व)

राजा। युक्ता प्रतीक्षा। (श) †

---

(व) परीति। इयं मालविका। पितरि मालविकाया एव जनके। देवस्य देवताविशेषस्य यात्रायामुत्सवे आगतेन उपस्थितेन, सिद्धादेशकेन प्रसिद्धशुभाशुभवादिना विख्यातेन शुभाशुभगणनाकारिणेत्यर्थः। प्रेष्यभावं परिचारिकाभावं। भाविनं भविष्यन्तं आदेशं आदिष्टं प्रेष्यभावं अस्या मालविकायाः, तव धारिण्याः पादशुश्रूषया चरणपरिचर्य्यारूपेण परिणमन्तं पर्य्यवस्यन्तं। सिद्धादेशकेन निवेदितो मालविकायाः स प्रेष्यभावः तव परिचारिकाभावतया परिणत इत्यवेक्ष्य इत्यर्थः। साधु कृतं युक्तमनुष्ठितं इति पश्यामि इत्यहं मन्ये। अन्यथा अवान्तर एव यथायथनिवेदनात् त्वया परित्यक्तेयं सिद्धादेशस्यावश्यम्भावित्वात् यदि कस्यचित् नीचजनस्य परिचारिका स्यादिति भावः।

(श) राजेति। प्रतीक्षा कालसहनम्। अन्यथेत्यादिरुक्त एवाशयोऽत्रापि बोध्यः।

---

(१) शिवादेशकेन इति पाठान्तरम्।

(२) व्यादिष्टा इति पाठभेदः।

(३) भविष्यतीत्यतः परं "विदर्भगतमनुष्ठेयमवधारितमस्माभिः। देवस्य तावत् किमभिप्रायं श्रोतुमिच्छामीति" इति पाठः क्वचित् दृश्यते।

† अयं पाठः क्वचिन्नास्ति।

कञ्चु। देव ! कथान्तरेणान्तरितम् । अमात्यो विज्ञापयति । विदर्भगतमनुष्ठेय मनुष्ठितमभूत् । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति । ‡ (ष)

राजा। मौद्गल्य ! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानी-मवस्थापयितुकामोऽस्मि । (स)

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तन्दिवं (१) विभज्योभौ शीतोष्णकिरणाविव ॥१३॥

---

(ष) कञ्चिति । कथान्तरेण भवतां विषयान्तरालापेन अन्तरितं तिरोहितं अलब्धा-वसरमित्यर्थः मम वक्तव्यमिति शेषः । विदर्भगतं विदर्भदेशसम्बन्धीयं अनुष्ठेयं कर्त्तव्यं अनुष्ठितं कृतं । परमोद्धतस्य विदर्भराजस्य यज्ञसेनस्य शासनमनुष्ठितमित्यर्थः । देवस्य भवतः । अभिप्रायं विदर्भराजस्येदानीं किं कर्त्तव्यं तद्विषये मनसो भावम् ।

(स) राजेति । मुद्गलस्य ऋषेरपत्यमिति मौद्गल्यो मौद्गल्यगोत्रः, देवदत्तादिवत् मौद्गल्य इति कञ्चुकिनो विशेषनाम वा, तत्सम्बोधनम् । द्वौ राजानौ यत्र स द्विराजा देशः तस्य भावो द्वैराज्यं विभक्तं पृथक् पृथक् राज्यमित्यर्थः । अत्र मन्त्रिपरिषदो मतमवगन्तव्यमित्याशयः ।

कीदृशं द्वैराज्यमित्याह ताविति । उभौ तौ यज्ञसेनमाधवसेनौ नक्तन्दिवं विभज्य रात्रिं दिनञ्च पृथक् पृथग्भावेन विभयीकृत्य शीतोष्णकिरणाविव चन्द्रसूर्याविव पृथक् पृथग् भावेन उत्तरदक्षिणे वरदाकूले वरदानद्यास्तीरे शिष्टां पालयताम् । यथा विधातृ-विहितविभागानुसारेण चन्द्रो रात्रिं रविश्च दिनमधिकरोति, तथा मद्विभागमनुसृत्य यज्ञसेनो विदर्भदेशस्थाया वरदानद्या उत्तरतीरस्थदेशं, माधवसेनश्च तस्या एव दक्षिण-तीरस्थदेशं पृथक् पृथग्भावेन शास्तु इति सरलार्थः ।

अत्रोपमाऽलङ्कारः । शिष्टामिति शास्धातोः पञ्चम्याः परस्मैपद प्रथमपुरुषद्विवचनम् । नक्तञ्च दिवा चेति नक्तन्दिवं "अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः" इति निपातः ॥ १३ ॥

---

‡ अयं पाठोऽपि क्वचिन्नास्ति ।

कञ्चु। देव ! एवममात्यपरिषदे विज्ञापयामि ? । (१) (छ)

राजा । अङ्गुल्यानुमन्यते (च)

निष्क्रान्तः कञ्चुकी ।

प्रथ । जनान्तिकम् । भट्टिदारिए ! दिट्ठिआ भट्टिदारओ अद्धरज्जे पड़िट्ठं गमिस्सदि (२) । (क)

माल । एदं दाव बहुमणिदव्वं जं जीविदसंसआदो विमुत्तो । (ख)

---

(क) भर्तृदारिके ! दिष्ट्या भर्तृदारकः अर्द्धराज्ये प्रतिष्ठां गमिष्यति ।

(ख) एतत्तावत् बहु मन्तव्यं यत् जीवितसंशयाद्विमुक्तः ।

---

(छ) कञ्चुकीति । एवमीदृशं भवदभिप्रायं अमात्यपरिषदे मन्त्रिसभायै । काकुवशादियं जिज्ञासेति प्रत्येतव्यम् ।

(च) राजेति । अङ्गुल्या अङ्गुलीसञ्चालनेन अनुमन्यते विज्ञापयितुमनुमोदते । एतेन तदानीमपि मन्त्रिसभासम्मत्यनुसारेणैव राजशासनमासीदिति प्रतीयते ।

(क) प्रथेति । दिष्ट्या भाग्येन, भर्तृदारकः माधवसेनः । प्रतिष्ठामास्पदम् ।

(ख) मालेति । बहु मन्तव्यं यथेष्टमिति ज्ञात्वा भावयितव्यम् । जीवितसंशयात् अयो यज्ञसेनस्यायत्तीकरणेन जीवनं स्थास्यति नवेति सन्देहात् विमुक्तः विच्युतः । राज्यलाभः पुनरस्याकमाशातिरिक्त एवेति भावः ।

---

(१) निवेदयामीति पाठभेदः ।

(२) भट्टदारिए ! दिट्ठिआ भट्टिणा भट्टदारओ अद्धरज्जे पड़िट्ठं गमइस्सदि इति पाठान्तरम् ।

प्रविश्य कञ्चुकी। विजयतां देवः। देव! अमात्यो विज्ञापयति; कल्याणी देवस्य बुद्धिः। मन्त्रिपरिषदोऽप्येतदेव दर्शनम्। कुतः। (ग)

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संग्रहीतुः।
तौ स्थास्यत स्ते नृपते! (१) निदेशे
परस्परावग्रहनिर्विकारौ (२) ॥ १४ ॥

---

(ग) प्रविश्येति। देवस्य भवतः। कल्याणी सर्वेषामेवोपकारायोद्यतत्वात् कल्याणकारिणी। एतदेव भवदनुरूपमेव दर्शनं विदर्भराज्यस्य विभागावधारणम् ज्ञातमिति शेषः। किं तत्र कारणमित्याह कुत इति।

द्विधेति। हे नृपते! राजन्! द्विधा विभक्तां समानभागद्वयेन विभक्तां धुरं रथभारं उद्वहन्तौ धारयन्तौ रथाश्वौ रथयोजितघोटकौ परस्परावग्रहनिर्विकारौ परस्परा-क्रमणाभिप्रायशून्यौ सन्तौ संग्रहीतुः सम्यग्धारयितुः सारथेरिव, द्विधा विभक्तां वरदानद्या उभयतीरे भागद्वयेन वण्टितां श्रियं राज्यसम्पत्तिं उद्वहन्तौ प्राप्नुवन्तौ तौ यज्ञसेनमाधवसेनौ परस्परावग्रहे अन्योन्याक्रमणे निर्विकारौ चित्तविकाररहितौ सन्तौ ते तव निदेशे आदेशे स्थास्यतः। तेन च तयोरपि कल्याणं भवतश्चाधिपत्यमक्षुण्णं स्यादिति भावः।

अत्रोपमाऽलङ्कारः। उपेन्द्रवज्रेन्द्रवज्रयोर्मेलनादुपजाति वृत्तम् ॥ १४ ॥

---

(१) नृपतेः इति षष्ठ्यन्तः पाठभेदः।

(२) परस्परोपग्रहनिर्विकारौ इति भिन्न पाठः।

राजा। तेन हि मन्त्रिपरिषदं ब्रूहि, 'सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति। (घ)

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य। 'अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात् सोत्तरीयप्राभृतको लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः। (ङ)

राजा। उत्थाय सप्राभृतकं लेखं सोपचारं गृहीत्वा परिजनायार्पयति। (च)

परिजनो लेखं नाट्येनोद्‌घाटयति। (छ)

---

(घ) राजेति। तेन हि अभिहितविभागस्य सर्वसम्मतत्वेनैव हेतुना। सेनान्ये अस्मत्सेनापतये। लिख्यतां प्रयोजककर्तृभूतया मन्त्रिपरिषदा प्रयोज्यकर्तृरूपेण केनचित् लेखकेनेति शेषः। लिख्यतामिति णिजन्तं पदम्। एवमीदृशं क्रियतां अनुष्ठीयतां उक्तनियमेन राज्यद्वयं राजद्वयं प्रतिष्ठाप्यतामित्यर्थः।

(ङ) कञ्चुकीति। प्राभृतकेन उत्तरीयरूपेण उपढौकनेन सहेति सप्राभृतकं लेखं पत्रम्। प्रभोर्भवतः, आज्ञा उक्तादेशः। देवस्य राज्ञः, सेनापतेः वृद्धस्य सेनापतेः पुष्पं मित्रं सौरभात् प्रियं यस्य स पुष्पमित्रः पुष्पमित्रनामा अग्निमित्रपिता तस्य। उत्तरीयं उत्तरीयवसनरूपं प्राभृतकं उपढौकनं तेन सहेति सोत्तरीयप्राभृतकः, लेखः पत्रम्, प्राप्तः आगतः। एनं लेखं।

"प्राभृतम् (क्ली) उपढौकनम्। प्राभृतकम् (क्ली) प्राभृतम्।" इति शब्दकल्पद्रुमः।

(च) राजेति। पितुः पत्रस्य सम्मानप्रदर्शनार्थमुत्थानम्। उपचारेण नमस्कारादिना व्यवहारेण सहेति सोपचारं यथा स्यात् तथा। गुरुजनपत्रादिकं हि नमस्कारपूर्वकं गृह्णातीति शिष्टाचारः।

(छ) परीति। नाट्येन नटकर्मणा भङ्गीविशेषेणेत्यर्थः।

देवी। आत्मगतम्। अम्महे, तदोमुहं एव्व णो हिअअं सुणिस्सं दाव गुरुअणस्स कुसलाणन्तरं वसुमित्तस्स वुत्तन्तं। अदिभारे (१) क्खु पुत्तओ सेणावदिणा (२) णिउत्तो। (ज)

राजा। उपविश्य लेखं सोपचारं गृहीत्वा वाचयति। स्वस्ति। यज्ञशरणात् सेनापतिः पुष्पमित्रो वैदिशस्थं (३) पुत्रमायुष्मन्तमग्निमित्रं स्नेहात् परिष्वज्येदमनुदर्शयति। विदितमस्तु।

---

(ज) अम्महे, ततोमुखमेव नो हृदयम्। श्रोष्यामि तावत् गुरुजनस्य कुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिभारे खलु पुत्रकः सेनापतिना नियुक्तः।

---

(ज) देवीति। अम्महे इति शौरसेन्यादिभाषायां हर्षाश्चर्य्यसूचकमव्ययम्। ततोमुखमेव वसुमित्राभिमुखमेव उत्कण्ठया पुत्रवसुमित्रविषयकचिन्ताशीलमित्यर्थः। नः अस्माकं ममेत्यर्थः "वास्मदस्त्रे"ति बहुवचनम्। गुरुजनस्य श्वशुरस्य पुष्पमित्रस्य कुशलानन्तरं मङ्गलवार्त्ताश्रवणात् परं। अतिभारे नितान्तगुरुतरे युद्धकर्म्मणि। पुत्रको ममात्मजो वसुमित्रः। सेनापतिना हृहद्रथसेनापतिना श्वशुरेण पुष्पमित्रेण।

(झ) राजेति। गृहीत्वा परिजनहस्तात् पुनरादाय। वाचमाचष्ट इति वाचयति पठतीत्यर्थः। स्वस्ति आशीरस्त्विति शेषः। अस्य पुत्रपत्रतया प्रथमं आशीरर्थकस्वस्तिपदप्रयोगः। तथाच वररुचिकृतपत्रकौमुद्याम्—

"प्राक्पुत्रपदं तद्वत्तथा सञ्चरितादिकम्।

आशीर्वचनसंयुक्तं पुत्रपत्रे पदक्रमम्॥" विदध्यादित्यन्वयः।

यज्ञशरणात् अश्वमेधयज्ञालयात्। सेनापतिः हृहद्रथसेनापतिः। वैदिशस्थं विदिशैव वेदिशः स्वार्थे अण् विदिशानगरस्थितं परिष्वज्य आलिङ्ग्य इदं वक्ष्यमाणं अनुदर्शयति विज्ञापयति। विदितमस्तु तवेति शेषः। योऽसाविति तुरङ्गम इत्यस्य

---

(१) अदिघोरे इति पाठान्तरम्। (२) सेणावदी इति पाठभेदः।

(३) वैदिशसन्निर्मिति पाठान्तरम्।

योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सरोपात्तनियमो (१) निरर्गलस्तुरङ्गमो विसृष्टः, स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः। तत उभयोः सेनयोर्महानासीत् संमर्दः। (झ)

देवी। विषादं नाटयति। (ञ)

राजा। कथमीदृशं संवृत्तम्। पुनर्वाचयति। (ट)

---

विशेषणम्। राजयज्ञे अश्वमेधे दीक्षितेन कृतदीक्षणीयेष्टिना कृतसङ्कल्पेन। गोप्तारं रक्षकं आदिश्य निर्दिश्य। वत्सरं यावदुपात्तो गृहीतो नियमः ललाटजयपत्रधारणादिरीति येन सः, निरर्गलो निर्बाधः तुरङ्गमो मेध्योऽश्वः, विसृष्टः नानादेशभ्रमणाय परित्यक्तः। स तुरङ्गमः सिन्धोः सिन्धुनदस्य। रोधसि तीरे चरन् पर्य्यटन्। अश्वा अश्वारोहिणो जना एव अनीकं सेना यस्य तेन यवनेन म्लेच्छराजविशेषेण प्रार्थितः प्रसह्य गृहीतः। ततः परं उभयोः सेनयोः वसुमित्रसेनायवनसेनयोः संमर्दः समरः।

[illegible]कुलोत्पन्नो महावीरः पुष्पमित्रो मौर्य्यवंशशेषभूतं निजप्रभुं वृहद्रथनामानं राजानं निहत्य तदीयराजधान्यां पाटलिपुत्रे राजत्वं कुर्वन् पुत्रमग्निमित्रमपि विदिशानगरे राजानमकार्षीदिति ऐतिहासिकी वार्त्ता। अश्वमेधप्रकरणे "शतेन राजपुत्रैः सह" इति श्रुतेः राजपुत्रशतपरिवृतमित्युक्तम्। पुष्पमित्रस्य कलियुगीयत्वेऽपि "नराश्वमेधौ मद्यञ्च कलौ वर्ज्यौ द्विजातिभि" रिति तिथितत्त्वधृत ब्रह्मपुराणवचनस्य तदीयदेशे व्यवहारापरिगृहीततया अश्वमेधाचरणमिति दिक्।

(ञ) देवीति। विषादं नाटयति पुत्रस्यानिष्टशङ्कया मुखमालिन्यादिना विषादमभिनयति।

(ट) राजेति। ईदृशं यवनेन सह युद्धम्। वैदिककर्मस्वश्रुतेषु [illegible]कारात् तदधिकारिक्षत्रियराजकर्त्तव्यविरोधित्वासम्भव इति भाव.। [illegible] सिन्धोर्दक्षिणतीरे कथमयं यवनप्रादुर्भाव इति वा भावः।

---

(१) वत्सराय निवर्त्तनीय इति पाठभेदः।

ततः परान् पराजित्य वसुमित्रेण धन्विना ।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्त्तितः ॥ १५ ॥

देवी । इमिणा आस्ससिदं मे हिअअं । (ठ)

राजा । लेखशेषं वाचयति । सोऽहमिदानीमंशुमतेव सगरः पौत्रेण (१) प्रत्याहृताश्वो यक्ष्ये । तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति । (ड)

---

(ठ) अनेन आश्वसितं मे हृदयम् ।

---

तत इति । ततो युद्धारम्भानन्तरं धन्विना प्रशस्तधनुर्द्धरेण वसुमित्रेण परान् शत्रून् पराजित्य विजित्य प्रसह्य बलेन ह्रियमाणो यवनैर्नीयमानः मे मम वाजिराजः अश्वमेधीयो घोटकश्रेष्ठः निवर्त्तितः अपहरणनिवृत्तिं प्रापितः प्रत्याहृतः ।

अत्र प्रथमचरणे परान् परेति व्यञ्जनसंघस्यानेकधा सकृत्साम्यात् छेकानुप्रासोऽलङ्कारः, किञ्च चतुर्थचरणे एकस्य ओकारस्य सकृत्साम्यात् वृत्त्यनुप्रासश्च अनयोः संसृष्टिः ।

"कालाम्भोधरसङ्काशः स्वर्णवर्णमुखो बली ।
यस्य पार्श्वावुभावर्द्धचन्द्राकारौ सुशोभनौ ॥"

इत्यादिकं योगवाशिष्ठरामायणे अश्वमेधीयाश्वलक्षणं द्रष्टव्यम् । अत एव वाजिराज इत्युक्तम् ॥ १५ ॥

(ठ) देवीति । अनेन पुत्रविजयवाक्यश्रवणेन ।

(ड) राजेति । अंशुमतेव अंशुमानिति विश्रुतेन सगरपौत्रेणेव सगरः सूर्य्यवंशीयः कश्चित् राजा । पौत्रेण वसुमित्रेण, प्रत्याहृतः शत्रून् पराजित्य आनीतः अश्वो यस्य सः । यक्ष्ये यज्ञं करिष्ये । न कालो हीनो यस्मिन् कर्म्मणि तद् यथा तथा अकालहीनं

---

(१) अंशुमता सगरपुत्रेणेव इति क्वचित् पाठः ।

राजा। अनुगृहीतोऽस्मि। (ढ)

परि। दिष्ट्या पुत्रविजयेन दम्पती वर्द्धेते (१)। (ण)

भर्त्तासि वीरपत्नीनां स्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ १६॥

---

कालविलम्बमकृत्वेत्यर्थः। विगतो रोषो यवनान् प्रति क्रोधो यस्मात् तत्, विगतरोषं चेतो यस्य तेन, अकारणविरोधिनोऽपि यवनान् प्रति रोषमपहायेत्यर्थः पितुर्यजनसमये पुत्रस्यापि शान्तभावावलम्बनस्यौचित्यादिति भावः। यज्ञसेवनाय अश्वमेधदर्शनाय। इति शब्दः पत्रसमाप्त्यर्थः।

पुरा सगरो नाम राजा अश्वमेधेन यियक्षमाणो मेध्यमश्वं विससर्ज, ततो देवेन्द्र-स्तमश्वमपहृत्य पाताले ध्याननिमग्नकपिलमहर्षेरन्तिकतरौ बबन्ध, अथ सगरभार्य्याप्रभाया जाताः षष्टिसहस्रपुत्रा मर्त्ये तमश्वमन्विष्यन्तः परमप्राप्नुवन्तः पातालं प्रविशन्तः कपिलान्तिके दृष्टवन्तः, अयमेव धूर्त्तस्तपस्वी अश्वापहर्त्ता इति मन्यमानाश्च तमेव हन्तुमुद्यतास्तदीयतेजसैव दग्धाः। सगरस्यापरभार्य्यायां भानुमत्यां जातवानसमञ्जो नाम पुत्रः, तत्सूनुरंशुमान्नाम तमश्वं प्रत्याजहार, तेन च सगरः प्रक्रान्तमश्वमेधं समादधाविति पौराणिकी वार्त्ता।

(ढ) राजेति। अनुगृहीतोऽस्मि पितुः सादरनिमन्त्रणादिति भावः।

(ण) परीति। दिष्ट्या भाग्येन। दम्पती भार्य्यापती धारिण्यग्निमित्रौ। वर्द्धेते अभ्युदयवन्तावभूताम्।

भर्त्तेति। भर्त्ता पत्या अग्निमित्रेण, स्लाघ्यानां भाग्यवत्तया प्रशस्यानां वीरः पति र्यासां तासां वीरपत्नीनां वीरभार्य्याणां धुरि अग्रे स्थापितासि। पत्यैव त्वं वीरपत्नीना-मग्रवर्त्तिनी कृता सुतरां पति स्ते सुमहावीर इति भावः। तथा वीरं सूते जनयतीति

---

(१) वर्द्धेत इति पाठान्तरम्।

देवी। भअवदि! (१) परितुट्टह्मि, जं पिदरं अणुजादो मे वच्छओ। (त)

राजा। मौद्‌गल्य! ननु कलभेन यूथपतिरनुकृतः (२)। (थ)

---

(त) भगवति! परितुष्टास्मि, यतःपितरमनुजातो मे वत्सकः।

---

वीरसूः। अयं वीरसूरिति वीरसूरित्यानुपूर्वीकः शब्दः तनयात् वसुमित्ररूपं तनयं प्राप्य स्थितां त्वां उपस्थित उपगत'। तनयेन त्वमिदानीं वीरमातेति प्रख्यापिता, सुतरां तनयोऽपि ते वीर इति भावः।

अत्र वीरपत्नीषु प्राधान्यकरणरूपकार्य्येण पत्युः सुमहावीरत्वरूपकारणस्याभिधानात् वीरसूरितिशब्दप्राप्तिलक्षणकार्य्येण पुत्रस्य वीरत्वलक्षणकारणस्याभिधानाच्च द्वौ पर्य्यायोक्ता-लङ्कारौ, तयोश्च मिथो नैरपेक्ष्यात् संसृष्टिः। तथा च धारिण्याः परमसौभाग्यवत्त्वरूपं वस्तु व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

वीरपत्नीति "पत्युर्नो य्ञे"ति पतिशब्दात् नकार ईप्रत्ययश्च। तनयादिति "यपोऽधिकरणकर्म्मणोरप्रयोगिण" इति पञ्चमी। देवीं प्रति माह्लाटोक्तिरियम् ॥ १९ ॥

(त) देवीति। यत् यस्मात्। वत्सकः पुत्रको वसुमित्रः पितरं तदीयतातं अग्निमित्रं अनुजातः लक्ष्यीकृत्य जातः वीरत्वेन पितृतुल्यो भूत इत्यर्थः। पितरमिति "कर्म्म-प्रवचनीयैश्चे"ति द्वितीया।

(थ) राजेति। अवधारणे ननु शब्दः कलभेन करिशावकेन यूथपतिः करीन्द्रः अनुकृतः तुलितः। करिशावकस्य करीन्द्रवदाचरणमिव बालकवसुमित्रस्य महावीर-वदाचरणमिदं लोकानामतीवविस्मयावहमिति भावः। अतएवात्र अप्रस्तुतप्रशंसाऽलङ्कारः।

---

(१) भोदि इति भिन्नः पाठः।

(२) यूथपतेरनुकृतमिति पाठान्तरम्।

कञ्चु । देव ! अयं कुमारः (१) । (द)

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चै
रग्ने रपां दग्धुरिवोरुजन्मा ॥ १७ ॥

---

(द) कञ्चुकिति । अयं कुमारो वसुमित्रः । श्लोकस्यास्य आदधातीति क्रियायाः कर्तृपदमेतत् ।

नैतावतेति । एतावता एतत्परिमाणेन ईदृशेन यवनविजयपूर्वकमेध्याश्वप्रत्यानयनरूपेणेत्यर्थः वीरविजृम्भितेन शूरचेष्टितेन नोऽस्माकं चित्तस्य विस्मयं आश्चर्यं न आदधाति न जनयति । कथं न जनयतीत्याह यस्येत्यादि । यस्य वीरस्य वसुमित्रस्य अप्रधृष्यः अपरैर्धर्षयितुं निग्रहीतुमशक्यः त्वं अपां दग्धुः रग्नेः समुद्रजलानां शोषणकारिणो वह्नेः वडवानलस्येत्यर्थः ऊरोरूरुदेशाज्जन्म यस्य स ऊरुजन्मा और्वो मुनि रिव उच्चैः प्रभवः उत्कृष्टं कारणम् । अन्यैरनिग्रहणीय और्वोमुनि र्यथा वडवानलस्य उत्तम उत्पादयिता, तथा अन्यैरप्रधृष्यस्त्वं यस्य वसुमित्रस्य उन्नतो जनयितेति सरलार्थः । तस्येदृशं वीरत्वं न विस्मयावहं प्रायेण कार्य्यस्य कारणानुरूपगुणवत्त्वादिति भावः ।

अत्र परार्द्धवाक्यार्थः पूर्वार्द्धवाक्यार्थं प्रति हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कार उपमया सङ्कीर्य्यते ।

प्रभवत्यस्मादिति प्रभवः अपादाने अल् ।

पुरा किल भगवानौर्व्वो मुनिरग्नौ निजमूरुं प्रवेश्य पुत्रार्थं दर्भेण ममन्थ, ततो मथ्यमानादूरुदेशात् ज्वालावान् पुत्ररूपोऽग्निरुत्पद्यमानो जनकमौर्व्वमुवाच "तात ! जहीहि मां बुभुक्षापीड़ितोऽहं जगद्भक्षयामी"ति । ततो ब्रह्मा समुपेत्य जगतोरक्षणेच्छया

---

(१) अयं पाठः क्वचिन्नास्ति ।

राजा । मौद्‌गल्य ! यज्ञसेनश्यालमुरीकृत्य मोच्यन्तां (१) सर्वे बन्धनस्थाः । (ध)

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

देवी । जअसेणे ! गच्छ, इरावदिप्पमुहाणं (२) अन्तेउराणं पुत्तस्स वुत्तन्तं णिवेदेहि । (न)

प्रतीहारी प्रस्थिता । (प)

देवी । एहि दाव । (फ)

---

(न) जयसेने ! गच्छ, इरावतीप्रमुखानामन्तःपुराणां पुत्रस्य वृत्तान्तं निवेदय ।

(फ) एहि तावत् ।

---

और्वं प्रार्थयन् "समुद्रे बड़वामुखेऽस्य वसतिरस्तु समुद्रजलञ्च पिबतु" इत्युक्त्वा तमग्निं समुद्रे बड़वामुखे निचिक्षेप इति मत्स्यपुराणवार्त्ताऽत्रानुसन्धेया ।

उपजाति वृत्तम् ॥ १७ ॥

(ध) राजेति । यज्ञसेनस्य वैदर्भस्य श्यालं पत्नीभ्रातरं उरीकृत्य यथेष्टं यातुमर्हसीत्यङ्गीकृत्य प्रथमं बन्धनान्मोचयित्वेत्यर्थः, बन्धनस्थाः कारागारस्थाः अपराधिनः, मोच्यन्तां त्वया प्रयोजककर्त्रा तदधिकृतैः प्रयोज्यकर्तृभिः पुरुषैरिति बोध्यम् । पुत्रविजयोत्सवेनेयं बद्धानां मुक्तिरिति ज्ञेयम् ।

(न) देवीति । अन्तःपुराणां अन्तःपुरवासिनीनां स्त्रीणां समीपे पुत्रस्य वसुमित्रस्य वृत्तान्तं यवनविजयवार्त्ताम् ।

(प) प्रतीति । प्रस्थिता प्रस्थातुमारभते ।

---

(१) मुच्यन्तामिति पाठान्तरम् ।

(२) णिउकप्पमुहीणं इति पाठभेदः ।

पूती। प्रतिनिवृत्य। इअह्मि। (व)

देवी। जनान्तिकम्। जं मए असोअदोहलणिओए मालविआए पडिस्सादं, तं, से अहिजणं च णिवेदिअ मह वअणेण इरावदिं अणुणेहि। तुए अहं सच्चादो ण विब्भंसिदव्वेत्ति (१)। (भ)

पूती। जं देवो आणवेदि। इति निष्क्रम्य पुनःप्रविश्य। भट्टिणि! पुत्तविजअणिमित्तेण परितोसेण अन्तेउराणं आहरणाणं मञ्जुसह्मि संवुत्ता। (म)

---

(व) इयमस्मि।

(भ) यन्मया अशोकदोहदनियोगे मालविकायाः प्रतिज्ञातं, तत्, अस्या अभिजनं च निवेद्य मम वचनेन इरावतीमनुनय। त्वया अहं सत्यान्न विभ्रंशयितव्येति।

(म) यत् देवी आज्ञापयति। भर्त्रि! पुत्रविजयनिमित्तेन परितोषेण अन्तःपुराणामाभरणानां मञ्जूषास्मि संवृत्ता।

---

(भ) देवीति। अशोके तपनीयाशोके दोहदाय चरणप्रहाराय नियोगे आदेशकाले प्रतिज्ञातं अभिलाषपूरयितृकं प्रसादं दास्यामीति प्रतिश्रुतं। तत् प्रतिज्ञातं अस्या मालविकायाः अभिजनं वंशञ्च राजवंशे जातेयमिति चेत्यर्थः निवेद्य विज्ञाप्य। वचनेन वाक्यानुसारेण। त्वया इरावत्या अहं धारिणी सत्यात् प्रतिज्ञायाः न भ्रंशयितव्या न च्यावयितव्या, यदहं विधित्सामि तत् त्वं न प्रतिवर्णीया इत्यर्थः। एतेन राज्ञे मालविकाया दानं व्यज्यते।

(म) प्रतीति। अन्तःपुराणां अन्तःपुरस्थानां स्त्रीणां। मञ्जूषा पेटिका। आह्लादाश्चर्योक्तिरियम्।

---

(१) तुए क्खु, अम्म संवादो ण भंसिदव्वो त्ति इति क्वचित् पाठः।

देवी। एदं किं अच्चरिअं। साधारणो णं अब्भुदओ(१)। (य)

परि। जनान्तिकम्। भट्टिणि! इरावदी विण्णवेदि। सरिसं क्खु पहुवीए (२) पहवन्तीए तव वअणं। संकप्पिदे(३)ण जुज्जदि अस्सहा कादुंत्ति। (र)

देवी। भअवदि! तुए अणुमदा (४) इच्छामि अज्जसुमदिणा पढमसंकप्पिदं मालविअं अज्जउत्तस्स पडिवादेदुं। (ल)

---

(य) एतत् किमाश्चर्य्यम्। साधारणो नन्वभ्युदयः।

(र) भर्त्रि! इरावती विज्ञापयति। सदृशं खलु पृथिव्याः प्रभवन्त्यास्तव वचनम्। सङ्कल्पिते न युज्यते अन्यथा कर्त्तुमिति।

(ल) भगवति! त्वया अनुमता इच्छामि आर्य्यसुमतिना प्रथमसङ्कल्पितां मालविकामार्य्यपुत्रस्य प्रतिपादयितुम्।

---

(य) देवीति। अवधारणे ननुशब्दः। अभ्युदयः पुत्रविजयजनिता समृद्धिः साधारणः सर्वासां राजपत्नीनां समानः। पुत्रस्य तस्य समानभक्तिदर्शनेन तस्मिन्नपि सर्वासां समानवात्सल्यात् ममेव तासामपि महापरितोषेण भूरिदानमेतत् नाश्चर्य्यमिति भावः।

(र) प्रतीति। पृथिव्याः प्रभवन्त्याः सर्वस्यामेव पृथिव्यां प्रभुत्वशालिन्याः। वचनं "त्वयाहं सत्यान्न विभ्रंशयितव्ये"ति वाक्यं सदृशं अनुरूपं। यादृशी महती त्वं तादृशमहत्त्वसूचकमेवेदं वचनं कथमन्यथा त्वं वयमेवात्मनः सपत्नीं विधित्सन्ती इदं ब्रवीषीति भावः। सङ्कल्पिते अभिप्रेते मालविकादानविषये।

(ल) देवीति। अनुमता राज्ञ्या मालविकां प्रतिपादयितुमर्हसीत्यनुज्ञाता।

---

(१) साधारणो क्खु ताणं मह अ अअं अब्भुदओ इति पाठान्तरम्।

(२) देवीए इति पाठभेदः।

(३) संकप्पिदं इति भिन्नः पाठः।

(४) अनुमदं इति क्वचित् पाठः।

परि। इदानीमपि त्वमेवास्याः प्रभवसि । (व)

देवी। मालविकां हस्ते गृहीत्वा। इदं (१) अज्जउत्तो पिअ-णिवेदणाणुरूवं पारितोसिअं पडिच्छदु । (श)

राजा व्रीड़ां नाटयति।

देवी। सस्मितम्। किं अवधीरेदि (२) अज्जउत्तो । (ष)

---

(श) इदमार्य्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु ।

(ष) किमवधीरयत्यार्य्यपुत्रः ।

---

आर्य्यसुमतिना भ्रात्रेन तव भ्राता। प्रतिपादयितुं दातुं । अत्र त्वया अनुमतिर्दातव्या । भवेति पृच्छामीति भावः। "चतुर्थ्यर्थे षष्ठी"ति पिङ्गलसूत्रादार्य्यपुत्रस्येति षष्ठी ।

(व) परीति। इदानीमपि न केवलमितः पूर्वमित्रपरिचयकाले अधुना सम्पूर्ण-परिचयप्राप्तिकालेऽपीत्यर्थः। अस्या मालविकायाः प्रभवसि अस्या वर्त्तमानाभिभावकी-भूतस्य माधवसेनस्यापि युष्मदधीनत्वात् नियन्ता असि। सुतरामत्र नास्ति ममानुमत्य-पेक्षेति भावः।

(श) देवीति। इदं मालविकारूपं परमं वस्तु। प्रतीच्छतु गृह्णातु।

(ष) देवीति। परमलोभनीयां मालविकां सुखेन प्राप्यापि राज्ञो वैमुख्य-दर्शनादुपहासाय देव्याः स्मितम्। तत् वैमुख्यन्तु लज्जावशादिति देवी न जानात्येवेति बोध्यं। अवधीरयति मालविकामवजानाति अवहेलया न गृह्णाति किमित्यर्थः।

---

(१) इमं इत्यपि पाठः।

(२) अवधारेदि इति पाठान्तरम्।

विदू। भोदि! एसो लोअव्ववहारो। सव्वो णअवरो(१)लज्जादुरो होदि। (स)

राजा। विदूषकमवेक्षते। (ह)

विदू। अह देवीए एव्व किदप्पणिव्विसेसं (२) दिसदेवीसद्द मालविअं अत्तभवं पडिगह्णिदुं इच्छदि। (च)

देवी। एदाए राअदारिआए अहिजणेण एव्व दिसो देवीसद्दो। किं पुणरुत्तेण। (क)

---

(स) भवति! एष लोकव्यवहारः। सर्वो नववरो लज्जातुरो भवति।

(च) अथ देव्या एव कृतात्मनिर्विशेषां दत्तदेवीशब्दां मालविकामत्रभवान् प्रतीग्रहीतुमिच्छति।

(क) एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः। किं पुनरुक्तेन।

---

(स) विदूति। लज्जातुर आपाततो लज्जितो भवति। सुतरां लज्जावशादेवास्य वैमुख्यं न पुनरवज्ञावशादिति भावः।

(ह) राजेति। विदूषकमवेक्षते उक्तदेवीवचनस्योत्तरदानाय नयनभङ्ग्या विदूषकं नियोजयितुं तं पश्यतीत्यर्थः।

(च) विदूति। अथेति वाक्यान्तरारम्भे। विशेषस्याभाव इति निर्विशेषं अवैषम्यं तुल्यता यस्या स्तां राजभार्य्यात्वेन स्वसमानीकृतामित्यर्थः। दत्तो देवीशब्दः देवीतिसंज्ञा यस्यै तां। अस्यां तवादरातिशयदर्शनादेव प्रतिग्रहीतुमिच्छतीति भावः।

(क) देवीति। राजदारिकाया राजकन्यायाः, अभिजनेनैव उच्चवंशेनैव। उक्तेन देवीति मयोक्तेन। उच्चवंशोद्भवत्वादेवास्याः स्वभावादेव देवीशब्दयोग्यत्वमस्ति, तत्र ममोक्तैः किं प्रयोजनमिति भावः।

---

(१) णहि एद्धु लोअप्पवादो, सव्वो णओ णव्ववरो इति पाठभेदः।

(२) किदप्पणप्पणिव्विसेसं इति भिन्नः पाठः।

परि। मा मैवम्। (ख)

**अप्याकरसमुत्पन्नो रत्नजातिपुरस्कृतः।**
**जातरूपेण कल्याणि! स हि संयोगमर्हति ॥१८॥ (१)**

देवी। कृत्वा। **मरिसेदु भअवदी। अब्भुदअकहाएपढ़मं अव-**

---

(ख) परीति। मा मैवं ब्रुहीति शेषः। वारणातिशये द्विरुक्तिः।

अत्र कारणमाह अप्याकरेति। हे कल्याणि! शुभे! आकरसमुत्पन्नोऽपि खनेर्जातोऽपि, स प्रसिद्धः, रत्नजातिषु मणिसामान्येषु पुरस्कृतः विधातैव अग्रणीः कृतः मणिश्रेष्ठ इत्यर्थः जातरूपेण काञ्चनेन पक्षे उत्पन्नसौन्दर्येण हि निश्चितं संयोगं मेलनं अर्हति शोभाविशेषग्रहणाय प्राप्तुं योग्यो भवति। यथा कोऽपि मणिश्रेष्ठः काञ्चनसंयोगेन शोभाविशेषं पुष्णाति, तथायमपि सत्कुलजा मालविका नानागुणाकरेण उच्चवंशजेन अग्निमित्रेण सह मेलनेन परमशोभामाधत्ते; तथाच महत्त्वगुणेन सापत्न्यवैरं विस्मृत्य त्वयैव मणिकाञ्चनयोग इव अनयोर्मेलनमिदमुपपादितमिति किं कृतं मालविकाया अभिजनेन, सुतरां "एतस्या राजदारिकाया अभिजनेनैव दत्तो देवीशब्दः" इति कथमपि न ब्रुहीति भावः।

अत्राप्रस्तुतात् समात् मणिकाञ्चनयोगात् प्रस्तुतस्य समस्य मालविकाग्निमित्रयोगस्य प्रतीतेरप्रस्तुतप्रशंसाऽलङ्कारः।

वाचस्पतिकृतव्याख्यायां यद्यपीत्यध्याहर्त्तव्यत्वे वाच्यानभिधानतादोषः तर्हि इत्यस्य यद्यपीत्यस्यार्थत्वे च अवाचकत्वदोष इति दोषद्वयदुष्टत्वात् पाठान्तरमुपेक्षितम् ॥ १८ ॥

(ग) देवीति। मर्षयतु क्षमताम्। अभ्युदयकथया पुत्रविजयसंलापेन। अवगुण्ठ्यते शिर आच्छाद्यते अनेनेति अवगुण्ठनं अवगुण्ठनस्य (घोमटा इति ख्यातस्य)

---

(१) अप्याकरसमुत्पन्नो मणिजातिपुरस्कृतः।
जातरूपस्य कल्याणि! तर्हि संयोगमर्हसि ॥ इति पुस्तकान्तरे पाठः।

गुण्ठणं वसणं णालक्खिदं (१)। जअसेणे ! गच्छ दाव पत्तोण्णं उवणेहि । (ग)

प्रती। जं देवी (२) आणवेदि । इति निष्क्रम्य पत्तोर्णं गृहीत्वा पुनः प्रविश्य। देवि ! एदं । (घ)

देवी। मालविकामवगुण्ठनवतीं कृत्वा। अज्जउत्तो दाणिं इमं पडिच्छदु (३)। (ङ)

---

(ग) मर्षयतु भगवती। अभ्युदयकथया प्रथमं अवगुण्ठनं वसनं नालक्षितम् । जयसेने ! गच्छ तावत् कौषेयं पत्तोर्णमुपनय ।

(घ) यद्देवी आज्ञापयति। देवि ! एतत् ।

(ङ) आर्य्यपुत्र इदानीमिमां प्रतीच्छतु ।

---

साधनीभूतमित्यर्थः। न आलचितं न चिन्तितं। एतज्जनितं दोषं मर्षयतु इत्याशयः। पत्तोर्णं धौतकौषेयवस्त्रम् "पत्तोर्णं धौतकौषेय"मित्यमरः।

(घ) प्रतीति। एतत् तत् पत्तोर्णम्।

(ङ) देवीति। आचारादवगुण्ठनवतीकरणम्। एतेन तदानीमपि अवगुण्ठन-रीतिरासीदिति प्रतीयते। पूर्वमवगुण्ठनादिकन्योपयोगिव्यापाराभावात् राज्ञेयमवधी-रितेति विभाव्य पुनराह अज्जउत्त इति। इदानीं अवगुण्ठनसम्पादनानन्तरकाले, इमां मालविकां प्रतीच्छतु गृह्णातु।

---

(१) उइदं ण लक्खिदं इति पाठान्तरम्।

(२) भट्टिणी इति पाठभेदः।

(३) अज्जउत्त। इमं पडिच्छीअदु इति भिन्नः पाठः।

राजा । तच्छासनं प्रत्यनुरक्ता वयम् (१) । अपवार्य्य । हन्त ! प्रतिगृहीता । (च)

विदू । अह्महे ! देवीए अणुउलदा धारिणीए । (छ)

देवी । परिजनमवलोकयति । (ज)

परिजनः । मालविकामुपेत्य । जेदु जेदु भट्टिणी । (झ)

देवी । परिव्राजिकां निरीक्षते । (ञ)

परि । देवि ! नैतच्चित्रं त्वयि । (ट)

---

(छ) अहो ! देव्या अनुकूलता धारिण्याः ।

(झ) जयतु जयतु भट्टिनी ।

---

(च) राजेति । त्वच्छासनं तवादेशं । सुतरां त्वदादिष्टमालविकाग्रहणे सम्मतोऽस्मीति भावः । प्रकाशोक्तौ लज्जा प्रतिबन्धिनीति अपवार्य्येत्युक्तं । हन्त हर्षे ।

(छ) विदूषिति । अनुकूलता राजानं प्रतीति शेषः । राजसन्तोषार्थं स्वयमेवसपत्नीविधानादिति भावः ।

(ज) देवीति । मालविकाया अभ्यर्थनार्थं नयनेङ्गितं कर्त्तुं परिजनावलोकनम् ।

(झ) परिजन इति । परि इतिमात्रोक्तौ परिव्राजिकापि प्रतीयत इति परिजन इति पूर्णः शब्दोऽभिहितः । "देवी कृताभिषेकायामितरासु च भट्टिनी" इत्यमरोक्तेः मालविकाया अभिषेकाभावात् देवीत्यनुक्त्वा भट्टिनीत्युक्तमिति बोध्यम् ।

(ञ) देवीति । स्वयमेव स्वसपत्नी विहिता इत्थमाश्चर्य्यं नयनेङ्गितेन विज्ञापयितुं परिव्राजिकां निरीक्षत इति आशयम् ।

(ट) परीति । एतत् स्वयमेव स्वसपत्नीविधानं त्वयि न चित्रं नाश्चर्य्यम् ।

---

(१) त्वच्छासनात् एव वयमिति क्वचित् पाठः ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्त्तृवत्सलाः(१)साध्व्यः (२) ।
अन्यसरितामपि जलं (३) समुद्रगाः प्रापयन्त्युदधिम् ॥१८॥

---

कथं न चित्रमित्याह प्रतीति । भर्त्तृवत्सलाः पत्यनुरक्ताः साध्व्यः स्त्रियः प्रतिपक्षेणापि विपक्षेणापि सपत्न्याऽपीत्यर्थः पतिं सेवन्ते शुश्रूषन्ते । तथा च समुद्रगाः गङ्गाप्रभृतयः समुद्रगामिन्यो नद्यः अन्यसरितामपि यमुनादीनामपरनदीनामपि जलं उदधिं समुद्रं प्रापयन्ति नयन्ति । अतएव परमसाध्वीरूपतया तव स्वयमेव स्वसपत्नीविधानं नाश्चर्यं साध्वीनां हि स्वकीयक्लेशे सत्यपि पतिसुखस्यैव मुख्यत्वादिति भावः ।

अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः, तथा उदधिसमुद्रगयोः पुंस्त्रीलिङ्गत्वे न नायकनायिकाव्यवहारसमारोपात् समासोक्तिः, स्वानुकूलपदार्थेन सेवने, का कथा प्रतिपक्षेणापि पतिं सेवन्ते इत्यर्थापतनादर्थापत्तिश्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः ।

तथा पतिमिति प्रक्रम्य भर्त्तृवत्सला इत्यभिधानात्, समुद्रगा इत्युपक्रम्य पुनरुदधिमित्युक्तेः "एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत" इति साहित्यदर्पणोदाहृतवत् भग्नप्रक्रमतादोषद्वयं ; तत्र 'पतिवत्सलाः' 'समुद्रं' इति पाठेन तत्समाधाने तु "अचुर्विसं धृतविकासिविसप्रसूना" इति दर्पणोदाहृतवत् पुनः कथितपदतादोषः प्रसज्येत। सुतरामेवेत्थं समाधानं विधेयं, 'सेवन्ते तत्र वत्सलाः' साध्व्यः 'समुद्रगाः प्रापयन्ति हि तम्' इति । हिशब्दस्य एवार्थपरत्वात् नात्र पाठे निरर्थकत्वदोष इति सुधीभिर्भाव्यम् ।

साध्वीमाह शुद्धितत्त्वधृतमङ्गिरोवचनं
"आर्त्तार्त्ते मुदिता हृष्टे वियोगे मलिना कृशा ।
मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता ॥"

---

(१) भर्त्तृसेवना इति पाठान्तरम् ।

(२) तन्व्यः, नार्य्यः, इति पाठभेदौ ।

(३) रसं इति क्वचित् पाठः ।

प्रविश्य निपुणिका। जेदु भट्टा। इरावदी विण्णवेदि। जं उवआरादिक्कमेण तदा भट्टिणो अवरद्धा, तं सअं एव्व भत्तुणो अणुऊलं णाम आअरिदं (१)। संपदं पुण्णमणोरहेण भत्तुणा पसादमेत्तेण संभावइदव्वेत्ति। (ठ)

(ठ) जयतु भर्त्ता। इरावती विज्ञापयति। यदुपचारातिक्रमेण तदा भर्त्तुरपराद्धा, तत् स्वयमेव भर्त्तुरनुकूलं नाम मया आचरितम्। साम्प्रतं पूर्णमनोरथेन भर्त्ता प्रसादमात्रेण सम्भावयितव्येति।

अस्यानुरूपः श्लोको यथा शिशुपालवधे—

"महात्मानोऽनुगृह्णन्ति भजमानान् रिपूनपि।
सपत्नीः प्रापयन्त्यब्धिं सिन्धवो नगनिम्नगाः" ॥

आर्य्या जातिः ॥ १९ ॥

(ठ) प्रविश्येति। यद् यस्मात्, उपचारस्य सर्वास्वेव नायिकासु प्रसिद्धव्यवहारस्य भर्त्तुरनुनयेन प्रसन्नताप्राप्तिरूपस्येत्यर्थः अतिक्रमेण उल्लङ्घनेन तदा प्रमदवने मालविकाया सह च दर्शनकाले अपराद्धा तवानुनयं विहाय प्रस्थानेन कृतापराधास्मि, तत्तस्मात् मया स्वयमेव न पुनः कस्यचिदनुरोधेनेत्येवशब्दार्थः नाम अभ्युपगमेन मालविकायाः प्रतिपादनविषये देव्या जिज्ञासाऽनन्तरं तदङ्गीकारेणेत्यर्थः भर्त्तुः स्वामिन तव अनुकूलं मनःसन्तोषकं कर्म्म आचरितमनुष्ठितम्। सुतरां तदपराधजनितो विद्वेषस्त्वयेदानीं परिहरणीय एवेति भावः। पूर्णमनोरथेन मालविकालाभात् निष्पन्नाभिलाषेण भर्त्रा त्वया प्रसादमात्रेण केवलया मनसः प्रसन्नतया न पुनर्नववधूविवादरतिप्रदैर्बैलिसाद-शब्दार्थः सम्भावयितव्या संवर्द्धयितव्या। इतिशब्दस्य विज्ञापयतीत्यनेनान्वयः।

"नाम प्राकाश्यसम्भाव्य क्रोधोपगम कुत्सने" इत्यमरः।

(१) चं सो अत्तणो भट्टा। अणपदं भट्टिणो अणुऊवं एव्व मए आचरिदं इति पाठान्तरम्।

देवी। णिउणिए! अवस्सं से (१) सेविदं अज्जउत्तो जाणिस्सदि। (ड)

निपु। अणुगिहीदह्मि। इति निष्क्रान्ता। (ढ)

परि। देव! अमुना युक्तसम्बन्धेन चरितार्थं माधवसेनं सभाजयितुं गच्छाम: (२)। (ण)

देवी। भअवदीए ण जुत्तं अह्मे परिच्चत्तुं(३)। (त)

---

(ड) निपुणिके! अवश्यमस्या: सेवितमार्यपुत्रो ज्ञास्यति।

(ढ) अनुगृहीतास्मि।

(त) भगवत्या न युक्तमस्मान् परित्यक्तुम्।

---

(ड) देवीति। अस्या इरावत्या: सेवितमानुगत्यं परिचर्य्यां। ज्ञास्यति ज्ञास्यति तत्सेवानुरूपं फलमपि दास्यतीत्यर्थ:। इरावतीं विज्ञापयितुमिदमुक्तम्।

(ढ) निपुणेति। अनुगृहीतास्मि मत्स्वामिनीमिरावतीं प्रत्यनुग्रहेणैव मां प्रत्यपि अनुग्रहस्य करिष्यमाणत्वादिति भाव:।

(ण) परीति। अमुना अचिरप्रवृत्तेन युक्तसम्बन्धेन अर्द्धराज्ये स्थापनादुपस्थितो य: सौहार्द्दसम्बन्धस्तेन, अथवा मालविकाया: परिणयात् प्राप्तेन श्यालकभगिनीपतित्व-सम्बन्धेन। सभाजयितुं अभिनन्दनादिना आनन्दयितुं गच्छाम: गन्तुमिच्छाम:। अत्र युवयोरभिप्रायं वेदितुमिच्छामीति भाव:।

(त) देवीति। भगवत्या भवत्या:। तव तत्र गमने न ममाभिप्रायोऽस्तीति भाव:।

---

(१) दे इति पाठभेद:।

(२) देव! अमुकत्वत्सम्बन्धेन चरितार्थं माधवसेनं त्वदाज्ञया दृष्टा नयन साफल्यं कर्तुमिच्छामि इति भिन्न: पाठ:।

(३) ण जुत्तं भअवदि! अह्माणं परिच्चत्तुं इति पाठान्तरम्।

राजा। भगवति! मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनाक्षराणि पातयिष्यामः(१)। (थ)

परि। युवयोः स्नेहात् परवानयं जनः। (द)

देवी। आणवेदु अज्जउत्तो भूओवि दे किं पिअं उवहरिस्सं (२)। (ध)

राजा। मम दावदेतावदेव प्रियम् (३)। (न)

---

(ध) आज्ञापयतु आर्य्यपुत्रः, भूयोऽपि ते किं प्रियमुपहरिष्यामि।

---

(थ) राजेति। मदीयेष्वेव न पुनर्भवत्या पृथग्लिखितेष्वित्येवशब्दार्थः, लेखेषु पत्रेषु, तत्रभवतो राज्ञो माधवसेनस्य सम्बन्धे त्वामुद्दिश्य निर्द्दिश्य त्वं लेखयसीत्युल्लिख्येत्यर्थः सभाजनाक्षराणि अभिनन्दनोपयुक्तान् वर्णान् पातयिष्यामः निवेशयिष्यामः लेखयिष्याम इति तात्पर्य्यम्। सुतरां तेनैवाभिनन्दनसिद्धे स्तव महीयान् प्रयासायास्से नाङ्गीकरणीय इति भावः।

(द) परीति। अयं मल्लक्षणो जनः अहमित्यर्थः। परवान् पराधीनः॥ अतो युवयोरभिप्रायातिक्रमणासम्भवादत्रैव तिष्ठामीति भावः।

"परतन्त्रः पराधीनः परवान्नाथवानपी"त्यमरः।

(ध) देवीति। भूयोऽपि मालविकादानेनैकं कृतं पुनरपि। उपहरिष्यामि प्रतिपादयिष्यामि।

(न) राजेति। तावद्वाक्यालङ्कारे। एतावदेव एतत्परिमाणमेव ईदृशमेवेत्यर्थः प्रियमाचरणम्।

---

(१) सभाजनानि ज्ञापयिष्यामः इति पाठभेदः।

(२) अज्जउत्त। किं ते भूओ पिअं उवहरामि इति भिन्नः पाठः।

(३) क्वचिदयं पाठो नास्ति।

भरतवाक्यम् (१)। (प)

**त्वं मे प्रसादसुमुखी भव देवि ! (२) नित्य—**
**मेतावदेव मृगये प्रतिपक्षहेतोः (३)।**

---

(प) भरतेति। नटानामादौ नान्दीवदन्ते च मङ्गलाचरणस्य करणीयत्वात् प्रस्तावनानन्तरञ्च नटानां प्रवेशवाक्ययोरसम्भवात् भरतवाक्यमित्युक्तम्।

"भरता इत्यपि नटा" इत्यमरः।

तत्र धारिणीं प्रति राज्ञ उत्तरं, दुर्गां प्रति प्रार्थनारूपं भरतानां मङ्गलाचरणञ्चायमेक एव श्लोकः प्रतिपादयति त्वमिति। हे देवि! धारिणि! त्वं मे मम सम्बन्धे नित्यं सर्वदा प्रसादेन प्रसन्नतया सन्तुष्टचित्ततया शोभनं सौम्यं मुखं यस्याः सा प्रसादसुमुखी भव। प्रतिपक्षः प्रसादस्यैव विरोधी अप्रसादः विराग इति यावत् तस्य हेतोः तद्विरागजनितक्लेशनिवृत्त्यर्थमित्यर्थः, एतावदेव प्रसादसुमुखत्वमेव मृगये प्रार्थये। ननु विश्वजनीनं किञ्चित् किं न प्रार्थयसि इत्याह आशास्यमिति। अभ्यधिगमात् प्रभृति राजत्वलाभादवधि अग्निमित्रे गोप्तरि रक्षितरि सति प्रजानां जनानां आशास्यं वाञ्छनीयं सन्ततिविधानादिकं न खलु सम्पद्यते इति न, अपि तु सम्पद्यत एव। प्रजानां साधारणमाशास्यं जलाशयरथ्यानिर्म्माणादिकमहमेव सम्पादयामि, सुतरां नास्ति त्वदन्तिके तस्य प्रार्थनापेक्षेति भावः।

पक्षे, हे देवि! दुर्गे! त्वं मे नित्यं प्रसादसुमुखी भव मां प्रति सर्वदा सन्तोषेण प्रफुल्लानना भव। प्रतिपक्षहेतोः शत्रुनिवारणहेतोः, अथवा पापमेव सर्वसाधारणः प्रतिपक्षः तद्विनाशहेतोः, एतावदेव मृगये प्रार्थये। अथ कथं लौकिकमभ्युदयं न प्रार्थयसीत्याह आशास्यमिति। अभ्यधिगमात् प्रभृति राज्यलाभादवधि अग्निमित्रं यथा-

---

(१) क्वचिदेष पाठो न दृश्यते क्वचिच्च त्वमित्यादिश्लोकार्द्धात् परं दृश्यते।

(२) चण्डि! इति पाठः क्वचित्।

(३) एतावदेव हृदये प्रतिपालनीयं इति द्वितीयचरणपाठोऽपि दृश्यते।

आशास्यमभ्यधिगमात् प्रभृति (१) प्रजानां—
संपद्यते(२) न खलु गोप्तरि नाग्निमित्रे ॥ २० ॥

इति निष्क्रान्ताः सर्वे ।

## इति पञ्चमोऽङ्कः ।



इति श्रीमहाकवि कालिदासप्रणीतं मालविकाग्निमित्रं नाम
नाटकं समाप्तम् ॥ ० ॥

—:*:—

विधियागविधानादिभिर्निरवद्युपकारको यस्य तस्मिन्, यदाऽस्याभिनय आसीत् तदानीन्तनं कञ्चिदग्निहोत्रिणं धर्मशालिनं राजानं लक्ष्यीकृत्य अग्निमित्र इत्युक्तम् । "अग्निमित्रस्य कथनं तत्कालराजोपलक्षणमिति मन्तव्य"मिति काटयवेमोऽप्याहस्म । गोप्तरि रक्षितरि सति प्रजानामस्मदादीनां जनानां आशास्यं वाञ्छनीयं जलाशयरथ्यानिर्म्माणादिकं साधारणहितं न खलु सम्पद्यते इति न अपि तु सम्पद्यत एव । अस्माकमसौ परम-धार्म्मिको राजा स्वयमेव तादृशं साधारणमभ्युदयं विदधातीति तदन्तिके तत्प्रार्थनाया न तावत्यावश्यकतेति भावः ।

अत्र तृतीयचरणे प्र प्रेति व्यञ्जनानामनेकधा सकृत् साम्यात् छेकानुप्रासोऽलङ्कारः ।

"देवी (स्त्री) दुर्गा" इति शब्दकल्पद्रुमः ।

वसन्ततिलका वृत्तम् ॥ २० ॥ इत्यत्र उपसंहृतिसन्धिः ।

जानकीविक्रमं नाम नाटकं वीररौद्रवत् ।
नाटिकामुज्ज्वलरसां श्रीविराजसरोजिनीम् ॥
वियोगवैभवाख्यानं खण्डकाव्यमनन्तरम् ।
नानावर्ण्यं महाकाव्यं रुक्मिणीहरणाभिधम् ॥

(१) आशास्यमीतिविगमप्रभृति इति पाठान्तरम् । (२) सम्पत्स्यते इति पाठभेदः ।

स्मृतिचिन्तामणिं नाम संचितस्मृतिसंग्रहम्।
उत्तररामचरितटीकां सर्वार्थबोधिनीम् ॥
प्रणीय क्रमशो यत्नात् शिष्याणामाग्रहादपि।
निर्म्मिमाणो गद्यकाव्यमपूर्वं सरलाभिधम् ॥

कोटालिपाडोनशियानिवासी
नकीपुरेशस्य सभाप्रवासी।
सत्काव्यपोऽध्यापनमुख्यकर्म्मा
व्यधादिमां श्रीहरिदासशर्म्मा ॥

विशिखानल द्विप शशाङ्कमिते।
शकवत्सरे पशुपतेः प्रसादतः।
दिवसे च सौरनभसि त्रयोदशे
परिपूर्णतामियमवापदद्य मे ॥

भावालङ्कृतिशालिनीं रसवतीं रीत्यन्वितां सद्गुणां
नव्यां भव्यतमां नितान्तसरलां टीकां सदोषामपि।
आदत्तां गुणमत्तसत्तम इमां सारार्थसन्दीपनीं
निर्दोषं किमिहास्ति वस्तु, ललितश्चन्द्रोऽपि दोषाकरः ॥

इति श्रीगङ्गाधरविद्यालङ्कारभट्टाचार्य्यात्मज श्रीहरिदाससिद्धान्तवागीश
भट्टाचार्य्यविरचितायां मालविकाग्निमित्रनाटकटीकायां
सारार्थसन्दीपन्यां पञ्चमाऽङ्कविवरणं

